33

रिनपूनयोर्यानीनकस्यातिथिः कण्ठेकेनधृता स्तरणनकुतुकाद्देष्वंगनषष्ठ्कतिः धर्माधिपस्तहलायुधस्यसदृशोनास्याः प्रियः कोप्यभूद्यः कृत्वाहृद-
येतुरागतरलोनकंदिवंहृष्यति १४ कर्णारोपितहेमकुंडलमिलन्नीलाश्मरश्मिच्छटासंसर्गप्रतिपद्यकृष्णमभवद्वर्योपिकृष्णाजिनं किंचान्यत्तु-
स्वलब्धनिष्कलयतायस्याग्निमंग्न्यालये लीलाक्षीकररत्नकंकणरणत्कारैः कृतंसन्मनः १५ पात्रंदारुमयंक्वचिद्द्विजयतेहैमंक्वचिद्राननंकृत्वा
प्यक्लिद्रकूलमिंडुधवलंकृत्वापिकृष्णाजिनं भूमः क्वापिवषट्कृताहुतिकृतोधूमः परः क्वाप्यभूद्यमेः कर्मफलंचतस्ययुगपन्नागत्तियन्मंदिरे १६ नि-
स्वाध्यायैव्यपगतवषट्कारशब्दोदयेस्मिन्नृत्तिज्ञोरव्यसनिविकलावस्थिचर्मावसिष्टः कृत्वाकृत्वाविधिवदमुनाराधीयमानंत्रिसंध्यंधूमोद्गारंवित
रतिहविः प्राश्यमंदाग्निमग्निः १७ आपीयश्रुतिसंपुटेनहृदयेसंस्थापितास्सूरिभिर्विन्यस्ताः सरसत्वनिश्चलशिलाः संगुर्णास्तेशिल्पिभिः आव
द्धाकविभिर्निपृंस्वलकथावंधैः प्रवंधैरपिभ्राम्यंतिपतनप्रतिगृहंभूस्वंगणंयद्गुणाः १८ मीमांसासर्वस्वं [illegible] पंडित
सर्वस्वमसौसर्वस्वंसर्वधीरराणां १९ आसन्वाकतिसंतिवाकृतिकृतिस्मामंडलेपंडिताव्याख्यानामतिशालिनोथमुरगुडाचार्येणवेदः परंस्पष्ट
तत्तदर्थीत्यनेनविदुषाविश्वप्रसिद्धैः पदैः संध्यादिद्विजकर्ममंत्रववसोव्याख्यानमेतत्कृतं २० आस्वेकाक्वतिसन्निभोपिनपुमांस्तस्मात्परःसा
हसीयोवेदार्थविवेचनमयंकुरुतेसज्ज्ञरसज्ञाननं किंत्वस्मिन्मुरगुडेनवर्त्मरचितंप्रागेवचेद्विद्यते व्याख्यानंकिंपदैकवेदवचसांतेनेदमारभ्यते २१
अर्थंयेनविचार्यसर्वविदितेयेषामृषिच्छेदसी येनानंतिनदैवतापरिद्योयैर्नोपयोगेकृतः विज्ञायापिपदक्रमंफलवहिर्भावेनतैः प्रसहंतादृग्दुर्व
हवेदभारवहनक्लेशाः परंप्राप्यते २२ अर्थाववोधेनविनानशब्दप्रद्धासमुन्मीलतिवैदिकेपि अकारिकर्मोचितवेदभागव्याख्यांविमृश्येतिहला
युधेन २३ भ्रातापद्धतिमग्रजः पशुपतिः श्राद्धादिकेसेव्यधाद्दीशानः कृतवान्द्विजाह्निकविधौप्यष्टोपरः पद्धतिं तेनास्मिन्ननुनाफलस्तुतिपरा

प्रस्तुत्यनानास्मृतीः संध्यादिद्विजकर्ममंत्रवचसांव्याख्यापराख्या॥सेतो २४ मीमांसाव्यवसायिभिः स्मृतिपरामर्षप्रमर्षस्थितैर्गायत्रीद्विजपुंग
वैः कतिकियत्कृतानवाव्याकृता प्रामाण्यस्यकृतेविलिख्यकथनंननामुनीनांमृदुव्याख्यानंचनतादृशंभृशमिहप्राज्ञान्प्रणीतांजलिः २५ दृ
त्वार्थरूपंप्रथममदनमपरैर्भुवि सर्वस्वंब्राह्मणानांचशब्दरूपमिमंददौ २६ सूक्ष्मावबोधकमदृष्टविनाशकारिनिस्सारकंकिमपिभूषितकंठदे
शं एतन्निरायुधमकारेहलायुधेननेत्रद्वयीविसदृशनयनंद्विजानां २७ इहप्रथममुद्दिष्टंग्रंथारंभप्रयोजनं वेदस्याध्ययनंकार्यमतःपरमुदाहृ
तं २८ वेदार्थविज्ञानफलंतदनंतरमीरितं ऋष्यादीनांतथाज्ञानंदंतधावनकर्मच प्रातःस्नानंतथाप्रातःसंध्याचसमुदाहृता २९ माहात्म्यंस
प्रपंचंचप्राणायामस्यदर्शितं प्राणायामस्यगायत्र्याअपिव्याख्याततःपरम ३० अकारिजप्यंगायत्र्याअपिव्याख्याततःपरं दर्शितंस्नानमंत्राणां
व्याख्यानंतदनंतरं अघमर्षणमाहात्म्यव्याख्यादिकमुदाहृतं ३१ ब्रह्मयज्ञक्रियामंत्रामंत्रास्तर्पणकर्मणः सूर्यार्घ्यदानमंत्राश्चनिदनंतरंभा
षिताः ३२ आदित्यादिग्रहाणांचपूजामंत्राःप्रदर्शिताः कृतंपुरुषसूक्तस्यव्याख्यानंतदनंतरं ३३ व्याख्यात्र्यंबकमंत्रस्यचंडीमंत्रस्यचेरिता निर
पेवैश्वदेवस्यमंत्राश्चप्रतिपादिताः ३४ श्राद्धस्यपार्वणादेश्चमंत्रव्याख्यानिवेदिता भोजनस्योदितामंत्राःसायंसंध्याचकीर्तिता ३५ उक्तामंत्राश्चशयनगर्भाधानविधेरपि मंत्राःपुंसवनस्योक्ताःसीमंतोन्नयनचस्यच॥३६॥सोष्यंतीकर्मणांमंत्राजातकर्मविधेरपि व्याख्याताःनामक
रणमंत्राश्चतदनंतरं ३७ मंत्रानिष्क्रमणस्योक्तास्तथान्नप्राशनस्य च चूडाकरणमंत्राश्चततःपरमुदाहृताः ३८ उक्तास्तथोपनयनमंत्राश्चतद
नंतरं समावर्तनमंत्राश्चमंत्राःपरिणयस्यच ३९ आधानस्यावसथ्यादेर्मंत्राःप्रोक्तास्ततःपरं व्याख्यातामणिकाधानमंत्राश्चतदनंतरं ४०
उक्तामंत्रास्तथापिंडपितृयज्ञविधेरपि पश्वादिकर्मणोमंत्रास्ततः परमुदाहृताः ४१ निबंधेनसमेतांयस्तांकयत्नस्यपद्धतिं ज्येष्ठःपशुपतिश्चक्रे

तेनास्माभिर्मीमांसा कृता ४२ अंत्येष्टिकर्मणो मंत्रा व्याख्याताः ख्यातकीर्तिना दंतधावनमारभ्य यावदंत्येष्टिमीरिता ४३ मंत्राणां तावदेवास्मिन् व्याख्या-
नमुपदर्शितं ॥ अधीत्य स्नायादित्यधिकृत्य स्मर्यते च तावत् ४४ वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ४५
अनेन मनुवचनेन वेदत्रयं वेदद्वयं एको वा वेदोऽध्येतव्यत्वेन प्रतिपादितः ४६ तत्रापि पारस्करेण मीमांसा विधिर्विधेयस्तर्क एव वेदः षडंगमेकं चेति विशे-
ष उक्तः एतच्चाध्ययनं गुरुकुले स्थित्वा ब्रह्मचारिणा कर्तव्यमित्याह मनुः तयोर्विशेषैर्विविधैर्व्रतैश्च विधिनोदितैः वेदः कृत्स्नोऽधिगंतव्यः सरहस्यो द्वि-
जन्मनेति इत्थं सरहस्यं वेद इत्यनेन कृत्स्न एव वेदो ब्राह्मणेनार्थतो ग्रंथतश्चाध्येतव्य इति स्थिते वेदाध्ययनवेदार्थज्ञानमंतरेण गार्हस्थ्याधिकार एव
न स्यात् तदधिकारे च सर्वकर्मानधिकार एव यतः योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमं स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः इति वदता मनु-
ना वेदाध्ययनवेदार्थज्ञानपराङ्मुखब्राह्मणस्य शूद्रत्वमेव प्रतिपादितं तत्र च कलौ आयुष्प्रज्ञोत्साहश्रद्धादीनामल्पत्वात् कुलजात्यन्धा [illegible]
ध्ययनमात्रमेव क्रियते राढीयवारेंद्रैस्तु अध्ययनैर्विना क्रियते कदेश वेदार्थस्य कर्ममीमांसाद्वारेण यज्ञ इति कर्तव्यता विचारः क्रियते न चैतेनापि मन्त्रार्थ-
कर्मवेदार्थज्ञानं मन्त्रानुज्ञानस्यैव प्रयोजनं यतस्तत्परिज्ञानमेव शुभफलं यदज्ञाने च दोषः श्रूयते। तथा च योगियाज्ञवल्क्यः यस्तु जानाति तत्त्वेन आर्ष-
छंदश्च दैवतं विनियोगं ब्राह्मणं च वेदार्थज्ञानकर्म च एकैकस्या ऋचः सोऽभिवंद्योऽतिथिवद्भवेत् देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः पूर्वोक्तेन
प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः। अधिकारो भवेत्तस्य रहस्यादिषु कर्मसु मंत्रे मंत्रे प्रयत्नेन ज्ञातव्यं ब्राह्मणेन तु। विज्ञाने परिपूर्णस्तु स्वाध्यायफलम-
श्नुते छंदांस्ययातयामानि भवंति सफलान्यपि तद्व्यतिरेके योगियाज्ञवल्क्यः अविदित्वा तु यः कुर्याद्याजनाध्यापनं जपं होमं मंतर्जलादीनि तेभ्योऽल्प-
फलं भवेत् आपद्यते स्थाणुगर्तं स्वयं वापि प्रमीयते तथा अंतर्जलादिके जप्ये इतरेषामजानतः नाधिकारोऽस्ति मंत्राणामेवं स्मृतिनिदर्शनमिति

ब्रा·स अतोवेदाध्ययनानंतरंवेदमंत्रार्थज्ञानेहितासर्पराते स्तुराढीपवारेन्द्रैकैरर्थविचारएवकेवलः क्रियते एवंचोभयमपियंथार्थतोवेदज्ञानंनास्त्येवतद्
२ रंवैदैकदेशस्यापियथाविध्यध्ययनंकृत्वाअर्थविचारः क्रियतेइत्युचितंभवति तथाचयमः नशूद्रोवृषलोनामवेदोहिवृषउच्यते यस्यविप्रस्यतेनाल
सवैवृषलउच्यते तस्माद्वृषलभीतेनब्राह्मणेनप्रयत्नतः एकदेशोप्यध्येतव्योयदिसर्वोनशक्यते तथाचव्यासः अधीत्ययत्किंचिदपिवेदार्थोभिगमेरतः
। स्वर्गलोकमवाप्नोतिधर्मानुष्ठानविद्विजः ॥ तथासमुचितस्तोकमपिध्रुवाधीतंविशिष्यते चतुर्णामपिवेदानांकेवलाध्ययनाद्विनाम नत्वेकदेश
स्याध्ययनेनगार्हस्थ्याश्रमाधिकारोभवत्येव इत्थमेकदेशस्याध्ययनेकर्तव्येसंशयः सोच्छया किंतृतीयोभागश्चतुर्थोवाध्येतव्यः उतअनुष्ठानोचितभा
गोवा तत्रचयदिवाप्याठक्रमानुरोधेनप्रथमभागएकोधीयतेतदायस्मिन्भागेसंध्यास्नानाद्याह्निकगर्भाधानादिक्रियाकाण्डोपयुक्तमंत्रभागस्त्वाध्येतुं
युज्यते अस्यैवाध्ययनेनवेदस्यैकदेशाध्ययनंपर्यवस्यतियत्तुकेचित् गायत्रीमात्रसारोपिवरं विप्रः सुयंत्रितः नायंत्रितस्त्रिवेदोपिसर्वाशीसर्वविक्र-
यी इतिमन्वादिवचनदर्शनात् एकदेशशब्देनगायत्रीमात्रमेवेच्छन्तिनदयुक्तं स्नानाद्यनुष्ठानमंत्रानभिज्ञस्यस्नानादिष्वेवायोग्यत्वात् तेषांगायत्रीजपा-
धिकारित्वेवनभवतीतिसुदूरंनिरस्तंगायत्रीमात्रसारत्वं गायत्रीमात्रसारइतिवचनेस्यतुनिंदितप्रतिग्रहाद्यसत्क्रियानिवृत्तस्यस्नानसंध्याद्यनुष्ठानपा-
लिनोविज्ञावार्थगायत्रीजपनिरतस्यनिंदितप्रतिग्रहाद्यसत्क्रियासुक्तत्रिवेदविद्ब्राह्मणाच्छ्रेष्ठत्वप्रतिपादनेतात्पर्यनतुसकलवेदानुष्ठानरहितस्यगा
यत्रीमात्रपरत्वेतात्पर्यमिति तदेवंव्यवस्थितेशास्त्रार्थेकृत्स्नवेदाध्ययनासामर्थ्यानांराढीयवारेन्द्रद्विजातीनांकाण्वशाखिवाजसनेयिनांकर्मानुष्ठाना
र्थमातर्दंतधावनादिशयनांताह्निकगर्भाधानादिविवाहसंस्कारान्याधानांतलेष्टिपर्यंतगार्ह्यकर्मोपयुक्तमंत्रव्याख्याप्रस्तोतव्या तत्रभारतवर्षेभू- २
मावर्त्यंतदुर्लभमानुष्यलाभप्रशंसायांसप्तद्वीपानभिधायजंबूद्वीपाधिकारेविष्णुपुराणम्। अत्रापिभारतंश्रेष्ठंजंबूद्वीपेमहामुने यतोहिकर्मभूरेषा

तवोन्याभोगभूमयः। अत्र जन्मसहस्राणां सहस्रैर्द्विजसत्तम कदाचिल्लभते जंतुर्मानुष्यं पुण्यसंचयात् गायंति देवाः किल गीतकानि धन्यास्तु ये भारतभू-
मिभागे। स्वर्गापवर्गस्य च हेतुभूते भवंति भूयः पुरुषाः सुरत्वात् कर्माण्यसंकल्पिततत्फलानि संन्यस्य विष्णौ परमात्मभूते अवाप्य तां कर्ममहीमनं-
तेऽस्मिन् लयं ये त्वमलाः प्रयांति ॥ जानीम नैतत्क्व वयं विलीनाः स्वर्गप्रदे कर्मणि देहबंधम्। प्राप्स्याम धन्याः खलु ते मनुष्या ये भारते नेंद्रियविप्रहीणाः
महाभारते सुदुर्लभतरं प्राप्य मानुष्यमपि यो नरः। धर्मावमंता कामात्मा भवेत्स खलु वंचितः। इहैव नरकव्याधिचिकित्सां न करोति यः॥ गत्वा निरौष-
धस्थानं सरोगी किं करिष्यति। अतो विप्रास्य प्रशंसायां महाभारते शुकानुशासने। संयतन्मोहजालानि कदाचिच्चेह मानुषे॥ ब्राह्मण्यं लभते जं-
तुस्तत्सु यत्नपरिपालय। ब्राह्मणस्य च देहोयं न कामार्थाय जायते॥ इह क्लेशाय तपसे प्रेत्य त्वनुपमं सुखम्। ब्राह्मण्यं बहुभिरवाप्यते तपोभिस्तल्लब्ध्वा निरत-
प्रेण पालितव्यम्। स्वाध्याये तपसि यमे च नित्ययुक्तः क्षेमार्थी कुशलपरः सदा यतस्व। कात्यायनः। वेदे तथात्मज्ञाने च ब्राह्मणो यत्नवान् भवेत्॥ एवं ध-
र्मस्य सर्वस्य चतुर्वर्गस्य साधकः। अथ वेदाध्ययनप्रशंसा। तत्र मनुः। वेदमेव सदाभ्यस्येत्तपस्तप्स्यन्द्विजोत्तमः। वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते। या-
ज्ञवल्क्यः। यज्ञानां तपसां चैव शुभानां चैव कर्मणाम्। वेद एव द्विजातीनां निःश्रेयसकरः परः। योगियाज्ञवल्क्यः॥ वेद एव सदाभ्यस्यो वेदश्चक्षुः सनातनः
॥ भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिध्यति॥ बृहस्पतिः॥ एवं दंडादिकैर्युक्तं संस्कृत्य तनयं पिता॥ वेदमध्यापयेद्यत्नाच्छास्त्रं मन्वादिकं तथा। व्यासः॥ ध-
र्मे शुद्धिमभीप्सद्भिर्वेदादन्यद्दिष्यते। धर्मस्य कारणं शुद्धं मिश्रमन्यत्प्रकीर्तितं। अतः स परमो धर्मो यो वेदादवगम्यते। अपरः स तु विज्ञेयो यः पुराणादि-
षु स्थितः। याज्ञवल्क्यः। वेदाभ्यासरतं शांतं महायज्ञक्रियापरं॥ न स्पृशंतीह पापानि महापातकजान्यपि। मनुः॥ आ हैव स नखाग्रेभ्यः परमं तप्यते तपः। यो-
द्विजो भक्तितोऽधीते स्वाध्यायं शक्तितोन्वहम्। यमः। तपस्तप्यति योरण्ये मुनिर्मूलफलाशनः॥ ऋचमेकां च यो धीते तेन ज्ञतेन समं भवेत्। दक्षः। वेदस्वीकरणं पू

र्वंविचारोऽभ्यसनंजपः तद्दानंचैवशिष्येभ्योवेदाभ्यासोहिपंचधा ॥ यमः ॥ नशूद्रोवृषलोनामेत्यादि। तस्माद्वृषलभीतेनब्राह्मणेनप्रयत्नतः। एकदेशोऽप्यधे-
तव्योयदिसर्वोनशक्यते। नचैकदेशपदेनयावदनुष्ठानोपयुक्तवेदभागोपेक्षितः। मनुः। यथाकाष्ठमयोहस्तीयथाचर्ममयोमृगः। तथाविप्रोनधीयानस्त्र-
यस्तेनामबिभ्रति। तथा। यथाखंढोफलःस्त्रीषुयथागौर्गविचाफला। यथाचाज्ञेफलंदानंतथाविप्रोऽनृचोऽफलः। तथा। योनधीत्यद्विजोवेदमन्यत्रकुरुतेश्र-
मं॥ सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्वयः॥ शंखलिखितौ॥ नशास्त्रंसवनंकुर्यान्नवेदमनधीत्यान्यविद्यामधीयीतअन्यत्रवेदांगस्मृतिभ्यः। व्यासः। श्रु-
तिस्मृतीद्वविप्राणांनयनेद्वेविनिर्मिते। काणःस्यादेकयाहीनोद्वाभ्यामंधःप्रकीर्तितः॥ मनुः॥ तपोविशेषैर्विविधैर्व्रतैश्चविधिनोदितैः॥ वेदःकृत्स्नोऽधिगंत-
व्यःसरहस्योद्विजन्मना॥ तथा। वेदानधीत्यवेदौवावेदंवापियथाक्रमम् अविप्लुतब्रह्मचर्योगृहस्थाश्रममाविशेत्। योगियाज्ञवल्क्यः। वेदोऽधीतोनयेद्द्वि-
भ्रंशितोनरकप्रदः। न्यायेनेष्टंनयेत्स्वर्गंपुनरावृत्तिलक्षणम्। व्यासः। ऋक्पादमप्यधीयीतमार्गेणोक्तेनधर्मवित्। नत्वेवंचतुरोवेदानन्यायेनकदाचन। म-
नुः। ब्रह्मयस्त्वननुज्ञातमधीयानादवाप्नुयात्॥ सब्रह्मस्तेनसंयुक्तोनरकंप्रतिपद्यते। व्यासः। ऋग्यजुःसामवेदंचन्यायतोऽधिगतंहितैः। पात्रत्वमापादयति
नाक्रमेणबहूनपि। योगियाज्ञवल्क्यः। नासंयममधीतानितारयंतिकदाचन॥ ऋगेकासंयमस्थस्यअधीतातारयेदपि। आमपात्रेयथान्यस्तमापोदधिघृतं
पयः नश्यतिपात्रदौर्बल्यात्तेरसास्तस्यभाजने॥ इतिवेदाध्ययनप्रशंसा॥ अथवेदार्थज्ञानप्रशंसा॥ तत्रव्याससंहितायांकूर्मपुराणे। नवेदपाठमात्रेणसंतो-
षकारयेद्गुरुः॥ पाठमात्रावसानस्तुपंकेगौरिवसीदति। योधीत्यविधिवद्विप्रोवेदार्थंनविचारयेत्॥ ससान्वयःशूद्रसमःपात्रतांनप्रपद्यते। व्यासः। वेदस्या-
ध्ययनंसर्वंधर्मशास्त्रस्यवापियत्॥ अजानतार्थंतत्सर्वंतुषाणांकंडनंयथा। तथा। यथापशुर्भारवाहीनतस्यलभतेफलम्॥ द्विजस्तथार्थानभिज्ञोनवेदफलमश्नु- ४
ते। व्यासः॥ पाठमात्रवतांनित्यंद्विजातीनांस्वार्थवर्जितान्। पशूनिवचतान्प्राज्ञोवाङ्मात्रेणापिनार्चयेत्॥ स्फूर्तिहीनमधीतंयन्नेहनामुत्रतद्भवेत्। स्फूर्तिस्तु

केवलमपिसमुद्धारायकल्पयेत्॥ वृहद्यमः।स्थाणुरयंभारवाहः किलाधीत्यवेदंयन्नविवेदयोर्थंयोर्थवित्सकलंनभद्रमश्नुतेनाकमेतिकेवलंविधूतपा
प्मा॥ व्यासः॥ योधीतेनार्थंनत्वज्ञस्तस्यतद्धारणंवृथा।भारवाहीचभृतकःकेवलंक्लेशभाग्भवेत्।तस्मादर्थपरिज्ञानेयत्नःकार्योविजानता।व्यासः॥
ज्ञानकर्मचसंयुक्तंयुक्तार्थंकथितंमया।अधीतंस्मृतिसंयुक्तंतथाश्रेष्ठंनकेवलम्।व्यासः।अधीत्यपंक्तिंविदपिवेदार्थाभिगमेरतः स्वर्गलोकमवाप्नोति
धर्मानुष्ठानविद्द्विजः।मनुः।वेदशास्त्रार्थतत्वज्ञोयत्रतत्राश्रमेवसेत्।इहैवलोकेसंतिष्ठन्ब्रह्मलोकायकल्पते।व्यासः।समुचितंस्तोकमपिश्रुतार्थी-
तंविशिष्यते।चतुर्णामपिवेदानांकेवलाध्ययनाद्द्विजाः।व्यासः।अनूचानाद्ग्रंथिनःश्रेष्ठाग्रंथिभ्योधारिणोवराः।धारिभ्यश्चार्थतत्वज्ञास्तेभ्योप्यध्यात्मचिं
तकाः॥ इतिवेदार्थज्ञानप्रशंसा॥ अथऋषिदेवताछंदोब्राह्मणविनियोगज्ञानप्रशंसा॥तत्रयोगियाज्ञवल्क्यः।यस्त्वज्ञात्वातितल्लेपआर्षछंदश्चदैवत-
म्।विनियोगंब्राह्मणंचवेदार्थज्ञानकर्मच।एकैकस्याऋचःसोभिवंद्योहतिथिवद्भवेत्॥ देवतायाश्चसायुज्यंगच्छत्यत्रनसंशयः।पूर्वोक्तेनप्रकारेणऋ
ष्यादीन्वेत्तियोद्विजः।अधिकारोभवेत्तस्यरहस्यादिषुकर्मसु।मंत्रेमंत्रेप्रयत्नेनज्ञातव्यंब्राह्मणेनतु।विज्ञानपरिपूर्णस्तुस्वाध्यायफलमश्नुते॥छंदांस्य-
यातयामानिभवंतिफलदान्यपि।श्रेयश्चलभतेसोत्रधर्ममायुश्चविंदति।दिव्यंवर्षसहस्रंतुस्वस्थानेऋषिभिःसह।तिष्ठतेतत्तैसार्द्धंनतुल्यश्चैवजाय
ते।योगियाज्ञवल्क्यः॥ आर्षंछंदश्चदैवत्यंविनियोगस्तथैवच।वेदितव्यंप्रयत्नेनब्राह्मणेनविपश्चिता।अविदित्वातुयःकुर्याद्याजनाध्यापनंजपं।होममं
तर्जलादीनितेभ्योऽल्पफलंभवेत्।आपद्यतेस्थाणुगर्तेसपद्यापिप्रमीयते।यातयामानिछंदांसिप्रभवंत्यफलानिच।अंतर्जलादिकेजप्येइतरेषामजान
ताम् नाधिकारोस्तिमंत्राणामेवंश्रुतिनिदर्शनम्।अल्पमात्रंफलंतस्यहोमादंतर्जलाज्जपात्।स्वाध्यायाध्यापनाच्चैवभवत्तेनात्रसंशयः।व्यासः।अ-
विदित्वाऋषिंछंदोदैवतंयोगमेवच।योध्यापयेज्जपेद्वापिपापीयान्जायतेतुसः।छंदोमन्त्रासंसे।योहवाअविदितार्षछंदोदैवतविनियोगेनब्राह्मणे

ब्रा॰स॰ नयाजयतिअध्यापयतिस्थाणुंवर्च्छतिगर्त्तंवापद्यतेप्रमीयतेपापीयान्भवतियातयामानिच्छंदांसिभवंति। अथयोमंत्रेमंत्रेवेदंसर्वमाप्नोतिअयातया
५ मान्यस्यच्छंदांसिभवंति। तस्मान्मंत्रेमंत्रेविद्यादिति। योगियाज्ञवल्क्यः। येनयदृषिणादृष्टंसिद्धिःप्राप्ताचयेनवैमंत्रेणतस्यतस्योक्तमृषिंभावस्तदार्षिकः
।तथाच्छादनाच्छंदउद्दिष्टंवाससीवाथवाकृतेः॥ आत्मातुच्छादितोदेवैर्मृत्योभीतैस्तुतैःपुरा। आदित्यैर्वसुभीरुद्रैस्तेनच्छंदइतिस्मृतम्। योगियाज्ञव
ल्क्यः। यस्ययस्यतुमंत्रस्यउद्दिष्टायाचदेवता॥ तदाकारंभवेत्तस्यदैवतंदेवतोच्यते। पुराकल्पेसमुत्पन्नोमंत्राःकर्मार्थमेवच॥ अनेनेदंतुकर्तव्यंविनियोगः
सउच्यते। योगियाज्ञवल्क्यः। निरुक्तंयत्तुमंत्रस्यसमुत्पत्तिप्रयोजनम्। प्रतिष्ठानंस्तुतिश्चैवब्राह्मणंश्चाभिधीयते। योगियाज्ञवल्क्यः। एवंपंचविधं। योगेज-
प्यकालेत्वनुस्मरेत्। होमेचांतर्जलेयोगेस्वाध्यायेयाजनेतथा। तथायजुर्वेदभाष्यस्मृतिः। स्वरोवर्णोक्षरंमात्रातत्प्रयोगोर्थएवच मंत्रजिज्ञासमानेनवेदि
तव्यंपदेपदेइतिब्राह्मणसर्वस्वे। वेदाध्ययनवेदार्थज्ञानप्रशंसा॥ अथदंतधावनंतत्रनारदः॥ उत्थायनेत्रेप्रक्षाल्यशुचिर्भूत्वासमाहितः। परिजप्यचमंत्रे
णभक्षयेद्दंतधावनम्। वृद्धशातातपः। मुखेपर्युषितेनित्यंभवत्यप्रयतोनरः। तस्मात्सर्वप्रयत्नेनभक्षयेद्दंतधावनम्। नरसिंहपुराणे॥ मुखेपर्युषितेनि
त्यंभवत्यप्रयतोनरः। तस्माच्छुष्कमथार्द्रंवाभक्षयेद्दंतधावनम्। भगवंतमधिकृत्यवाराहपुराणे। अकृत्वादंतकाष्ठंतुयोहिमामुपसर्पति। सर्वकालकृ
तंकर्मतेनचैकेननश्यति॥ विष्णुः। प्रक्षाल्यभुक्त्वातज्जह्याच्छुचौदेशेप्रयत्नतः॥ व्यासः॥ प्रक्षाल्यचशुचौदेशेदंतधावनमुत्सृजेत्॥ प्रतितेभिर्मुखेस
म्यग्भोज्यमामेत्यभीप्सितम्॥ वाराहपुराणे॥ अमावास्यांतुयोमूढोदंतकाष्ठंतुभक्षयेत्। सोमस्तुहिंसितस्तेनहिंसिताचवसुंधरा। नरसिंहपुराणे। प्रति
पद्दर्शषष्ठीषुनवम्यांचैवसत्तमाः॥ दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलम्। अलाभेदंतकाष्ठानांनिषिद्धायांतथातिथौ॥ अपांद्वादशगंडूषैर्विदध्या ५
द्दंतधावनम्। पारस्करः॥ औदुंबरेणदंतान्धावयेत्॥ तत्रमंत्रोयथा। अन्नाद्यायव्यूहध्वंसोमोराजायमागमत्। समेमुखंप्रमार्क्ष्यतेयशसाचभगेनच। अ

स्यार्थः हे वनस्पते व्यूहध्वं व्यूह स्वे सवगमकुरु वनस्पतो नाराजा सोमाय वनस्पतिं त्वां आगमत्॥ आगमत् भवानसत्वं चंद्रसहितो वनस्पतिः। मे मुखं च मा स्वी
ते शोधयंतु केन केन यशसा च भगेन च किमर्थम् अन्नाद्याय अन्नं च आद्यं च तदर्थं नानाभक्ष्यभोगार्थमित्यर्थः। वनस्पतिशब्दो व्याध्याहरणीयः तेन यत्र वन-
स्पतिं चंद्र आगतः स चन्द्रसहितो वनस्पतिः अन्नाद्यर्थं नानाभक्ष्यभोगार्थं च मम मुखं यशः सौभाग्याभ्यां शोधयिष्यती सन्न वनस्पते सावधानो भव स-
यंच वा कार्यः। व्यूहध्वमिति। ऊहवितर्के इत्यस्य लोट्यत्ययो बहुलं भवतीति मध्यमपुरुषस्यैकवचने बहुवचनम्। प्रमार्ष्टन इति मृजूशुद्धौ इत्यस्य लृङुत्त
स्य रूपं इति ब्राह्मणसर्वस्वे। इंतथावनहलायुधे गौड महीमहेंद्र निसृष्टि धर्मह्रदयकांड कीर्तिः। प्राभातिकस्नानविधानमंत्रव्याख्यानमेवं हि तृपंरभूव। तत्र
प्रातःस्नानम्। तत्र दक्षः। प्रातरुत्थाय यो विप्रः प्रातःस्नायी भवेत्सदा। सप्तजन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति। तथा उषस्युषसि यत्स्नानं संध्यायामुदिते रवौ
प्राजापत्येन तत्तुल्यं महापातकनाशनम्। उषस्यरुणोदये। संध्यायां च प्रभाते प्रागुदयात् उदिते उदयादूर्ध्वं मुहूर्ते। एतच्च पूर्वपूर्वासंभवे द्रष्टव्यम्। विष्णुः। प्रातः
स्नाप्य कुरु करग्रस्तां प्राचीमालोक्य स्नायात्। विष्णुः। अलक्ष्मीं कालकर्णीं च दुःस्वप्नं दुर्विचिंतितम्। अत्यान्नेरणा मिषिक्तस्य नश्यन इति। धारणा। अत्र
कालकर्णी दुर्गति विशेषः। दक्षः। स्रवंति हि प्रसुप्तस्य इंद्रियाणि ज्वरंति च। अंगानि समतां यांति उत्तमान्यधमानि च। अस्नात्वा नाचरेत्कर्म जपहोमादि
किंचन। लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान्। अत्यंतमलिनः कायो नवच्छिद्रसमन्वितः। स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम्। प्रातःस्नानं
प्रशंसंति दृष्टादृष्टकरं हितत्॥ सर्वकर्मविशुद्धात्मा प्रातःस्नायी जपादिकम्। योगियाज्ञवल्क्यः। उभे संध्ये च स्नातव्यं ब्राह्मणैश्च गृहाश्रमैः। निस्रवापिहि
संध्यासु स्नातव्यं तु तपस्विना। उभे संध्ये इति। प्रातर्मध्याह्ने च तपस्विनेति। यतिना वानप्रस्थेन वा। छंदोगपरिशिष्टे कात्यायनः। अल्पत्वाद्धोमकालस्य बहु
त्वात्स्नानकर्मणः। प्रातर्न तनयात् स्नानं होमलोपो विगर्हितः। न तनुयादिति विस्तारविधिना न कुर्यादित्यर्थः। अनुदयहोमिनां साग्निना होमकालातिक्रमभ-

ब्रा·स· या संक्षिप्तस्नाने क्रियमाणे कीदृशं कृत्वा करणीयमित्याकांक्षायां योगियाज्ञवल्क्यः। योसौ विस्तरतः प्रोक्तः स्नानस्य विधिरुत्तमः। असामर्थ्यान्न कुर्याच्चेत्तत्रा
६ यं विधिरुच्यते। स्नानमंतर्जले चैव मार्जनाचमने तथा। जलाभिमंत्रणं चैव तीर्थस्य परिकल्पनम्। अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः॥ स्नानाचरणमित्येतत्स
मुद्दिष्टं महात्मभिः। अन्यांश्च वारुणान्मंत्रान्कामतः संप्रयोजयेत्। यथाकालं यथायोग्यं देशं ज्ञात्वा विचक्षणः। अथवा व्यासोक्तसंक्षिप्तप्रातःसंध्यास्नानमा
चरणीयम्। तथाच व्यासः। अंतर्जले त्रिर्जपेत्त्रिरघमर्षणम्। तथाचापरसंक्षिप्तप्रातस्नाने दक्षः। संध्यास्नानमृगं तेन मध्यान्हे च ततः परम्। संध्यामु
पासितुं प्रातःस्नानमगं तेन द्रुपदाघमर्षणादिकान्तेरैवतमंत्रमात्रेण संक्षिप्य करणीयम्। मध्यान्हे च ततः परमिति मध्यान्हे च स्नानं यथोक्तविस्तरविधिने
व कर्तव्यमिति प्रतिभाति। अथवा संक्षिप्तेन पैठीनसिविधिना स्नातव्यम्। तथाच पैठीनसिः। हिरण्यवर्णसूक्तेन स्नात्वा शौचं कृत्वा अपां मध्ये त्रीन्प्राणाया
मान्कुर्यात् यदा निरपेक्षः संध्यातिक्रमे त्वरयान्वितस्तदानेन निरग्निना यथाविधानमेव स्नानं कृत्वा संध्योपासनं करणीयम्। यथाहुः रोगपरिशिष्टे कात्यायनः
यथाह नित्यथा प्रातर्नित्यं स्नायादनातुरः। दंतान्प्रक्षाल्य नद्यां दीर्गेहे च तद्मंत्रवत्। गेहे चेत्तदमंत्रवदिति वर्षासु पानीयपतनभये हेमंतशिशिरभये असं
तवातानपाहीयथा गृहाभ्यंतरे वश्यकर्तव्यतया प्रातःस्नानं करोति वदानेन देहप्रक्षालनरूपममंत्रकमेव स्नानं करणीयमित्यर्थः॥ जाबालिः॥ अशिर
स्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणां। आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः। कर्मिणामिति जपहोमादिकर्मिणामित्यर्थः। योगियाज्ञवल्क्यः। काल
दोषाद्सामर्थ्यान्न शक्नोति यदा यसौ। तदा ज्ञात्वा ऋषिभ्यस्तु मंत्रैर्दृष्टं तु मार्जयेत्। कालदोषादिति। अतिपीडाहेतोः शैत्यादिरित्यर्थः। असामर्थ्यादि
ति। स्नानसंवर्द्दनीयपीडायोग्यादित्यर्थः॥ ज्ञात्वा ऋषिभ्यस्तु मंत्रैरिति॥ ॐ शन्न आपस्तु द्रुपदा आपो हि ष्ठा घमर्षणं। एतैश्चतुर्भिर्मंत्रैस्तु मार्जनं समुदाहृ ६
तं मार्जनमिति। मंत्रस्नानमित्यर्थः। तथा अपायेस्समुत्पन्ने स्नानमेव तु कारयेत्॥ पूर्वोदितैस्तथा मंत्रैर्यथा मार्जनं स्मृतं। अपायस इति। स्नानापन्नेय

...स्य...पापेभ्यो विमुच्यत इत्यर्थः। स्नानमेव तु कारयेदिति। अशक्तमापस्नानं कारयेदित्यर्थः॥ अथ काम्यप्रातःस्नानं॥ तत्र विष्णुः। यदृच्छा...गान्चक्र सूर्येंद्रोपमान्। प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ। देवान् पितॄन् समभ्यर्च्य सर्वपापैः प्रमुच्यते। विष्णुः। कार्त्तिकं सकलं मासं प्रातःस्नायी जितेंद्रियः। जपन् हविष्यभुग्दान्तः सर्वपापैः प्रमुच्यते। एतच्च काम्यप्रातःस्नानं संध्योपासनं च कृत्वा प्रातर्होमं च कृत्वा स्वकल्पोक्तविधिविस्तरेणैव मध्यान्हस्नानवत्कर्तव्यम्। यत एतन्मांद्यादिविहितस्नानं किंचित् दुर्दिने सूर्ये क्रियत इति मदाचारः अथ प्रातःस्नानमंत्रव्याख्या। तत्र योगियाज्ञवल्क्कीये संक्षिप्तप्रातःस्नाने मृत्तीर्थंगशौचादिरूपं मार्जनं स्नानमाचार्य तीर्थावाहनं कुर्यात्। तथा स्नानसूत्रे हारीतः इमं मे इति तीर्थावगाहनं तत्र मंत्रो यथा। ॐ इमं मे गंगे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया। अस्यार्थः हे गंगे हे यमुने हे सरस्वति हे शतद्रु हे मरुद्वृधे हे आर्जीकीये मया मम आशिषः आशंसाः शृणु हि मदीया शंसाः शृणुतेत्यर्थः। कासौ आशंसा इत्याकांक्षायां मे मदर्थं मदीयस्नाननिमित्तं परुष्ण्या असिक्न्या वितस्तया सह इमं स्तोमं सचत समवेता भवत अस्मिन् पुरोवर्तिस्नानजलस्तोमे समवेता सन्निहिता भवतेत्यर्थः। इतीमं मे मंत्रव्याख्या। ततो मार्जनम्। तत्र छंदोगपरिशिष्टम्। रसार्षं वा दिशा-त्यानं परिक्षिप्य समंततः। शिरसो मार्जनं कुर्यात्कुशैः सोदकबिंदुभिः॥ तत्र मार्जनप्रशंसायां योगियाज्ञवल्क्यः॥ आपोहिष्ठेति मार्जयेत्। अर्द्धर्चया। क्षिपेदूर्द्ध्वमर्द्धया च क्षिपेदधः। अधोभागविसृष्टाभिरसुरा यांति संक्षयम्। सर्वतीर्थाभिषेकस्य ऊर्द्ध्वं संमार्जनं भवेत्॥ अग्निपुराणे॥ आपोहिष्ठेति संध्यायां पठेत्स्वपतमानसः। मूर्द्ध्नि भूमौ तथाकाशे भूमौ मूर्द्ध्नि पुनर्भुवि। मूर्द्ध्नि भूमौ पुनर्मूर्द्ध्नि भूमौ कुर्यात्तु मार्जनम्। शंखः आचम्यैवं पुराप्रोक्तस्य तीर्थसंमार्जनं तु ये। मंत्रास्ते मे त्रिवं तोयं मूर्द्ध्नि भूमौ तथा क्षिपेत्। क्षिप्तेन मूर्द्ध्नि तोयेन पापमस्य प्रणश्यति भूमिक्षिप्तेन हन्यंते असुरा देवशत्रवः। व्यासः॥ विप्रुषोऽष्टौ क्षिपेदूर्द्ध्वमपशसः क्षयाय च। आपोहिष्ठेति मंत्रस्य ऋषिश्छंदो देवताविनियोगकथने तु योगियाज्ञवल्क्यः। सिंधुद्वीपं भवेदार्षं गायत्रीछन्द एव हि॥ आपस्तु

त्रा॰ सं॰ ७ दैवतंप्रोक्तं विनियोगश्च मार्जने। सर्वत्र मार्जनं कर्म अब्दैवतं समुदाहृतम्। आपोहिष्ठेति मंत्रस्य सिंधुद्वीप ऋषिर्गायत्री छंदः आपोदेवता मार्जने विनियोगः। मा
र्जनमंत्रो यथा ॐ आपोहिष्ठा मयोभुवस्ता न ऊर्जे दधातन महेरणाय चक्षसे। अस्यार्थः हे आपः हि यस्मात् यूयं मयः सुखं तस्य भुवः भावयित्र्यः भवथ सु
खस्य भावयित्र्यो भवथेत्यर्थः ता यूयं नो अस्मान् ऊर्जे अन्नाय दधातन स्थापयत। किंच महे महते रणाय रमणीयाय चक्षसे दर्शनीयाय दधातनेति पूर्वेणैव सं
बंधः। अथ वाक्यार्थः हे आपः यस्मात् यूयं सुखं प्रापयथ तस्मात् कारणात् अस्मान् ऐहिकेनार्थेन आमुष्मिकेन महारमणीयदर्शनेन परमब्रह्मणा संयोजयते
विअस्तु प्रार्थना। अत्र ष्ठा इति क्तन मूर्द्धन्यस्यास्ते लोडादेशः मध्यमपुरुषबहुवचनं तस्य प्रयोगः। दधातनेति दधातेर्लोटि मध्यमपुरुषबहुवचनस्य स्थाने
तप्तनप्तनथनाश्चेति तनादेशः ता इति तच्छब्दात् ङसेः सुपां सुलुगिति सूत्रेण आतादेशः महत इत्यस्य पदस्य ङे इति सत्वात् अकारतकारयोर्लोपे सति म-
हे इति भवति रमणीयायेत्यस्य मकारइकारयकाराणां लोपाद्रणायेति भवति। आपोहिष्ठा इत्याकारः संहितायां पठ्यमानः पदे इत्ति पठ्यमानत्वान्न व्याकृतः
ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः अस्यार्थः हे आपः वो युष्माकं यो रसो निर्यासः किंभूतः शिवतमः अत्यंतकल्याणरूपः तस्य रस
स्य इह नो अस्मान् भाजयत भागिनः कुरुत। तेन रसेन संबद्धान् अस्मान् कुरुतेत्यर्थः किंभूता यूयम् आपः उशतीरिव स्नेहवत्यः मातर इव इच्छायुक्ता मातृसमा इत्यर्थः
। अथ वाक्यार्थः हे आपः यथा सस्नेहा मातरः पुत्रान् कल्याणयुक्तान् कुर्वंति तथा यूयं मयि कल्याणात्मके युष्मदीयरसेन अस्मान् संबद्धान् कुरुतेत्यस्तु प्रा
र्थना। उशतीरिति वश कांतौ वितस्य शत्रं तस्य प्रथमा बहुवचने रूपं। ग्रहिज्यादिना संप्रसारणम्। ङीप् वाच्छंदसीति विकल्पेन पूर्वसवर्णादेशनिषेधात् प
से पूर्वसवर्णदीर्घत्वम्। ॐ तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ।। आपो जनयथा च नः। अस्यार्थः।। हे आपः वो युष्माकं तस्मै तस्मिन् रसे अरं अलं प ७
र्याप्तिं गमाम गच्छाम तत् युष्मदीयरसविषये तृप्तिं गच्छाम इत्यर्थः। किंच तद्रसविषये नो अस्मान् यूयं ज; यथा च तद्रसभोक्तृत्वेन अस्मान् यूयं परिकल्पयत

त्यर्थः तस्य कैस्य यस्य रसस्य क्षयाय क्षयस्य । स्थानस्य ब्रह्मादिस्तंबपर्यंतजगतः जिन्वथ प्रीणयथ यस्य रसस्य ब्रह्मादिस्तंबपर्यंतं स्थानं प्रणीयंयेत वो
। अथवा वाक्यार्थः हे आपः वो युष्माकं ब्रह्मादिस्तंबपर्यंतं स्थानं यूयं प्रीणयथ । तस्य रसस्य विषये वयं वस्त्रिंगच्छामः यूयं तद्रसभोक्तृत्वमस्माकं परिकल्पयथ
इत्यस्तु प्रार्थना । तस्मै क्षयाय इत्युभयत्रापि तुष्ट्यै भवंतीति सप्तमीस्थाने चतुर्थी । जिन्वथेति जिवि प्रीणनार्थः तस्य लोट् मध्यमपुरुषबहुवचनांतस्य रूप
म् । अथवा हे आपः वो युष्माकं यस्य रसस्य किंभूतस्य क्षयस्य स्थानस्य ब्रह्मादिस्तंबपर्यंतस्य जगदाधारभूतस्य जिन्वथ प्रीणयथ तस्मै रसाय वयं अरं शी
घ्रं गच्छामः ततश्च नोस्मान् ततोस्माकं यूयं जनयथ अस्माकं तं रसं पूर्णं च परिकल्पयथेत्यर्थः । इत्यापोहिष्ठामंत्रव्याख्या । ततो मार्जनानंतरमाचमनम्
तत्र प्रजापतिर्ऋषिः । सोमो देवता विराट् छंदः ऋजीषकुंभप्लावने विनियोगः मंत्रो यथा ॐ समुद्रे ते हृदयमप्स्वंतः सं त्वा विशंत्वोषधीरुतापः यज्ञस्य त्वा
यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहा । अस्यार्थः हे मृयज्ञपते सोम ते तव हृदयं समुद्रे अप्स्वंतः जलमध्ये तव हृदयं समुद्रे जलमध्ये गतमित्यर्थः ज
लमध्यस्थो भवानित्यभिप्रायः तत्रस्थं त्वा त्वां ओषधीः संविशंतु उत अपि च आपः संविशंतु किंच यज्ञस्य सूक्तोक्तौ यज्ञसंबंधि शोभनवचनोच्चारणेन न-
मोवाकेन नमस्कारवचनेन त्वा त्वां विधेम स्थापयाम जलपानाहुतौ स्वाहापदप्रयोगः ॥ अथवा वाक्यार्थः हे सोम जलस्थो भवान् ओषधीसहितः यज्ञसंबंधि
वचनेन नमस्कारेण च त्वा मंत्राचमनजले स्थापयामः तदिदमाचमनजलं ओषधीयुक्तस्य तवाधिष्ठानं इति पुण्यहेतुरिति मां पवित्रीकरोत्वित्याशंसा
वाक्यार्थः । अत्र सूक्तोक्ता विति नमोवाके चेति तृतीयार्थे सप्तम्येकवचनं वाकः भावे घञ् । अथवा योगियाज्ञवल्क्योक्तविधिना ॐ पूर्वाभिः सप्तमहाव्या
हृतीभिराचामेदिति । इति समुद्रे ते मंत्रव्याख्या । ततो जलमध्ये निमज्य अघमर्षणमंत्रं त्रिधा पठित्वा स्नायात् । ततोऽघमर्षणसूक्तस्य माहात्म्यव्याख्या
दिकमुत्तरत्र मध्याह्नस्नान एव लिखितं तात्रत्पुनर्न लिखितम् तत्रैवानुसंधेयमिति स्नानं निर्वर्त्य धौतवासः परिदध्यादिति प्रातःस्नानम् ॥ अथ प्रा

तः संध्यां। तत्र योगियाज्ञवल्क्यः। अतः परं प्रवक्ष्यामि संध्योपासननिर्णयम्। अहोरात्रकृतैः पापैर्यामुपास्य प्रमुच्यते। यावंतोस्यां पृथिव्यां हि विकर्मस्था
स्तु वै द्विजाः। तेषां वै पावनार्थाय संध्या सृष्टा स्वयंभुवा। या संध्या सा तु गायत्री द्विधा भूत्वा प्रतिष्ठिता। तथा। सा संतकर्म विप्राणामहोरात्रकृतस्य च। याप
पनुत्तये तस्मान्नित्यं तस्मात्समाचरेत्। यमः। संध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यांति ब्रह्मलोकं सनातनं। शातातपः। अनृतं मधुमां
सं च स्त्रियामैथुनमेव च। पुनाति वृषलस्यान्नं बहिः संध्यामुपासिता। याज्ञवल्क्यः। निशायां वा दिवा वापि यदज्ञानकृतं भवेत्। त्रिकालसंध्याकरणात्तत्स
र्वं विप्रणश्यति। देवलः। सायं प्रातः सदा संध्यामुपासीत बहिः शुचिः। विष्णुपुराणे। सर्वकालमुपस्थानं संध्ययोः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्र
मातुरभीतितः। योगियाज्ञवल्क्यः। सर्वावस्थोपि यो विप्रः संध्योपासनतत्परः। ब्राह्मण्यान्न सहीयेत अंत्यजन्मशतोपि सन्। तथा। संध्यामुपासितायेन
तेन विष्णुरुपासितः। दीर्घमायुः स विंदेत सर्वपापैः प्रमुच्यते। तथा। सायं प्रातस्तु यः संध्यां स ज्ञात्वा पर्युपासते। जप्त्वैव पाविनीं देवीं सावित्रीं लोकमातरम्। स
तया पावितो देव्या ब्राह्मणो धूतकल्मषः। न सीदेत्प्रतिगृह्णानः पृथिवीं च ससागराम्। अग्निपुराणे। मुनयऊचुः। कथं मुने दिवं याति ब्राह्मणो दग्धकल्मषः।
अनग्निको हि नो ब्रूहि यदुक्तं वह्निना पुरा। सूत उवाच। सायं प्रातस्तु यः संध्यामुपास्ते स्वस्थमानसः। जपन्हि पाविनीं देवीं गायत्रीं देवमातरं। तया संपावितो दे
व्या ब्राह्मणः पूतकिल्बिषः। न सीदेत्प्रतिगृह्णानो अपि पृथ्वीं ससागराम्। येचास्य दारुणाः केचिद्ग्रहाः सूर्यादयो दिवि। ते चास्य सौम्यतां यांति सर्वे शिवतमास्त
था। यत्र तत्र गतं चैनं दारुणाः पिशिताशनाः। घोररूपा महाकायाः प्रभवंति न राक्षसाः। यावंतः पृथिव्यां हि चीर्णवेदव्रता द्विजाः। अचीर्णव्रतवेदस्य वा कि
मीपथमाश्रिताः। तेषां तु पावनार्थाय गायत्र्या नित्यमेव हि। द्वे संध्ये ह्युपतिष्ठेत तदस्य परमं व्रतम्। तथा। द्वे संध्ये ह्युपतिष्ठेत गायत्रीं प्रयतः शुचिः। अस्तु सत्स्पृ
ष्टुतं नास्ति ह्यर्वतः परतोपि वा। तथा। एवं किल्बिषयुक्तस्तु विनिर्दहति पातकम्। उभे संध्ये ह्युपासीत तस्मान्नित्यं द्विजोत्तमः। तथा। संध्यायेन न विज्ञाता संध्या-

नैवाभ्युपासिता। जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते। नोपातिष्ठेत्तु यः पूर्वां नोपास्ते यस्तु पश्चिमाम्। स साधुभिर्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः। व्या
सः। बहिः संध्या दशगुणा गोष्ठप्रस्रवणादिषु। स्यानतीर्थे शतगुणा सहस्रं जाह्नवीजले। बहिरिति अनाच्छादितस्थाने। प्रांगणादौ। शातातपः। गृहेषु प्राह
तीसंध्या गोष्ठे शतगुणा स्मृता। नदीषु शतसाहस्रा अनंता शिवसन्निधौ। गृहेष्विति गृहवीथ्यादौ च। योगियाज्ञवल्क्यः। संधौ संध्यामुपासीत नास्तगे
नोद्गते रवौ। संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा। संवर्तः। संध्यां प्रातः सनक्षत्रामुपासीत यथाविधि। सादित्यां पश्चिमां संध्यामर्द्धास्तमितभास्करां।
नरसिंहपुराणे। पूर्वां संध्यां सनक्षत्रामुपासीत यथाविधि। गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम्। मनुः। ऋषयो दीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुयुः। प्रज्ञां
यशश्च कीर्तिं च ब्रह्मवर्चसमेव च। दक्षः। उपास्ते यस्तु नो संध्यां ब्राह्मणो हि विशेषतः। स जीवन्नेव शूद्रः स्यान्मृतः श्वा चाभिजायते। तथा संध्याहीनोऽशुचि
नित्यमनर्हः सर्वकर्मसु। यदन्यत्कुरुते किंचिन्न तस्य फलभाग्भवेत्। यमः। अनागतां तु ये पूर्वामनीतां ये तु पश्चिमाम्। विप्राः संध्यां न तिष्ठंति द्विषकालास्तउदा-
हृताः। छंदोगपरिशिष्टे कात्यायनः। संध्यालोपस्य कर्ता स्नानशीलश्च यः सदा। तं दोषा नोपसर्पंति वैनतेयमिवोरगाः। तथा। एतत्संध्याद्वयं प्रोक्तं ब्राह्म
ण्यं यत्र तिष्ठति। यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते। कूर्मपुराणे। न तिष्ठति तु यः पूर्वां नास्ते संध्यां तु पश्चिमाम्। स शूद्रेण समो लोके सर्वधर्मविवर्जितः। अ
अथ प्रातः संध्योपासनानुष्ठानम्। तत्र बौधायनः। तीर्थं गत्वा प्रयतोऽभिषिक्तः प्रयतो वानभिषिक्तः। प्रक्षालितपाणिपादः अप आचम्य। अग्निश्च मा मन्युश्चे
ति सायमपः पीत्वा सूर्यश्च मा मन्युश्चेति प्रातः। स पवित्रेण पाणिना सुरभिमत्याब्लिंगाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवि
त्रैरात्मानं प्रोक्ष्य प्रयतो भवति। तथा। सर्वकर्मणामारंभे प्राक्संध्योपासनकालाच्चैव तेनैव पवित्रसमूहेनात्मानं प्रोक्ष्य प्रयतो भवति। योगियाज्ञवल्क्यः
संध्यास्वूपासते यद्वद्यथावन्न निबोधितम्। रोगान्याभिसरवो भूत्वा शुचिः प्रयतमानसः। अचानः पुनराचामेत् ऋतमित्यभिमंत्र्य च। अंतरं स्पृश्यति

ब्रा॰स ह्येवमन्नपानमलीकृतम्। सांवत्सरात्। क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः। भवंति हि वृथा तस्य क्रियाः सर्वा न संशयः। छंदोगपरिशिष्टे कात्याय-
६ नः। सव्ये पाणौ कुशान् कृत्वा कुर्यादाचमनक्रियाम्। सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः। बौधायनः। सर्वाभिः सर्वाभिव्याहृतिभिः सर्वपापेभ्यः पूतो भव-
ति आचामेत्। यत्प्रथमं नाचमति तेन ऋग्वेदं प्रीणाति यद्द्वितीयं तेन यजुर्वेदं यत्तृतीयं तेन सामवेदं यत्प्रथमं मार्ष्टि तेनाथर्ववेदं यद्द्वितीयं मार्ष्टि तेनेतिहासादीन्
यत्सव्यं पाणिं प्रोक्षति पादौ शिरो हृदयं चक्षुः कर्णौ नासानाभिं चोपस्पृशति तेनौषधिवनस्पतिप्रभृतीन् सर्वांश्च देवान् प्रीणाति आचामेत्तस्मादाचमनात्स्व
सर्वस्मात्पातकात्पूतो भवति। व्यासः। स्मृत्वोंकारं च गायत्रीं निबध्नीयाच्छिखां ततः। पुनराचम्य हृदयं नाभिं स्कंधौ च संस्पृशेत्। शंखः। त्रिः प्राश्नीयादपस्ते-
स्तु प्रीतास्तेनास्य देवताः। ब्रह्मा विष्णुश्च शंभुश्च भवंतीत्यनुशुश्रुमः। गंगा च यमुना चैव प्रीयेते परिमार्जनात्। नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये। स्पृष्टे लो-
चनयुग्मे तु प्रीयेते शशिभास्करौ। कर्णयुग्मे तथा स्पृष्टे प्रीयेते अनलानिलौ। स्कंधयोः स्पर्शनादस्य प्रीयंते सर्वदेवताः। मूर्द्धसंस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत्।
याज्ञवल्क्यः। सुप्ते निष्ठीवने स्नाने परिधाने श्रुपातने। पंचस्वेतेषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्। पाराशरः। अग्निरापश्च वेदाश्च चंद्रादित्यानिलास्तथा। सर्वे एते हि
विप्राणां कर्णे तिष्ठंति दक्षिणे। गंगा च दक्षिणे श्रोत्रे नासिकायां हुताशनः। उभयोः स्पर्शनेनैव तत्क्षणादेव नश्यति। तथात्रैव ओंकारमाहात्म्यम्। तत्र योगियाज्ञवल्क्यः
प्रणवाद्यास्तथा मंत्राश्चतुर्वर्गफलप्रदाः। तस्माच्च निःसृताः सर्वे प्रलीयंते च तत्र वै। मांगल्यं पावनं धर्म्यं सर्वकामप्रसाधनम्। ॐकारं परमं ब्रह्म सर्वमंत्रेषु नायकम्।
प्रजापतेर्मुखोत्पन्नं तपःसिद्धस्य वै पुरा। योगियाज्ञवल्क्यः। यथा पर्णं पलाशस्य शंकुनैकेन धार्यते। तथा जगदिदं सर्वमोंकारेणैव धार्यते। जपेन दहते पापान्
प्राणायामैस्तथा मलं। ध्यानेन दहते पापं धारणाभिः प्रमुच्यते। मनुर्वेह विष्णुश्च। अकारं चाप्युकारं च मकारं च प्रजापतिः। वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च। यो-
गियाज्ञवल्क्यः। ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः। ब्राह्मणास्तेन यज्ञाश्च वेदाश्च विहिताः पुरा। तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्तंते वि- ६

यानोक्ताः सततं ब्रह्मवादिनाम्। तथा। सिद्धानां चैव सर्वेषां वेदवेदांतयोस्तथा। अन्येषामपि शास्त्राणां निष्ठा प्रोंकार उच्यते। प्रणवाद्याः स्मृता वेदाः प्रण-
वे पर्युपस्थिताः। वाङ्मयं प्रणवः सर्वं तस्मात्प्रणवमभ्यसेत्। योगियाज्ञवल्क्यः। आद्यंतमक्षरं ब्रह्म त्रयी यस्मिन्प्रतिष्ठिता। स गुह्योन्यस्त्रिवृद्वेदो यो वेदै-
नं स वेदवित्। तथा। एक एव तु विज्ञेयः प्रणवो योगसाधनम्। गृहीतसप्तसिद्धांतैरितरैर्वेदवेदिभिः। वसिष्ठः। चतुर्वेदोपि यो विप्रः सूक्ष्मं ब्रह्म न विंदति ना
बद्धमति संसारे यावद्ब्रह्म न विंदति। वेदभारभराक्रांतः स वै ब्राह्मणगर्दभः। यो वेत्ति ब्रह्मणो ह्यंतं त्रिमंत्रोर्द्धेषु तिष्ठति। तथा। त्रिमात्रार्द्धे परं ब्रह्म मात्राक्षर-
विवर्जितम्। अचिंत्यमव्ययं सूक्ष्मं निष्कलं परमं पदम्। मनुः। क्षरंति सर्वा वैदिक्यो जुहोति यजति क्रिया। अक्षरं त्वक्षरं ज्ञेयं ब्रह्म चैव प्रजापतिः। वसिष्ठः।
यथामृतेन तृप्तस्य पयसा किं प्रयोजनम्। तथोंकारविधिज्ञस्य ज्ञानतृप्तिर्न विद्यते। योगियाज्ञवल्क्यः। सर्वमंत्रप्रयोगेषु ॐ मित्यादौ प्रयुज्यते। तेन संपरिपू-
र्णानि यथोक्तानि भवंति च। सर्वमंत्रविधिज्ञेन ॐकारेण न संशयः। यन्न्यूनमतिरिक्तं च यच्छिद्रं यदयाज्ञियम्। यदमेध्यमशुद्धं च यातयामं च यद्भवेत्। तदोंका-
रयुक्तेन मंत्रेणाविकलं भवेत्। छंदोगपरिशिष्टे। यदोंकारमकृत्वा किंचिदारभ्यते तद्वज्रं भवति। तस्माद्वज्रभयाद्भीत ओंकारं पूर्वमारभेत्। व्यासः। ओंका-
रः सत्यद्वारं तस्मात्सर्वेष्वेव कर्मस्वादौ प्रयुज्यते। छंदोगपरिशिष्टे। ॐकारपूर्वया योगोपासनं यानि नित्यानि उपनयनमानि कर्माणि दानयज्ञतपःस्वाध्याय।
जपध्यानसंध्योपासनप्राणायामहोमदैवपित्र्यमंत्रोच्चारणब्रह्मारंभादीनि यच्चान्यत्किंचित्कुर्यात्तत्सर्वं प्रणवमुच्चार्य प्रवर्तयेत्समापयेत्। मनुः। प्राक्कू-
लान्पर्युपासीनः पवित्रैश्चापि पावितः। प्राणायामैस्त्रिभिः पूतस्तत ॐकारमर्हति। योगियाज्ञवल्क्यः। प्रजापतेरित्यनुवृत्तौ। तेनोपास्यं ततस्तस्य ब्रह्म-
र्षित्वं स्वयंभुवः। गायत्र्यस्य भवेच्छंदो अग्निर्दैवतमुच्यते। सर्वेषामादौ प्रयुंजीत त्रिविधेष्वेव कर्मसु। विनियोगः समुद्दिष्टः श्वेतो वर्ण उदाहृतः। व्यासः। प्रण-
वस्य ऋषिर्ब्रह्मा गायत्री छंद एव च। देवोग्निर्व्याहृतिषु च विनियोगः प्रकीर्तितः। तथा। एवमार्षादिकं स्मृत्वा तत ओंकारमभ्यसेत्। सार्धत्रिमात्रमुच्चार्य

ना.न. दीर्घघंटानिनादवत्। योगियाज्ञवल्क्यः। त्रिमात्रस्तु प्रयोक्तव्यः कर्मारंभेषु सर्वशः। तिस्रः सार्धास्तु कर्तव्या मात्रास्तत्त्वार्थचिंतकैः। देवताध्यानकाले तु स्तु
१० तं कुर्यान्न संशयः। तैलधारामिवाच्छिन्नं दीर्घघंटानिनादवत्। अवाग्जं प्रणवस्यांतं यस्तं वेद स वेदवित्। आद्यं यदक्षरं ब्रह्म त्रयी यस्मिन्प्रतिष्ठिता। स गु-
ह्योन्यस्त्रिवृद्वेदो यो वेदैनं स वेदवित्। बृहद्गार्ग्यपरिशिष्टे। स्वरितोदात्त एकाक्षर ॐकार ऋग्वेदे त्रैस्वर्योदात्त एकाक्षर ओंकारो यजुर्वेदे दीर्घोदात्त एकाक्षर
ॐकारः सामनि संप्लुतोदात्त एकाक्षर ॐकारोऽथर्ववेदे उदात्तो नात्र संशयः। बौधायनः। अपि वा प्रणवमेव त्रिरंतर्जले पठन्सर्वस्मात्पापात्प्रमुच्यते। इह
न्मनुः। स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनाद्विष्णुं पश्येदग्निं निगूढवत्। योगियाज्ञवल्क्यः। ॐ इत्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।
यः प्रयाति त्यजन्देहं स याति परमां गतिम्। अथ संध्यानुक्रमणिका। तत्र योगियाज्ञवल्क्यः। ॐकारो व्याहृतिश्चैव गायत्री सशिरास्तथा। आपो हिष्ठा च लि
ङ्गः सूक्तं चैवाघमर्षणम्। आदित्यस्य नार्थ्यं सायं प्रातर्दिने दिने। स्रष्टा स्वयंभुवा पूर्वं ब्रह्मणः सन्मुखं स्मृतम्। गायत्री त्रिस्वरं नीयम परैर्मंत्राक्षरैर्योऽस-
णात् प्राणायामशरैः सर्वं व्यवसिवाच्छिंद्यान्महापातकम्। गात्सर्यकृतवुद्धयो हृदिमनाड्विना। स्यतस्यामहाधर्मीध्यसहस्रायुर्येन्नरचितं व्याख्यानमाकर्ण्य-
ताम्। अथात्रैव प्रातःसंध्याविधाने प्राणायामविवर्णं प्राणायाममाहात्म्यसव्याहृतिसशिरस्कगायत्रीमाहात्म्यानि। तत्रात्रिः। प्राणायामांश्चरेन्नीं स्तु यथाक्र-
लमतंद्रितः। अहोरात्रकृतं पापं तत्क्षणादेव नश्यति। विष्णुधर्मोत्तरे शंखश्च। प्राणायामत्रयं कुर्यात्कल्पमुत्थाय वै द्विजः। अहोरात्रकृतात्पापात्तत्क्षणादेव मुच्य-
ते। अत्रिः। कर्मणा मनसा वाचा यदह्ना कुरुते त्वघम्। संतिष्ठन्पूर्वसंध्यायां प्राणायामैस्तु शुध्यते। तथा बृहद्विष्णुबौधायनवसिष्ठात्रिमनुपराशरशंखयोगियाज्ञव-
ल्क्यवृद्धापस्तंबाः। सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते। ॐकारस्य ब्रह्मा ऋषिर्गायत्री छंदोऽग्निर्देवता शुक्लो १०
वर्णः सर्वकर्मारंभे विनियोगः। भूरादिसप्तव्याहृतीनां प्रजापतिरृषिर्गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छंदांसि अग्निवायुसूर्यबृहस्पतिवरुणेंद्र

विश्वेदेवादेवताअनादिष्टप्रायश्चित्तेप्राणायामेविनियोगः।गायत्र्याविश्वामित्रऋषिःसवितादेवतागायत्रीछन्दःउपनयनेप्राणायामेजपेविनियोगः।ओंगा
यत्रीशिरसःप्रजापतिऋषिर्यजुश्छन्दोब्रह्माग्निवायुसूर्यादेवताप्राणायामेविनियोगः।तत्रप्राणायामविहितसप्रणवसव्याहृतिसमेतसशिरस्कागायत्रीयथा
ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् ॐआपोज्योतीरसोमृतंब्रह्मभूर्भुवःसुव
रोम्।अस्यार्थः।तंतस्यभर्गंतेजोधीमहिचिंतयामः।अत्रयद्यपितमितिपदंभर्गविशेषणंनास्तितथापियइतिपच्छब्दप्रयोगादेवतच्छब्दप्रयोगोलभ्यते।तथा
योगियाज्ञवल्क्यः।तच्छब्देनतुयच्छब्दोबोधव्यःसततंबुधैः।उदाहृतेतुयच्छब्देतच्छब्दस्यादुदाहृतइति।किंतुतस्यसवितुःसर्वभावानांप्रसवितुरित्यर्थः।तथा
योगियाज्ञवल्क्यः।सवितासर्वभूतानांसर्वभावान्प्रसूयते।सवनात्पावनाच्चैवसवितातेनचोच्यते।पुनःकिंभूतस्यदेवस्यदीप्तिक्रीडादियुक्तस्य।तथाचयोगियाज्ञ
वल्क्यः।दीप्यतेक्रीडतेयस्माद्रोचतेद्योततेदिवि।तस्माद्देवइतिप्रोक्तःस्तूयतेसर्वदैवतैरिति।पुनःकिंविशिष्टंभर्गंयोभर्गोऽस्माकंधियोबुद्धीःप्रचोदयात्प्रेरय-
तिधर्मार्थकाममोक्षेषुअस्माकंबुद्धिंयोजयतीत्यर्थः।तथाचयोगियाज्ञवल्क्यः।चिंतयामोवयंभर्गंधियोयोनःप्रचोदयात्।धर्मार्थकाममोक्षेषुबुद्धिवृत्तीःपुनःपुनरि
ति।इहभर्गशब्देनबहुविधमाहात्म्ययुक्तःसवितृमंडलगतादित्यदेवतास्वरूपःपुरुषउच्यते।तथाचयोगियाज्ञवल्क्यः।भृजिःपाकेभवेद्धातुर्यस्मात्पाचयतेह्यसौ
भ्राजतेदीप्यतेयस्माज्जगच्चांतेहरत्यपि।कालाग्निरूपमास्थायसप्तार्चिःसप्तरश्मिभिः।भ्राजतेयत्स्वरूपेणतस्माद्भर्गःसउच्यते।तथा।भेतिभासयतेलोकान्रेति
रंजयतेप्रजाः।गइत्यागच्छत्यजस्रंभरगाद्भर्गउच्यते।अतोयद्यपिसवितुर्भर्गइतिसवितृभर्गयोर्भिन्नतागायत्रीमंत्रेप्रतीयतेतथापिपरमार्थचिंतादशायामादि
त्यभर्गयोर्भेदोनविद्यते।एवंयएवआदित्यःसएवभर्गइतियएवभर्गःसएवआदित्यइतिभर्गादित्ययोरद्वैतमितिस्थितम्।पुनरपिकिंभूतंभर्गंवरेण्यंवरणीयंप्रार्थ
नीयंजन्ममृत्युदुःखादिनाशायध्यानेनोपासनीयमित्यर्थः।तथाच।योगियाज्ञवल्क्यः।वरेण्यंवरणीयंचजन्मसंसारभीरुभिः।आदित्यांतर्गतंयच्चभर्गाख्यंवै

ग्रा॰स॰ १४ मुमुक्षुभिः। जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च। ध्यानेन पुरुषोयन्तु द्रष्टव्यः सूर्यमंडले इति। एवं गायत्र्या तस्य माहात्म्यमुपवर्ण्य पुनस्तस्यैव माहात्म्यभावत्वं स-
प्तव्याहृतिभिर्विशेषणभूताभिरभिधीयते। तद्यथा। किंभूतं भर्गं भूरादिसप्तलोकप्रकाशकं भूर्भूमिर्लोकः भुवर्भुवर्लोकोंतरिक्षं स्वः स्वर्लोकः महो महर्लोकः जनो जनलो-
कः तपस्तपोलोकः सत्यं सत्यलोकः एवमुपर्युपरिक्रमेणावस्थितान् सप्तलोकानभिव्याप्यावतिष्ठमानोसौ भर्ग एतान् सप्तलोकानेव प्रदीपवत्प्रकाशयतीत्यर्थः
सप्तलोकाः पुनरेताः सप्तव्याहृतय एवेति याज्ञवल्क्यवाक्येन प्रतिपादितम्। यद्वाराह। भूराद्यास्त्वेव सत्यांताः सप्तव्याहृतयस्तु याः। लोकास्त एव सप्तैते उपर्युपरि
संस्थिताः। तथा। सप्तव्याहृतयः प्रोक्ताः पुरा कल्पे स्वयंभुवा। ता एव सप्तच्छंदांसि सप्तलोकाः प्रकीर्तिताः। पश्चाच्चवासनया सप्तव्याहृतय एव सप्तलोकाः सावका-
सना योगियाज्ञवल्क्येनैव निरुक्तैर्विविच्य प्रतिपादिता। यदाह। भवंति चास्मिन्भूतानि स्थावराणि चराणि च। तस्माद्भूरिति विज्ञेया प्रथमा व्याहृतिः स्मृता। भवंति भूयो
भूतानि उपभोगक्षये पुनः। कल्पांते उपभोगाय भुवस्तस्मात्प्रकीर्तिता। शीतोष्णवृष्टितेजांसि जायंते तानि वै सदा। आलयः सुकृतीनां च स्वर्लोकः स उदाहृतः। अधरोत्त-
रेभ्यो लोकेभ्यो माहात्म्यपरिमाणतः। हृदयः सर्वलोकानां महस्तेन निगद्यते। कल्पदाहे प्रलीनास्तु प्राणिनस्तु पुनः पुनः। जायंते तु पुनः सर्गे जनस्तेन प्रकीर्तितः। सनका-
द्यास्तपः सिद्धा ये चान्ये ब्रह्मणः सुताः। अधिकारनिवृत्ताश्च निवसंत्यस्मिन्तपस्तथा। सत्यं तु सप्तमो लोको ब्रह्मणः सदनं तु सः। सर्वेषां चैव लोकानां मूर्ध्नि संतिष्ठते सदा
।ज्ञानकर्मस्वनुष्ठानात्तथा सत्यस्य भाषणात्। प्राप्यते चोपभोगार्थं प्राप्य न च्यवते पुनः। सत्यं तु सप्तमो लोकस्तस्मादूर्ध्वं न विद्यते। एतदेवव्रतज्ञानकर्मनिष्ठैर्द्विजाति-
भिरप्यर्चिरादिमार्गोपासिभिरनुचिंत्यत इति अत्र च स्मरसनोक्तं ब्रह्म इति प्रत्यवायपरिहाराय प्रतिव्याहृति ॐकाराणां प्रयोगः। अथवा भूरादिसप्तलोकानां विशेष-
त्वेन। ॐकाराः सप्तैते निर्दिष्टाः ॐकारस्वरूपा एव ते सप्तलोका इत्यभिप्रायः। एवमुक्तप्रकारेण तस्यादित्यदेवतास्वरूपस्य भर्गस्य यथाविधं प्रभावमुपदर्श्य पुनरिदानीं १
तस्यैवोत्कर्षप्रतिपादनाय शिरोमंत्रयोजनमाह। पुनरपि किंभूतो भर्गः ब्रह्मस्वरूपः परमात्मस्वरूप इत्यर्थः भर्गस्त्वं परमात्मभूत इत्यभिप्रायः। तथा च योगियाज्ञ-

वल्क्यः । आदित्यान्ब्रह्मेत्यथ्यास्तेति शाद्युपनिषत्सु च । छन्दोगे बृहदारण्ये तैत्तिरीये तथैव च । ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् । भर्गाख्यं विष्णुसंज्ञं तु यज्ज्ञात्वामृतम
श्नुते। सौरपुराणे। सहस्ररश्मिरेवात्र परमात्मा प्रजापतिः । आदित्य इत्यनुवृत्तौ भविष्यपुराणे। यस्मादतः परं नास्ति न भूतं न भविष्यति । अयं वेदेषु सर्वेषु परमा
त्मेति गीयते । तथा विष्णुधर्मोत्तरीये प्रथमे काण्डे द्वन्द्वप्रतिमार्कण्डेयवाक्यम् । रविमध्ये स्थितः सोमः सोममध्ये हुताशनः । तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः । अ
ङ्गुष्ठमात्रः पुरुषः पूर्वमेवमपेरितः । शंकरेण तथा दृष्टः प्रभवः सर्वतेजसाम् । स विष्णुर्भुवनाधारो यस्येदं सकलं जगत् । वरेण्यं सवितुर्भर्गो रमणीयं तु योगिनाम् ।
ध्येयं वरं तद्‌दृष्टं वहिरं तथ्ययाद्देवेति । किंच प्राणिनां हृदयान्तरवर्ती यो जीवात्मा सोऽपि भर्ग एव । तथाच योगियाज्ञवल्क्यः । आदित्यान्तर्गतं यच्च ज्योतिषां ज्योतिरुत्त
मम् । हृदये सर्वभूतानां जीवभूतः स तिष्ठति । तथाह द्युम्नि तपति येषवा द्येसूर्यः स चान्तरे । अग्नौ वा धूमके ह्येषो ज्योतिश्चित्रतरं चयन् । हृद्याकाशे च यो जीवः सा
धकैरुपवर्ण्यते । स एवादित्यरूपेण वहिर्नभसि राजत इति । पुनरपि किं विशिष्टोऽसौ ब्रह्मस्वरूपो भर्गः ज्योतिः तेजःस्वरूपः मणिपाषाणधातुप्रभृतिषु स्थावरे
। तृणवृक्षौषधिषु च स एव रसस्वरूपेण वसतीत्यर्थः । तथाच योगियाज्ञवल्क्यः । पाषाणमणिधातूनां तेजोरूपेण संस्थितः । पुनरपि कीदृशः स एव ब्रह्मस्वरूपो भर्गः व्यासः
रगपशुपक्षिकीटादिषु तावत्तं प्रत्येतया ब्रह्मस्वरूपोऽसौ भर्गो विद्यत एव ये च स्थावराः पाषाणमणिधातुप्रभृतयस्तेषु मूर्त्या स एव भर्गः । अयमभिप्रायः जंगमेषु देवतासुरनर
वृक्षौषधितृणादयः स्थावरास्तेष्वपि रसरूपतया स एव भर्गो वितिष्ठति । एवमखिलस्थावरजंगममेव तेन भर्गेणाऽपि व्याप्तमिति न केवलमयं भर्गः परमार्थरूप-
तयैव जंगमेषु विद्यते अपितु जंगमानाममृतनामा चिदात्माऽपि स एव भर्ग इति दर्शयितुमाह । पुनः किंभूतोऽसौ भर्गः अमृतनामा ज्योतिर्मयो यश्चिदात्मा प्राणिनां
हृदये वसति सोऽपि भर्ग एवेत्यर्थः । तथा हि प्राणिनां हृदये सूर्यमंडलमस्ति सूर्यमंडलमध्ये सोममंडलं सोममंडलमध्ये तेजस्तेजो मध्ये सत्त्वं सत्त्वमध्ये परमात्माय

ब्रा॰स॰ दाह।योगियाज्ञवल्क्यः।रविमध्येस्थितःसोमःसोममध्येहुताशनः।तेजोमध्येस्थितंसत्वंसत्वमध्येस्थितोऽच्युत इति।तत्रसोममध्येहुताशनोवसतिसएवामृत
१२ नामाचेवात्मा।तथाचयोगियाज्ञवल्क्यः।केशवहिंसमाछिन्नंतेजोवेद्यांप्रतिष्ठितं।चित्तात्माधाममात्रस्तुनिर्भासंश्चात्मभासकः।एवंहिसोममध्यस्थोअमृत-
ज्योतिरूपकम।हृदिस्थंसर्वभूतानांचेतसोद्योऽस्तेतत्त्वसौ इति।तदेवंस्वरूपोअमृतनामाचेतात्माअपिचतस्यपरमात्मस्वरूपस्यैवभर्गस्यैवमूर्तिरितिप्रतिपा
दितम।किंचजलएवनिखिलंत्रैलोक्यमिदमुत्पन्नंयदाह।आपएवससर्जादौतासुवीर्यमवासृजत् इति।तत्रजगत्रयजन्माधारभूतंजलमपिभर्गएवेतिदर्श-
यितुंभर्गविशेषणमाह।आपइति।जलस्वरूपोपिसएवभर्गइत्यर्थः।तथाचसांबपुराणम्।यएषमंडलेह्यस्मिन्पुरुषोदीप्यतेमहान्।एषविष्णुरितिनाम्ना
ब्रह्माचैवपितामहः।रुद्रोमहेंद्रोवरुणो।आकाशंपृथिवीजलमिति।नकेवलंत्रैलोक्यजन्माधारभूतजलमात्रमसौभर्गःअपितुब्रह्मविष्णुरुद्रमूर्त्तितयासृ-
ष्टिस्थितिप्रलयानामेककर्त्तासिभर्गइतिदर्शयितुंपुनर्गर्भविशेषणमाह।भूर्भुवःस्वरिति।एतद्व्याहृतित्रयंसत्वरजस्तमोमयब्रह्मविष्णुरुद्रात्मकम्।यदाह
कूर्मपुराणम्।पुराकल्पेसमुत्पन्नाभूर्भुवःस्वःसनातनाः।माहात्म्याहृतयस्तिस्रःसर्वाशुभनिवर्हणाः।प्रधानपुरुषःकालोब्रह्मविष्णुमहेश्वराः।सत्वंरजस्तम
स्तिस्रःक्रमाद्व्याहृतयःस्मृताइति।तदयमर्थः।सत्वरजस्तमोमयब्रह्मविष्णुरुद्रस्वरूपश्चसएवभर्गइतिब्रह्मविष्णुमहेश्वरमूर्त्तितयासृष्टिस्थितिप्रलया
नेवासौपरब्रह्मात्मकोभर्गःकरोतीत्यभिप्रायः।तथाचादित्यानुवृत्तौभविष्यपुराणम्।यस्मादिदंजगज्जातंलयंयास्यतियत्रचेति।इत्थंनिखिलचराचरात्मक
त्रैलोक्यमेवभर्गस्वरूपंत्रैलोक्योत्पत्तिस्थानंत्रैलोक्यपालयितात्रैलोक्यसंहर्त्तासएवभर्गः।ततोभर्गादन्यत्किमपिनसंभवतीतिपरब्रह्मस्वरूपत्वंतस्यभ
र्गस्यप्रतिपादितमिति।अत्रसर्वेषामोंकाराणांप्रणवस्यनोक्तंब्रह्मेतिप्रत्यवायपरिहारायप्रयोगःअस्यास्तुतस्याहृतियुक्तसशिरस्कगायत्र्याअर्थवा- १२
क्यार्थः।यथाभूतोभर्गोऽस्मान्प्रेरयतिसएवतत्सवितीरसामृतमूर्त्यादिलोकत्रयात्मकसकलचराचरस्वरूपब्रह्मविष्णुमहेश्वरसूर्यादिनानादेवतासएव

परब्रह्मरूपोऽस्मादिसप्तलोकान्प्रविदीपवत्सकाशयन्मदीयजीवात्मानंज्योतिरूपंसत्याख्यंसप्तमंब्रह्मलोकंब्रह्मस्थानंनीत्वास्वात्मन्येवब्रह्मणिब्रह्मणैक्यमे
तिपासहैकीभावंकरोतीतिचिंतयन्प्राणायामंजपंकुर्यादिति। तदेवंस्वरूपगायत्र्याःसंस्मृतायाअर्थपरिज्ञानपूर्वकंयथाविधिप्राणायामेजपेचक्रियमाणे
कथंमहोपातकोपपातकान्यन्यानिचसप्तजन्मकृतानिपापानिननाशमुपयास्यंति। एतस्याःगायत्र्याःसम्यगर्थचिंतनेनवाकथमपवर्गसिद्धिर्भविष्यति
।तथाचास्याःप्राणायामविधावपितत्तद्बहुविधमाहात्म्योपवर्णनेननामानिवचनानि। अत्रअग्निपुराणेगायत्रींप्रतिब्रह्मवाक्यम्। कुर्वंतोपीहपापानिये
त्वांध्यायंतिपावनि। उभेसंध्येनतेषांहिविद्यंतेमुविपातकमूत्रिः।पठेदायतप्राणःप्राणायामेनयोद्विजः। वर्तितेनसलिप्येतपातकैरुपपातकैः। बृहद्विष्णु
।प्राणायामान्द्विजःकुर्यात्सर्वपापापनुत्तये। दह्यंतेसर्वपापानिप्राणायामैर्द्विजस्यतु। विष्णुधर्मोत्तराग्निपुराणयोः सर्वदोषहरःप्रोक्तःप्राणायामोद्विज
न्मनाम्। नतस्माद्बाधिकंनास्तितपःपरमपावनम्। अत्रिः। कर्मणामनसावाचायदन्हाकुरुतेत्वघम्। आसीनःपश्चिमांसंध्यांप्राणायामैस्तुशुध्यति। अ
ग्निपुराणम्। प्राणायामत्रयंकृत्वाप्राणायामैस्त्रिभिःपुनः। अहोरात्रकृतात्पापान्मुच्यतेनात्रसंशयः। वसिष्ठः। प्राणायामान्करोतित्रीन्यथाविधि-
तंद्रितः। अहोरात्रकृतंपापंतत्क्षणादेवनश्यति। कर्मणामनसावाचायदन्हाकृतमेनसम्। उत्तिष्ठन्पूर्वसंध्यायांप्राणायामैर्व्यपोहति बृहदापस्तंबः पूर्व
मुक्तेषुपापेषुतथान्येषुचसर्वशः। प्राणायामास्त्रयोभ्यस्ताःसूर्यस्योदयनंप्रति। जायतेवह्निनाशंयांतमसामिवभास्करः। सूर्यस्योदयनंप्राप्यनिर्मला-
धूतकल्मषाः। भवंतिभास्कराकाराविधूमाइवपावकाः। योगियाज्ञवल्क्यः। यदन्हाकुरुतेपापंकर्मणामनसागिरा। त्रैकाल्यसंध्याकरणात्प्राणाया
मैर्व्यपोहति। बृहस्पतिः। प्राणायामैर्दहेद्दोषान्मनोवाक्कायसंभवान्। प्राणायामानुहत्तौ बौधायनः। एतद्दांततपःश्रेष्ठमेतद्धर्मस्यलक्षणम्। सर्वदो
षोपघातार्थमेतदेवविशिष्यते। अत्रिवसिष्ठौ। आवर्तयेत्सदायुक्तःप्राणायामान्पुनःपुनः। आकेशाग्रान्नखाग्राच्चतपस्तप्यतउत्तमम्। विष्णुधर्मो

ब्रा॰स तदाग्निपुराणे। आकेशाग्रान्नखाग्राच्च तपस्तप्यं सुदारुणम्। आत्मानं शोधयेद्यस्तु प्राणायामैः पुनः पुनरिति। मनुः। दह्यंते ध्मायमानानां धातूनां हि यथा
१३ यथा मलाः। तथेंद्रियाणां दह्यंते दोषाः प्राणस्य निग्रहात्। प्राणायामैर्दहेद्दोषान् प्राणायामः परंतपः। बृहन्मनुः। यथा हि शैलधातूनां धमतां भ्रप्यते र
जः। इंद्रियाणां तथा दोषाः प्राणायामैर्विनिर्दहेत्। बृहस्पतिः। धम्यमानं यथा दह्याद्धातूनां सततं मलम्। तथेंद्रियकृतो दोषः प्राणायामेन दह्यते। य
थापर्वतधातूनां दोषान्दहति पावकः। एवमंतर्गतं चैनः प्राणायामेन दह्यते। अत्रिवसिष्ठौ निरोधाज्जायते वायुर्वायोरग्निः प्रजायते। अग्नेरापोभिजायं
ते तैरंतः शुध्यते त्रिभिः। विष्णुधर्मोत्तराग्निपुराणयोः। निरोधाज्जायते वायुस्तस्मादग्निस्ततो जलम्। त्रिभिः शरीरं सकलं प्राणायामैर्विशुध्यति। या
ज्ञवल्क्यः। तथा निरोधसंयोगाद्देवतात्रयचिंतनात्। अग्नेर्वायोरपां व्योमादात्मा शुध्यत्वे त्रिभिः निरोधाज्जायते वायुर्वायोरग्निश्च जायते। अग्नेरापो
भिजायंते तैरंतः शुध्यते त्रिभिः। मनुः। प्राणायामा ब्राह्मणस्य त्रयोपि विधिवत्कृताः व्याहृती प्रणवैर्युक्ता विज्ञेयं परमं तपः। योगियाज्ञवल्क्यः। प्राणाया-
मा ब्राह्मणस्य त्रयोपि विधिवत्कृताः। व्याहृतिप्रणवैः सार्द्धं विज्ञेयं परमं तपः। विष्णुधर्मोत्तराग्निपुराणागमे। प्राणसंधारणस्थानं कुशाग्रं स्पृशत विंदुना। यः
कुर्यादंमहाराज प्राणायामं च तत्समम्। बृहद्विष्णुबौधायनवसिष्ठात्रिअग्निपुराणशंखयोगियाज्ञवल्क्यहरिहापस्तंबाः। सव्याहृतिं सप्रणवां गायत्रीं
शिरसा सह त्रिः पठेदायतप्राणः प्राणायामः स उच्यते। याज्ञवल्क्ययोगियाज्ञवल्क्यौ। गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम्। प्रतिप्रणवसंयुक्तां
त्रिरयं प्राणसंयमः। योगियाज्ञवल्क्यः। भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च। प्रत्योंकारसमायुक्तं। तत्सवितुर्वरेण्यमपि ॐ आपोज्योतिरित्येतच्छिरः
पश्चात्प्रयोजयेत्। एवं मंत्रप्रयोगस्तु प्राणायामनिरोधने। त्रिरावर्त्तनयोगेन प्राणायामस्तु शब्दितः। शंखः ॐ आपोज्योतीरसोमृतं ब्रह्म भूर्भुवः सुव १३
रोमिति शिरः। योगियाज्ञवल्क्यः। षोडशाक्षरकं ब्रह्म गायत्र्यास्तच्छिरः स्मृतम्। ॐ आपोज्योतिरित्येष मंत्रोयस्तु प्रकीर्त्यते। तस्य प्रजापतिरृषिर्यजुषा

र्वंदस्साधना।ब्रह्माग्निवायुसूर्याश्च देवता समुदाहृताः।प्राणस्यायमने चैव विनियोग उदाहृतः गायत्रीं शिरसा सार्द्धमेवं श्रुतिनिदर्शनम्।व्यासः
प्रणवव्याहृतीयुक्तां गायत्रीं शिरसा सह।त्रिः पठेदायतः प्राणः प्राणायामः स उच्यते।आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत्।ब्रह्माणं केशवं शं-
भुं ध्यायेद्देवताननुक्रमात्।रक्तं प्रजापतिं ध्यायेद्धि विष्णुं नीलोत्पलप्रभम्।शंकरं त्र्यंबकं श्वेतं ध्यायन्मुच्येत बंधनात्।योगियाज्ञवल्क्यः।पूरके विष्णुसायुज्यं कुं-
भके ब्रह्मणोन्तिकम्।रेचकेन तृतीयं तु प्राप्नुयादैश्वरं पदम्।अथ प्राणायामविधिः।तत्र गद्यव्यासः।आदौ छंदो देवता ऋषि विनियोगान्निरूप्य गायत्रीं
शिरसा सार्द्धं सप्तव्याहृतिपूर्विकां प्राणायामे त्रिरावर्तयेत्।ततः शनैः प्रणिश्वसेत्।एवं प्राणायामैर्दग्धदोषो यमुत श्रेयः करोति तत्सफलं भवति।व्या-
सः।गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च।त्रिष्टुप् च जगती चेति छंदांस्याहुरनुक्रमात्।अग्निवाय्वर्कवरुणा बृहस्पतिशतक्रतू।विश्वेदेवा व्याहृतीनां दैवतं
नियथाक्रमम्।विनियोगः स्मृतश्चासां प्राणायामे महर्षिभिः।योगियाज्ञवल्क्यः।व्याहृतीनां च सर्वासामार्षं चैव प्रजापतिः।सप्तछंदांसि प्रोक्तानि छंदा-
न्यानि तु सर्वशः।गायत्र्युष्णिगनुष्टुप् च जगती त्रिष्टुबेव च।पंक्तिश्च बृहती चैव सप्तछंदांसि तानि वै।अग्निर्वायुस्तथादित्यो बृहस्पसापरएवच।इंद्रश्च विश्वे
देवाश्च देवताः समुदाहृताः।अनुस्नातेष्वनित्येषु प्रायश्चित्तेषु सर्वदा।प्राणायामप्रयोगे च विनियोग उदाहृतः।वनस्पतिः।बध्वासनं नियम्यासून् स्मृत्वाचा
र्षादिकं तथा।सन्निमीलितदृङ्मौनी प्राणायामं समभ्यसेत्।बृहस्पतिर्विष्णुधर्मोत्तरे।सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।त्रिः पठेदायत प्राणः प्रा-
णायामः स उच्यते।आदानं रोधमुत्सर्गं मनसा त्रिः समभ्यसेत्।ब्रह्माणं केशवं शंभुं ध्यायन्मुच्येत बंधनात्।रक्तं पितामहं ध्यायेद्धि विष्णुं नीलोत्पलप्रभम्।श्वे-
तं तु त्र्यंबकं चैव संसारार्णवतारणम्।योगियाज्ञवल्क्यः।वामस्थितं नस्यपुटेन वायुमाकृष्यते नैव शनैः समस्तं नाडीश्च सर्वाः परिपूरयेत्तु स पूरको नाम
महान्निरोधः।न रेचको नैव च पूरकोयं नासाग्रचारी स्थितस्ववायुः।सुनिश्चलं धारय नित्र[illegible]गा कुंभास्य मेनत्प्रवदंति तज्ज्ञाः।निष्क्रम्य नासाविवराद्दशे

श्रा·स॰ षंप्राणंवहिः शून्यमिवानलेन निरुध्यसंतिष्ठतिचैववायुः।सरेचकोनाममहान्निरोधः।ना।स्याकृष्यमाणंतुध्यानंपूरकउच्यते।कुंभोनिश्चलनिःश्वासो
२५ रिच्यमानस्तुरेचकः।योगियाज्ञवल्क्यः।नप्राणेनाप्यपानेनवेगाद्वायुंसमुत्सृजेत्।येनशत्रून्क्रूरस्यांश्चनिःश्वासेननचालयेत्।शनैर्नासापुटेवायुमुत्सृजेन्नतु
वेगतः।अथकाम्यप्राणायामः।अंगिराः।दह्यमानोनुतापेनकृत्वापापानिमानवः।शोचमानस्त्वहोरात्रंप्राणायामैस्तुशुध्यते।बौधायनः।विधिनाशास्त्रदृष्टे
नप्राणायामान्समाचरेत्।यदुपस्थकृतंपापंपद्भ्यांवायत्कृतंभवेत्।बाहुभ्यांमनसावाचाश्रोत्रत्वग्घ्राणचक्षुषा।अपिच।चक्षुःश्रोत्रघ्राणमनोव्यति
क्रमेषुत्रिभिःप्राणायामैःशुध्यति।शूद्रान्नस्त्रीगमनभोजनेषुकेवलेषुपृथक्पृथक्सप्तप्राणायामान्धारयेत्।अभक्ष्याभोज्यापेयान्नप्राशनेषु।तथाभ
न्यत्रविक्रयेषुमधुमांसघृततैलक्षारलवणरसान्नवर्जेषु यच्चान्यदप्येवमुक्तंद्वादशाहंद्वादशप्राणायामान्धारयेत्।पातकपतनीयोपपातकवर्जेषु यच्चा
न्यदप्येवमुक्तं।अर्द्धमासंद्वादशप्राणायामान्धारयेत्।पातकपतनीयवर्जेषु।यच्चान्यदप्येवमुक्तं।द्वादशाहान्द्वादशद्वादशप्राणायामान्धारयेत् पात
कपतनीयवर्जेषुयच्चान्यदप्येवमुक्तम्।द्विमासंद्वादशप्राणायामान्धारयेत्। अथपातकेषुसंवत्सरं द्वादशद्वादशप्राणायामान्धारयेत्।योगियाज्ञ
वल्क्यः।द्विगुणंत्रिगुणंकृत्वानियतात्माजितेंद्रियः।प्राणायामैश्चतुर्भिस्तुमुच्यतेप्युपपातकात्।प्राणायामशतंकार्यंसर्वपापापनुत्तये।उपपातकयुक्ता
नामनादिष्टस्यचैवहि।तथा।ब्रह्महाचसुरापश्चागम्यागामीतथैवच।सुवर्णस्तेयचौरस्तुगोघ्नोविश्वासघातकः।शरणागतघातीचकूटसाक्षीह्यकार्य
कृत्।एवमादिषुचान्येषुपापेष्वभिरतश्चिरम्।प्राणायामशतंकृत्वासूर्यस्योदयनंप्रति।निर्मलाःस्वर्गमायांतिसंतःसुकृतिनोयथा।विष्णुधर्मोत्तरा-
ग्निपुराणयोः।अमावस्यांपौर्णमास्यांचसोपवासोजितेंद्रियः।प्राणायामशतंकृत्वामुच्यतेसर्वकिल्बिषैः।अत्रिवसिष्ठौच।प्राणायामैर्यतात्मानंनियम्य २५
स्तेनश्चनः।दशद्वादशभिर्वापिचतुर्विंशात्परंतपः।विष्णुधर्मोत्तराग्निपुराणमनुयोगियाज्ञवल्क्यहारीतापस्तंबाः सव्याहृतींसप्रणवाःप्राणायामास्तुषो

उश। अपि भ्रूणहनं मासात्पुनंत्यहरहः कृताः। बृहद्विष्णुः। यस्त्वहं षोडश प्राणायामान् कृत्वा एककालं हविष्याशी मासेन ब्रह्महा पूतो भवति। कर्मणोंते
पर्यस्विनीं दद्यात्। वृद्धापस्तंबः। श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च। नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति। उष्ट्रयानं समारुह्य खरं यानं च कामतः
स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति। कात्यायनः। प्राणायामैश्च दुर्गंधो विशुध्यतीति शेषः। सुमंतुः। मद्यानुवृत्तौ गंधघ्राणे प्राणायाम एकः। गद
व्यासः। गंधघ्राणे सुरायाः प्राणायामो घृतप्राशनं च। कूर्मपुराणे। सुरां स्पृष्ट्वा द्विजः कुर्यात्प्राणायामत्रयं शुचिः। पराशरः। शानात्मश्च। अज्ञानाद्दुकसत्तकान्न
वृत्तौ। ब्राह्मणस्य यदा भुंक्ते प्राणायामेन शुध्यति। पराशरः। ब्राह्मणान्नं द्विजो भुक्त्वा कृत्वा कर्म विगर्हितम्। प्राजापत्येन शुध्येत प्राणायामैस्तु षोडशैः।
कूर्मपुराणम्। अनस्थ्नां चैव हिंसायां प्राणायामेन शुध्यति। मनुर्योगियाज्ञवल्क्यौ। अह्ना रात्र्या तु यान् जंतून् हिंसत्यज्ञानतो यदि। तेषां स्नात्वा विशुद्ध्यर्थं
प्राणायामान् षडाचरेत्। रहस्ये वृद्धयमः। प्राणायामः परं ब्रह्म प्राणायामः परं तपः। तथा। यतिधर्मी सुनिरज्ञानतो जंतून् यान् हिनस्ति दिवा निशम्। प्रा-
णायामान् विशुद्ध्यर्थं तेषां स्नात्वा षडाचरेत्। वृद्धयमः। चांडालीं पुष्कलीं मित्रकलत्रं वा गत्वा उपस्पृश्य वामदेव्येन त्रीन् प्राणायामान् कृत्वा तद्दैवतस्मा-
त्पूतो भवति। अत्र वामदेव्येन प्राणायामान् कृत्वेति पूरककुंभकरेचकेषु प्रत्येकं पठतो वामदेव्येन एकः प्राणायामः। एवं क्रमेण त्रिवारान्विला प्राणाया
मत्रयं करणीयमित्यर्थः। तथा रेतोमूत्रपुरीषप्राशनं कृत्वा लशुनपलांडुगृंजनकुंभिक्यादीनामन्येषां चाभक्ष्याणां भक्षणं कृत्वा हंससूकरकुक्कुटश्वसृ
गालमांसभक्षणं कृत्वा कस्मामात्रमुदकमवतीर्य शुद्धवतीभिः प्राणायामं कृत्वेति पूरककुंभकरेचकक्रमेण शुद्धवतीनामकं मंत्रत्रयं पठनीयमित्य-
र्थः। शुद्धवतीमंत्रस्य एतदस्य ऋषिरनुष्टुप्छंदः इंद्रो देवता मार्जने विनियोगः। मंत्रो यथा। ॐ एतोन्विंद्रं स्तवाम शुद्धं शुद्धेन साम्ना। शुद्धैरुक्थैर्वावृध्वांसं
शुद्ध आशीर्वान्ममत्तु। इंद्र शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः। शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्यः। इंद्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे।

ब्रा॰स॰ सुद्वोहत्वा गिंजिघ्रसे सुद्धीवाजं सिषास सिंत थार्हस्ये हृहन्मनुः। ब्राह्मणो थसुवर्णस्ते यंकृत्वा हिरण्यं शालायां प्रसिध्य अप्सु निमज्य ग्रीवामात्रमुदकम
१५ वतीर्य चतसृभिर्हिरण्यवर्णाभिः प्राणायामं कृत्वा आत्मानं प्रक्षाल्य तस्मात्पापात्पूतो भवति प्राणायाममाहात्म्यम्। अथ सप्रणवसंव्याहृतिसशिरस्क
गायत्रीजपफलम्। तत्र विष्णुधर्मोत्तरीय प्रथमकांडे। सव्याहृतीकां सप्रणवां जप्त्वा शिरसा सह। प्रणवेन तथा व्यस्ता वाप्या व्याहृतयः पृथक्। तथा। स-
व्याहृतिं सप्रणवां गायत्रीं शिरसा सह। येजपंति सदा तेषां न भयं विद्यते क्वचित्। दशकृत्वः प्रजप्ता सा रात्र्यान्हा यत्कृतं लघु। तत्पापं प्रणुदत्याशु नात्र का-
र्या विचारणा। शतजप्ता तु सा देवी पापौघशमनी स्मृता। सहस्रजप्ता सा देवी उपपातकनाशिनी। लक्षजप्तेन च तथा महापातकनाशिनी। कोटिजप्तेन राजेन्द्र
यदिच्छति तदाप्नुयात्। यक्षविद्याधरत्वं वा गंधर्वत्वमथापि वा। देवत्वमथवा राज्यं भूर्लोके हतकंटकम्। दशसहस्रं जपन्निष्कामः पुरुषोत्तमः। विधिना
राजशार्दूल प्राप्नोति परमं पदम्। यथाकथंचिज्जप्तैषा देवी परमपाविनी। सर्वकामप्रदा प्रोक्ता विधिना किं पुनर्नृप। ऋष्यशृंगः। सर्वात्मना हि या देवी सर्व-
भूतानि संस्थिता। गायत्री मोक्षसेतुर्वै मोक्षस्थानमलक्षणम्। षोडशाक्षरकं ब्रह्म गायत्र्याश्च शिरः स्मृतम्। अपि पादमधीयीत गायत्र्याः शिरसा तथा।
सर्वपापैः प्रमुच्येत ब्रह्मधाम प्रयतस्तथा। योगियाज्ञवल्क्यः। षोडशाक्षरकं ब्रह्म गायत्री सशिरस्तथा। सकृदावर्तयेद्यस्तु सर्वपापैः प्रमुच्यते। एवं यस्तु वि-
जानाति गायत्रीं ब्राह्मणस्तु सः। अन्यथा शूद्रधर्मा स्याद्वेदानामपि पारगः। तस्मात्सर्वप्रयत्नेन ज्ञातव्या ब्राह्मणेन सा। व्याहृत्योंकारसहिता सशिरस्का
यथार्थतः। सशिरांश्चैव गायत्री यैर्विप्रैरवधारिता। ते जन्मबंधनिर्मुक्ताः परं ब्रह्म विशंति च। अग्निपुराणम्। सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। येज-
पंति सदा तेषां न भयं विद्यते क्वचित्। योगियाज्ञवल्क्यः। आद्या व्याहृतयः सप्त गायत्री सशिरास्तथा। ॐकारं विंदते यस्तु स मुनिर्नेतरो जनः। शंखः। सव्या १५
हृतिं सप्रणवां गायत्रीं शिरसा सह। येजपंति सदा तेषां न भयं विद्यते क्वचित्। शतजप्ता तु सा देवी दिनपापप्रणाशिनी। सहस्रजप्ता तु तथा पातकेभ्यः प्र

मोचनी। दशसाहस्रजप्येन सर्वकल्मषनाशिनी। लक्षजप्यात्तु सा देवी महापातकनाशिनी। स्वरितोदात्त एकाक्षर ॐकारं ऋग्वेदे। स्वरितोदात्त एकाक्षरं यजुर्वेदे। स्वरितोदात्त एकाक्षरं साम्नि। संस्थितोदात्त एकाक्षरं अथर्ववेदे। उदात्तो नात्र संशयः। यथा हि प्रबलो वन्हिः कक्षं दहति सानिलः। तथा कालाग्निकटोग्नी काल्यं दहति चानकः। इति वचनमासाद्य वेदाः सांगास्तु चत्वारोऽधीताः सर्वे च मानसाः। गायत्रीं यो न जानाति वृथा तस्य परिश्रमः। पश्य पश्य। गायत्रीं चैव वेदांश्च तुलया समतोलयेत्। वेदा एकत्र सांगास्तु गायत्री चैकतः स्मृता। योधीते नार्थतत्वज्ञस्तस्य तद्धारणा वृथा। भारवाही च भृतकः केवलं क्लेशभाग्भवेत्। तथा। ज्ञानं कर्म च संयुक्तं मुक्त्यर्थं कथितं मया। अधीतं श्रुतिसंयुक्तं तथा श्रेष्ठं न केवलम्। स्थाणुरयं भारवाही किलाधीत्य वेदं न विवेद चार्थं। योर्थवित्सकलं भद्रमश्नुते नाकमेति विधूतपाप्मा। सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः। सुरापश्च विशुध्यंति लक्षजाप्यान्न संशयः। तथा। हुताद्देवी विशेषेण सर्वकल्मषनाशिनी। सर्वकामप्रदा देवी वरदा भक्तवत्सला। घृतपक्वैस्तिलैर्वन्हिं हुत्वा तु सुसमाहितः। गायत्र्या प्रयतः शुद्धः सर्वपापैः प्रमुच्यते। पापात्मा लक्षहोमेन पातकेभ्यः प्रमुच्यते। अभीष्टं लोकमाप्नोति तथा पापविवर्जितः। गायत्री देवजननी गायत्री पापनाशिनी। गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम्। हस्तत्राणप्रदा देवी पततां नरकार्णवे। तस्मात्तदभ्यसेन्नित्यं ब्राह्मणो हृदये शुचिः। गायत्रीं जप्यनिरतं हव्यकव्येषु योजयेत्। तस्मिन्न तिष्ठते पापमब्बिंदुरिव पुष्करे। शंखः। अस्त्रीत्यनुदत्तो च व्याहृतीभ्यः परं होमे। योगियाज्ञवल्क्यः। एतास्तु व्याहृतीः सप्त यः स्मरेत्प्राणसंयमे। उपासितं भवेत्तेन विश्वं भुवनसप्तकम्। सर्वेषु चैव लोकेषु कामचारः स जायते। एषा लोकवती ज्ञेया तत्तु राद्या प्रजापतेः। बौधायनः। प्रायश्चित्तानि वक्ष्यामि विख्यातानि विशेषतः। समाहितानां युक्तानां प्रमादेषु कथं भवेत्। ॐ पूर्वाभिर्व्याहृतीभिः सर्वाभिः सर्वपातकेष्वाचामेत्। यत्प्रथममाचामति तेन ऋग्वेदं प्रीणाति। यद्द्वितीयं तेन यजुर्वेदं यत्तृतीयं तेन सामवेदं यत्प्रथमं मार्ष्टि तेनाथर्ववेदं यद्द्वितीयं तेनेतिहासपुराणादीनि यत्सव्यं पाणिं प्रोक्षति पादौ

शिरो हृदयं चक्षुः कर्णनासिकाभ्यामिंद्रोपस्थ इति तेनौषधिवनस्पतयः सर्वाश्च देवताः प्रीणाति। आप्नोति च तस्माद्धाव मनादेव सर्वस्मात्पापात्प्रमुच्यते
उपपातकानुवृत्तीयमः। ॐकाराद्या व्याहृतयः सहस्रमनुमंत्रिताः फलाहारस्तथाप्यस्य तद्दिने हैव विशुद्ध्यतीति। ॐकारयुक्तास्तिस्रो व्याहृतयः। ॐ
भूर्भुवः स्वरिति सहस्रमनुमंत्रिताः। सहस्रजपित्वाभ्यस्य तु न जपित्वा सहस्रत्रयं जपित्वेत्यर्थः। ततः फलाहारस्तिष्ठन्तद्दिने हैव विशुद्धो भवतीति। वसि
ष्ठः। मनसा पापं ध्यात्वा ॐकारपूर्वा भूराद्या सत्यं ता व्याहृतीर्जपेत्। प्रगता तपः। अनुदकमूत्रपुरीषकरणे श्वपाकस्पर्शे सचैलं स्नानं महाव्याहृती श्चे
त। महाव्याहृतिभिरिति भूर्भुवः स्वरिति तिसृभिरित्यर्थः। हृहयमः। गोहत्यां स्त्रीहत्यां राजन्यवैश्यहत्यां न्यासापहारं कन्यादूषणं कृत्वा गामाश्वां चीमुदी
चीं वा दिशमुपनिष्क्रम्य प्रभूतेनेंधनेनाग्निं प्रज्वाल्य गव्येन घृतेन व्याहृतिभिराहुतिसहस्रं जुहुयात्। गायत्र्या अष्टसहस्रमावर्त्य आदित्यं प्रेक्ष्यमाणस्तिसृ
भिर्हिरण्यवर्णाभिरात्मानं प्रोक्ष्य पित्वा वामदेव्यं त्रिरावर्त्य तद्दिने तस्मात्पूतो भवति। अत्र सर्वत्राविशेषितव्याहृतिशब्देन भूर्भुवः स्वरिति तिस्रो व्याहृतय उच्यंते
। तत्र स्वगृह्योक्तकुशकंडिकाविधानेन परिसमूहनादिपर्युक्षणांतं कृत्वा आघारादिप्राजापत्यांतं हुत्वा व्याहृतित्रयस्य प्रजापतिर्ऋषिरग्निर्वायुः सूर्यो देवता-
गायत्र्युष्णिगनुष्टुप्छंदांसि अनाम्नातप्रायश्चित्तेषु प्राणायामे विनियोगः ॐ भूर्भुवः स्वरिति प्रथमतो देवतोद्देशं कृत्वा ॐ भूर्भुवः स्वः स्वाहा। एवं क्रमेणाहुति
सहस्रं हुत्वा स्विष्टकृद्धोमं समापयेत्। ततोऽष्टाधिकसहस्रं गायत्रीं जपित्वा च तिसृभिर्हिरण्यवर्णाभिरिति। मंत्रो यथा ॐ हिरण्यवर्णाः शुचयः पावका यासु ज
तः कश्यपो यास्विंद्रः। अग्निं या गर्भं दधिरे विरूपास्तान आपः शं स्योना भवंतु या सां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन्जनानाम्। मधुश्चुतः शुचयो याः
पावकास्तान आपः शं स्योना भवंतु यासां देवा दिवि कृण्वंति भक्षं या अंतरिक्षे बहुधा भवंति याः पृथिवीं पयसोंदंति शुक्रास्तान आपः शं स्योना भवंतु शिवेन मा च
क्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे सर्वाँ अग्नीँ रप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त। वामदेव्यं त्रिरावर्त्येति ॐ कया नश्चित्र आभुवदूती-

सद्यो बुधः सस्का कृयाश् विशुध्याहृत्ता इत्याद्युक्तिभिरित्थं तं कंडिकात्रयं। वामदेव्यं अस्य च ऋष्यादिकं व्याख्यानं च शांतिकप्रकरणे लिखितमिति ।। इति ब्राह्मणं
सर्वेषां प्राणायाममाहात्म्ये सव्याहृतिसशिरस्का गायत्रीमाहात्म्यं नामाध्यायः ।। तत्र प्राणायामानंतरा च मने बौधायनः । सूर्यश्चमामन्युश्चेति प्रातः सपविवे
णपाणिना। तत्र मंत्रो यथा। सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षंतां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अह
स्तदवलुंपतु यत्किंचिद्दुरितं मयि इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा। अस्यार्थः । मां रक्षंतां के सूर्यश्च मन्युश्च मन्युर्यज्ञः मन्युपतयश्च यज्ञपतयश्च
रुद्रादयः केभ्यो रक्षंतां पापेभ्यः किंभूतेभ्यः मन्युकृतेभ्यः असांगयज्ञकृतेभ्यः मन्युः क्रोधो अत्र पक्षे क्रोधपतय इंद्रियाणि क्रोधकृतेभ्यः पापेभ्यः क्रोधाद्रक्षंतामिति। कि
मुक्तं भवति। ममैतादृशः क्रोधो मा भवतु येनाहमकार्यं करोमीति। किंच यद्रात्र्या पापं रात्र्या कार्षं कृतवानस्मि केन केन मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना निगद
व्याख्यातमेव। तत्पापं अहः दिवसो अवलुंपतु नाशयतु यत्किंचिन्मयि मद्राश्रितं पापं तदिदमापः अहं सूर्ये जुहोमि किंभूते ज्योतिषि हृदयमध्यस्थितप्रकाशरूपे ज्योति-
षि पुनः किंभूते अमृतयोनौ स्वाहा ततः सुहुतं भवतु अत्र मन्युर्यज्ञ इत्यत्र मन्युः क्लैः शोकः कृतौ क्रुधीत्यमरकोशः प्रमाणम्। शिश्ना इति शिश्नेनेति प्राप्ते सर्वे विधयश्छंद-
सि विकल्प्यंत इति इनादेशो न भवति। आप इति सर्वमापोमयं जगदिति दर्शनात् सकारांत आपशब्दः तस्यायमिति। इति सूर्यश्च मंत्रव्याख्या। आपो हि ष्ठेत्यादि ति
सृभिर्मार्जनं एतत्तु मंत्रत्रयं उपरिगतप्रातःस्नाने एव व्याख्यातमस्ति तत्रैवानुसंधेयमिति। ततो मार्जनानंतरं द्रुपदां मंत्रं अघमर्षणमंत्रं च प्रत्येकं त्रिरावर्त्य जलगंडूषं नासि
कायें निधाय तज्जलं दक्षकोष्ठासेनाभ्यंतरं प्रवेश्य देहस्थं सकलपापमादाय रेचकोच्छ्वासेन वहिर्निर्गतमिति विचिंत्य भूमावास्फाल्य त्यजेत् तथा च छंदोगपरिशिष्टे। का-
त्यायनः। क्षरेणोद्धृत्य सलिलं प्राणमायम्य तत्र च। जपेदनायतासुर्वा त्रिः सकृद्वाघमर्षणम्। अनायतासुर्वेति वा शब्ददर्शनात् श्वाससंयम्यासंयम्यापी तदर्थः। यो
गियाज्ञवल्क्यः। द्रुपदां तु त्रिरावर्त्य तथा चैवाघमर्षणम्। सोपांशु प्रणवं वापि ध्यात्वा आपो हि या पहाः। कोकिलो राजपुत्रस्तु द्रुपदाया ऋषिः स्मृतः। अनुष्टुप् च भवेच्छं

दआपश्चैवतुदैवतम्। सौत्रामण्यामवभृथेस्नानेचविनियोजनम्। तत्रद्रुपदामंत्रोयथा। ॐ द्रुपदादिवमुमुचानः स्विन्नः स्नातोमलादिव। पूतंपवित्रेणेवाज्यमापः शुंध
तुमैनसः। अस्यार्थः। आपोजलानिमांएनसःपापाच्छुंदंतु शोधयंतुपवित्रीकुर्वंतु। अत्रदृष्टांतमाह। यथा स्विन्नोधर्मोपहतः पुरुषः द्रुपदाद्वृक्षमूलाद्वृक्षमलंमाप्यमुमूचा-
नस्त्यक्तवान्किंत्यक्तवान्अर्थवशात्स्वेदमेवत्यक्तवान्तथामांआपःएनसःशुंधंतु। द्वितीयंदृष्टांतमाहयथास्नातःपुरुषःमलात्कायमलाच्छुद्धीभवति। तथाआपः
एनसःपापान्मांशोधयंतु। तृतीयंदृष्टांतमाह। यथाआज्यंघृतंपवित्रेणप्रादेशपरिमितिसाग्रकुशपत्रद्वयेनउत्सवनेनपूतंभवति। तथामांआपःपवित्रीकुर्वंतु। द्रुपदं
वृक्षमूलंल्यब्लोपेपंचमीवक्तव्येतिपंचमी। मुमूचानइतिमुच्लृमोक्षणइत्यस्यलिटिलिटःकानज्वेतिकानचोरूपम्। शुंधंत्विति। शुंधशुद्धावित्यस्यधातोरूपम्। तस्
यमस्यमंत्रस्यवाक्यार्थः। यथाधर्मोपहतस्यवृक्षच्छायांप्रयाणाद्धर्मापगमोभवति। यथावास्नानाद्देहमलापगमःस्यात्। यथावापवित्रेणाज्यपवित्रीक्रियते। तथाआ
पःमांपवित्रीकुर्वंतु। द्रुपदामंत्रमाहात्म्यमघमर्षणमंत्रस्यचव्याख्यामाहात्म्यंच। मध्याह्नस्नानएवलिखितमितितत्रैवानुसंधेयम्। इतिद्रुपदामंत्रव्याख्या। ततः
सूर्योपस्थानं। तत्रछंदोगपरिशिष्टेकात्यायनः। उत्थायार्कंप्रतिप्राह्येत्रिकोणांजलिनांभसः। उच्चित्रमृग्द्वयेनैवउपतिष्ठेदनंतरम्। संध्याद्वयेप्युपस्थानमेवमाहुर्मनी
षिणः। मध्याह्नउद्ग्येचैवविभ्राडादीच्छयाजपेत्। तदसंसक्तपार्ष्णिर्वाएकपाददेपादपि। जपेत्कृतांजलिर्वापिऊर्ध्वबाहुरथापिवा। यत्रस्यात्कृच्छ्रभूयस्त्वंश्रेयसो
पिमनीषिणः। भूयस्त्वंब्रुवतेतत्रकृच्छ्राच्छ्रेयोह्यवाप्यते। योगियाज्ञवल्क्यः। गायत्र्यास्तुजपंकृत्वाऊर्ध्वैचैवयथाविधि। उपस्थानंस्वकैर्मंत्रैरादित्यस्यतुकारयेत्। उद्व-
यंचित्रंदेवानामुद्वयंतमसःस्परि। तच्चक्षुर्देवइतिचएकचक्रेतिवैऋचा। उद्वयादित्रयंमंत्रंआकृष्णेनेतिवैऋचा। दृष्टेनसमयुंजीतशक्त्यान्यान्निजपेत्सदा। अत्रिः।
उदुत्यंजातवेदसमितिसप्तकृत्वआदित्योपस्थानादिहकृते। एवंकृतेसर्वपापैर्मुच्यते नात्रोइत्यमित्यादौकैवकंडिकासमग्रापठितव्या। हारीतः। आकृष्णेनेत्यादित्या
यमुपतिष्ठन्सर्वत्रपूतात्माभवति। व्यासः। उदुत्यंजातवेदसित्यऋषिःप्रस्कण्वउच्यते। छंदोगायत्र्यमेवास्यसूर्योदैवतमेवच। अग्निष्टोमउपस्थानेविनियोग १७

स्तथैव च। चित्रंदेवेति मंत्रस्य ऋषिः कौत्स उदाहृतः। त्रिष्टुप्छंदो दैवतं च सूर्य एवास्य संप्रकीर्तितः। अग्निष्टोमे उपस्थाने वा नयाम स्तथैव च। तत्रात्मापगायन्मान
लांजलित्रयं प्रक्षिप्य ऊर्द्ध्ववाहुः सूर्यमुपतिष्ठेत्। उदुत्यमंत्रस्य प्रस्कण्व ऋषिर्गायत्री छंदः। सूर्यो देवता अग्निष्टोमे सूर्योपस्थाने विनियोगः। उदुत्यं जात
वेदसं देवं वहंति केतवः दृशे विश्वाय सूर्यम्। अस्यार्थः। उदुत्यं सूर्यं देवं केतवः रश्मयः उद्वहंति ऊर्ध्वं वहंति किंभूतं जातवेदसं अग्नितेजोमयमित्यर्थः।
किमर्थं उद्वहंति दृशे दर्शनाय कस्य विश्वाय विश्वस्य। अथवा कार्थः। तेजःस्वरूपं सूर्यं देवं विश्वप्रकाशनार्थं रश्मयः ऊर्ध्वं वहंतीति आदित्यस्वरूपोत्कीर्त्त
मिदम्। उदुत्यमित्यत्र मध्यवर्ती उकारो होत्रार्थः विश्वायेति षष्ठीस्थाने चतुर्थी एवं रश्मय उद्वहंति कीदृशोसावादित्य इत्याकांक्षायामाह। चित्रंदेवेति मं
त्रस्य कौत्स ऋषिस्त्रिष्टुप्छन्दः सूर्यो देवता अग्निष्टोमे सूर्योपस्थाने विनियोगः। ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावा
पृथिवी अंतरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च। अस्यार्थः। असौ सूर्य उदगादुदितो भवति। किंभूतः मित्रस्य वरुणस्य अग्नेः त्रयाणां देवानां चक्षुः
पुनः किंभूतः देवानामनीकं मित्रादिव्यतिरिक्तानां मध्ये ऽन्येषामनीकं समूहं कथमुदगात् चित्रमाश्चर्यं यथा स्यात्। उदित्य च द्यावापृथिवी अंतरीक्षं स्वर्गम
त्याकाशं आप्राः आपूरितवान् स्वरश्मिजालेनेति भावः। पुनः किंभूतः जगतो जंगमस्य तस्थुषः स्थावरस्यात्मा स्थावरजंगमात्मकसकलसंसारमयोऽयमेव
सूर्य इत्यर्थः। आप्रा इति आङ्पूर्वस्य प्रा पूरणे इत्यस्य लङ् प्रथमैकवचनस्थाने तिङां तिङो भवंतीति मध्यमपुरुषैकवचनम्। तच्चक्षुः किंभूतमित्याकांक्षायां प्रन
राह। तच्चक्षुरिति मंत्रस्य दध्यङ्ङाथर्वण ऋषिः सूर्यो देवता पुर उष्णिक् छंदो महावीराद्यं तयोः शांतिकरणे विनियोगः। ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चर
त्। पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्। अस्यार्थः। तत्पूर्वोक्तं चक्षुः किंभूतं देवहितं देवानां समीहितं पुनः किंभूतं चक्षुः शुक्रं निर्म
लं पुनः किंभूतं पुरस्तात् प्राच्यां दिशि उच्चरत् उद्यत् तदेतस्योपरया नं कृत्वा वयं शरदां शतं शतवर्षाणि पश्येम तथा शरदः शतं जीवेम तथा शरदः शतं शृणु

ब्रा॰स॰ याम।उद्वयमितिमंत्रस्य प्रस्कण्वऋषिः सूर्योदेवता॰नुष्टुप्छंदः सौत्रामण्यवभृथे विनियोगः।ॐउद्वयंतमसस्परिस्वः पश्यंतउत्तरं।देवंदेवत्रासूर्यमगन्म
१९ ज्योतिरुत्तमम्।अस्यार्थः।उदित्ययमुपसर्गः अगन्मइत्यनेनक्रियापदेनसहसंबध्यतेवयंसूर्यदेवंउदगन्मउद्गच्छाम किंभूतावयंपरिपश्यंतः सर्वतोभा
वेनपश्यंतः किंपश्यंतस्स्वः स्वर्लोकं किंभूतंतमसः अप्रकाशस्वरूपाद्भूर्लोकादुत्तरंउद्गततरंऊर्ध्वस्थितमित्यर्थः।अपिकिंभूतावयंदेवत्राः देवेनसूर्येणत्रा-
तायेषांतेदेवत्राः सूर्यंकिंभूतंज्योतिः स्वरूपंउत्तमंसर्वज्योतिषामग्न्यादीनामुत्कृष्टम्।अयमत्रवाक्यार्थः।वयंसूर्येणरक्षिताः भूर्लोकस्योपरिस्थितंपश्यंतम
तिक्रम्यपरंज्योतिः स्वरूपंस्वरूपेसूर्येसंगताभवामः।इतिसूर्यप्रार्थना।म्नसयोर्बहुलमितिबहुलवचनात्सकारस्यनकारः।गम्लृधातोर्वर्तमानेलङुत्तम
पुरुषबहुवचनम्।बहुलंछंदसीतिशपोलुक्बहुवचनान्मकारस्यनकारः।अगन्मइतिसिद्धम्।इतिउद्वयंतमितिमंत्रव्याख्या।स्वयंभूरित्यस्यसूर्यऋषिः
सूर्योदेवतायजुषांछंदोनास्तिसूर्योपस्थानेविनियोगः।स्वयंभूरसिश्रेष्ठोरश्मिर्वर्चोदाअसिवर्चोमेदेहि।अस्यार्थः।हेआदित्यरश्मेः त्वंस्वयंभूरसिकेना-
पिनकृतोपिस्वयमेवसंभूतोसीत्यर्थः।किंचश्रेष्ठोरश्मिरसिश्रेष्ठः प्रशस्यतमः।अपिचवर्चोदाअसिवर्चस्तेजस्तद्दातासीत्यर्थः।यतस्त्वमेवंभूतः अतस्त्वंमे
मह्यंवर्चोदेहिब्रह्मतेजोदेहीत्यर्थः।आदित्यस्यसप्तरश्मयः तत्रचतुर्दिक्षुचत्वारः ऊर्ध्वाधोगामिनौद्वौमध्यवर्त्येकः सचहिरण्यगर्भः सर्वरश्मिश्रेष्ठः स-
एवात्रसंबोध्यतेचअयंवक्यार्थः।यस्यस्वयंभूः श्रेष्ठस्तेजोदाताचतेजोरश्मिः तेजोर्थंलोकेरभ्यर्थ्यतेसपरमेश्वरः सविताअस्माकंप्रीतोभवत्वितिस्वयंभू-
रित्यादिभिरादित्यंस्तुत्वावर्चोमेदेहीतितस्मिन्प्रार्थना।स्वयंभूरितिमंत्रव्याख्या।इतिसूर्योपस्थानमंत्रव्याख्या।गायत्रींपरिकीर्त्तयंतिमुनयोवेदस्ययां
मातरंगायत्र्याः शतधाजपेनदुरितंयस्याःसमुच्छिद्यते।संतः सहृतमत्सरेणमनसा तस्याः प्रमाणांकिताधर्माध्यक्षहलायुधेनरचिताव्याख्येयमाकर्ण्य १९
ताम्॥अथप्रातःसंध्यायांगायत्रीजपानुष्ठानादिकंगायत्रीमाहात्म्यंच।तत्रस्नानानंतरंवौधायनः।दर्भेष्वासीनःदर्भान्धारयमाणःप्राङ्मुखः सावित्रींस-

हस्तेनाक्षमावर्तयेत्। अतत्कलः परिमितं कृत्वा वा। शंखः। कुशशय्यामासीनः कुशोत्तरीयवान् कुशपवित्रपाणिः प्राङ्मुखः सूर्याभिमुखो वा अक्षमालामा-
दाय देवता ध्यायी मंत्रजपं कुर्यात्। सुवर्णमणिमुक्तास्फटिकरुद्राक्षपुत्रजीवकानामन्यतमेनाक्षमालिकां कुर्यात्। कुशग्रंथिकृतां वा हस्तांगुलिभिर्वा गणयेद्
अंगुलिपर्वभिरित्यर्थः। योगियाज्ञवल्क्यः। प्रणवो भूर्भुवः स्वश्च अंगानि हृदयादयः। त्रिरावर्त्य ततः पश्चाद्ध्यायेद्धृदये देवतम्। विनियोगं स्मृत्वा। रूपं ध्यात्वा तं क्र
मशः स्तुवे। प्रणवो भूर्भुवः स्वश्च अंगानि हृदयादयः त्रिरावर्त्येति। प्रणवादि भूर्भुवः स्वरित्यक्षरचतुष्टयं हृदयशिरःशिखासु स्थानत्रयेप्येकैकवारन्यासेन त्रि
रावृत्तिकं कर्त्तव्यमित्यर्थः। तथा श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा। श्वेतैर्विलेपनैः पुष्पैरलंकारैश्च भूषिता। आदित्यमंडलांतस्था ब्रह्मलोकगताथवा
अक्षसूत्रधरा देवी पद्मासनगता शुभा। तत्रावाहनपित्वाचनमस्कारैर्विसर्जयेत्। तथा सविता देवता ह्यस्या मुखमग्निस्तदित्यचः। विश्वामित्र ऋषिश्छं
दो गायत्र्यास्तु विधीयते। योगियाज्ञवल्क्यः। विश्वस्य जगतो मित्रं विश्वामित्रः प्रजापतिः। विनियोगोपनयने प्राणायामे जपे तथा। प्राणायामेप्यसाश्चतुर्वि
शत्यक्षरया गायत्र्या अंतर्भावो विद्यते न त्वनयैव चतुर्विंशत्यक्षरया प्राणायामविधानम्। व्यासः। विश्वामित्र ऋषिश्छंदो गायत्री सविता तथा। देवता वि
नियोगश्च गायत्र्या जप उच्यते। योगियाज्ञवल्क्यः। आवाहयज्जुषानेन तेजोसीति विधानतः। एतद्यजुः पुरा प्रोक्तं देवैर्दर्शनकांक्षिभिः। विष्णुधर्मोत्तरे। कर्मे
न्द्रियाणि पंचैव पंच बुद्धीन्द्रियाणि च। पंच पंचेन्द्रियार्थाश्च भूतानां चैव पंचकम्। मनो बुद्धिस्तथैवात्मा अव्यक्तं च यदुत्तरम्। चतुर्विंशत्यथैतानि गायत्र्या अक्षरा
णि च। प्रणवं पुरुषं विद्धि सर्वगं पंचविंशकम्। योगियाज्ञवल्क्यः। अक्षराणां तु दैवत्यं संप्रवक्ष्याम्यतः परम्। आग्नेयं प्रथमं ज्ञेयं वायव्यं च द्वितीयकम्। तृती-
यं सूर्यदैवत्यं चतुर्थं वैद्युतं तथा। पंचमं यमदैवत्यं वारुणं षष्ठमुच्यते। बार्हस्पत्यं सप्तमं च पार्जन्यं चाष्टमं विदुः। ऐंद्रं तु नवमं ज्ञेयं गांधर्वं दशमं तथा। पौष्णमेका
दशं प्रोक्तं मैत्रावरुणं द्वादशम्। त्वाष्ट्रं त्रयोदशं ज्ञेयं वासवं च चतुर्दशम्। मारुतं पंचदशकं सौम्यं षोडशकं स्मृतम् सप्तदशं त्वांगिरसं वैश्वदेवमतः परम्। आ

ष्विनंचैकोनविंशंशाज्यप्तंच विंशकम्। सर्वदेवमयंप्रोक्तमेकंविंशमतःपरम्।ऐंद्रंद्वाविंशकंप्रोक्तंत्रयोविंशंतुब्राह्मकम्।वैष्णवंचचतुर्विंशमेताह्यस्तरदेव-
ताः।जप्यकालेतुसंचिंत्यताःसुसायुज्यतांव्रजेत्।नित्यजपविधौयोगियाज्ञवल्क्यः।ॐकारंपूर्वमुच्चार्यभूर्भुवःस्वस्ततःपरम्।गायत्रीप्रणवश्चांतेजप्यंह्येवमु-
दाहृतम्।सूर्योपस्थानानंतरंनित्यजपविधौव्यासः।प्रणवव्याहृतियुतांगायत्रींचजपेत्ततः।समाहितमनास्तूष्णीमनसावापिचिंतयेत्।तथा।दशभिर्जन्मजनि
तंशतेनचपुराकृतम्।त्रियुगंतुसहस्रेणगायत्रीहंतिदुष्कृतम्।प्रणवाद्यंतसंबद्धाभूर्भुवःस्वस्तथैवच।जप्यइतिकूर्मपुराणम्।ॐकारमादितःकृत्वाव्या
हृतीस्तदनंतरम्।ततोधीयीतसावित्रीमेकाग्रःश्रद्धयान्वितः।तथा।सहस्रपरमांदेवींशतमध्यांदशावराम्।गायत्रींवैजपेन्नित्यंजप्यज्ञःप्रकीर्तितः।
गायत्र्याविश्वामित्रऋषिर्गायत्रीछंदःसवितादेवताउपनयनेविनियोगः।ॐभूर्भुवःस्वःतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि।धियोयोनःप्रचोदयात्।अस्या
र्थः।तस्यतंभर्गतेजःधीमहिचिंतयामः।अत्रयद्यपितमितिभर्गविशेषणंनास्तितथापियतइतितच्छब्दप्रयोगादेवतमितितच्छब्दोलभ्यते।यथाचगायत्री
व्याख्यानेएव।योगियाज्ञवल्क्यः।यच्छब्देनतुतच्छब्दोबोधव्यःसततंबुधैः।उदाहृतेतुयच्छब्देतच्छब्दःस्यादुदाहृतः किंभूतस्यसवितुःसर्वभूतानांप्रस
वितुरित्यर्थः तथाचयोगियाज्ञवल्क्यः।सवितासर्वभूतानांसर्वभावान्प्रसूयते।सवनात्पावनाच्चैवसविवातेनचोच्यते।पुनःकिंभूतस्यदेवस्यदीप्तिक्री-
डायुक्तस्य।तथाचयोगियाज्ञवल्क्यः।दीप्यतेक्रीडतेयस्माद्रोच्यतेद्योततेदिवि।तस्माद्देवइतिप्रोक्तःस्तूयतेसर्वदैवतैरिति। किंभूतंभर्गंनोस्माकंधियोबु
द्धीःप्रचोदयात् प्रेरयतिधर्मार्थकाममोक्षेषुअस्माकंबुद्धीर्योभर्गोनियोजयतीत्यर्थः।तथाचयोगियाज्ञवल्क्यः।चिंतयामोवयंभर्गंधियोयोनःप्रचोद
यात्।धर्मार्थकाममोक्षेषुबुद्धिवृत्तीःपुनःपुनःरिति।तदिहभर्गशब्देनबहुविधिमाहात्म्ययुक्तःसवितृमंडलवर्त्तीआदित्यदेवतास्वरूपःपुरुषउच्यते।त १९
थाचयोगियाज्ञवल्क्यः।भजिःपाकेभवेद्धातुर्यस्मात्पाचयतेह्यसौ।भ्राजतेदीप्यतेयस्माज्जगच्चांतेहरत्यपि।कालाग्निरूपमास्थायसप्तार्चिःसप्तरश्मि

भिः भाजनेनतत्स्वरूपेणतस्माद्भर्गः सउच्यते। भातिभासयतेलोकान्रातिरञ्जयतेमनाः। गइत्या [redacted]
सूर्यमंडलान्तस्थोपिसकलप्राणिनांहृदयमध्येजीवभूतः प्रतिवसति। तथाच। योगियाज्ञवल्क्यः। आदित्यान्तर्गतंयच्चज्योतिषांज्योतिरुत्तमम्। हृदयेसर्वभू
तानांजीवरूपःसतिष्ठति। हृद्व्योम्नितपनिह्येषबाह्येसूर्यःसचांतरे। अग्नौवाधूमकेत्वेषज्योतिश्चित्रतरंचयत्। हृद्याकाशेचयोजीवः साधकैरुपवर्ण्यते।
सएवादित्यरूपेणबहिर्नभसिराजतइति। अत्रयद्यपिप्राणिनांहृदिजीवरूपतयायएवभर्गस्तिष्ठतिसएवाकाशेआदित्यमध्येपुरुषरूपतयाविद्यतेअतोअ
नयोर्भेदोनास्त्येव। तथापिधियोयोनःप्रचोदयादितिप्राणिनांबुद्धिप्रेरकोवोहृदयवर्त्तीभर्गस्सचिंतनीयः। अयंतुविशेषः। सूर्यमंडलवर्तिभर्गेणसहाहितेन
एकीभूतश्चिंतनीयइति। पुनः किंभूतंभर्गंवरेण्यंवरणीयंप्रार्थनीयंजन्ममृत्युदुःखादिनाशाय ध्यानेनोपासनीयमित्यर्थः। तथाचयोगियाज्ञवल्क्यः। वरेण्यं
वरणीयंचजन्मसंसारभीरुभिः। आदित्यान्तर्गतंयच्चभर्गाख्यंवैमुमुक्षुभिः। जन्ममृत्युविनाशायदुःखस्यत्रिविधस्यच। ध्यानेनपुरुषोयंचद्रष्टव्यःसूर्यमंडल
इति। पुनः किंभूतोभर्गः भूर्भुवःस्वरिति। भूर्लोकोन्तरिक्षलोकस्वर्लोकस्वरूपोपिसएवादित्यदेवतात्मकोभर्गइत्यर्थः। तथाचभविष्यपुराणम्। वासुदेवउ
वाच प्रत्यक्षदेवतासूर्योजगच्चक्षुर्दिवाकरः। तस्मादभ्यधिकाकाचिद्देवतानास्तिशाश्वतम्। यस्मादिदंजगज्जातंलयंयास्यतियत्रच। कृत्यादिलक्षणःकालो-
मृत्युःसाक्षाद्दिवाकरः ग्रहनक्षत्रयोगाश्चराशयः करणानिच। आदित्यावसवोरुद्राअश्विनौवायवोऽनलः। शक्रःप्रजापतिःसर्वेभूर्भुवःस्वर्दिशस्तथा। त
थात्रैलोक्यमिदमादित्यदेवतायाविवर्त्तइति। योगियाज्ञवल्क्यः। हिरण्मयंमंडलंदीप्तंवपोज्ञानसमुद्भवम्। एकंद्वादशधाभिन्नमदितिस्तमजीजनत्। तस्या-
र्द्धादुत्थितोमेरुरुधिरात्समसिंधवः। पर्वताश्चजरायूश्चनद्योधमनिसंतताः। द्यौश्चापिपृथिवीचेतिकपालेद्वेव्यवस्थिते। मध्येन्तरिक्षमभवत्त्रैलोक्यस्यैव
संभवः। एतेष्वंडकपालेद्वेभयोर्मध्येव्यवस्थिते। एकंधात्रीसमभवद्द्वितीयंनंदनंवनम्। तन्मध्याद्यः शिशुर्जातोमार्तंडःसवितातुसः। इत्थंचराचरात्मकत्रैलो

ब्रा॰स॰
२०

कामेवभर्गस्वरूपंतस्माद्भर्गात् इत्थम्भूतंकिंचिदपिनसंभवतीतिभर्गमाहात्म्यमेवंव्याहृतित्रयसमेतगायत्र्याःप्रतिपादितम्।अत्रच ॐकाररहितब्रह्मो-
च्चारणेब्रह्मत्वापदर्शनाद्दादावंतेच।ॐकारप्रयोगः।तथाहमनुः।ब्राह्मणःप्रणवंकुर्यादादावंतेचसर्वदा।स्रवत्यनोंकृतंपूर्वंपरस्ताच्चविशीर्यतेइति।अस्या
स्तुव्याहृतित्रययुक्तगायत्र्याअर्थवाक्यार्थः।सवितुर्देवस्यभर्गाख्यपरंब्रह्मस्वरूपंतेजःचिंतनार्थंममहृत्पद्ममध्यस्थितेनैवभर्गाख्यतेजसाप्रेर्यमाणास्तु
देवभर्गाख्यंभूर्लोकांतरिक्षलोकादिब्रह्मांडोदरवर्त्तीसचराचरत्रैलोक्यस्वरूपंममहृदयमध्येवाह्येचसूर्यमंडलमध्यवर्तितेजसासहस्रकीभूतंपरंब्रह्मज्यो
तिरहमितिचिंतयन्जपंकुर्यादिति।इतिजपगायत्रीव्याख्या।तदेवंस्वरूपायागायत्र्याःसम्यगर्थज्ञानपूर्वकजपमात्रेणकथंमहापातकोपपातकान्यन्या
निचसप्तजन्मकृतानिपापानिननाशमुपयास्यंति।एतस्याः।सम्यगर्थचिंतनेनवाकथमपवर्गासिद्धिर्भविष्यतीतितथाचास्यास्तदद्भुतविधमाहात्म्योपव
र्णनेनानामुनिवचनानि।तत्रगायत्रीस्वरूपव्याख्यानेमनुः अकारंचाप्युकारंचमकारंचप्रजापतिः।वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीतिच।त्रिभ्यएवतुवेदेभ्य
स्तत्रिपादमदूदुहत्।तदित्यृचोस्याःसावित्र्याःपरमेष्ठीप्रजापतिः।एतदक्षरमेतांचजपन्व्याहृतिपूर्विकाम्।संध्ययोर्वेदविद्विप्रोवेदपुण्येनयुज्यते।यो-
गियाज्ञवल्क्यः।तपसातुसमिद्धस्यआदिसर्गात्स्वयंभुवः।ॐकारपूर्वागायत्रीनिर्जगामततोमुखात्।कूर्मपुराणे।पुराकल्पेसमुत्पन्नाभूर्भुवःस्वःसनात-
नाः।महाव्याहृतयस्तिस्रःसर्वाशुभनिवर्हिणाः।प्रधानपुरुषःकालोब्रह्मविष्णुमहेश्वराः।सत्त्वंरजस्तमस्तिस्रःक्रमाद्व्याहृतयोमताः।मनुपमहद्विष्ण
वंः।ॐकारपूर्वकास्तिस्रोमहाव्याहृतयोऽव्ययाः।त्रिपदांचैवगायत्रींविद्धितेयंब्रह्मणोमुखं।कूर्मपुराणे।ॐकारस्तत्परंब्रह्मणावित्रीस्यात्तदक्षरम्।एष
मंत्रोमहायोगःसारात्सारउदाहृतः।छंदोगपरिशिष्टेसर्वेषांवेदानांगुह्योपनिषत्सारभूतंततोगायत्री।योगियाज्ञवल्क्यकूर्मपुराणयोः।गायत्रींचैव २०
वेदांश्चतुलयासमतोलयत्।वेदाएकत्रसांगाःस्तुगायत्रीचैकतःस्मृता।योगियाज्ञवल्क्यःसारभूतास्तुवेदानांगुह्योपनिषदोमताः।तेभ्यःसारस्तुगा

पवित्रा तिस्रो व्याहृतयस्ततः। तथा गायत्र्याः परमर्द्धं चक्रं चोर्द्धमेव एव वा। ब्रह्महत्या सुरापानं सुवर्णस्तेयमेव च। गुरुदाराभिगमनं जप्येनैव पुनाति सा। वृह
द्यमः। गायत्र्याः परमर्द्धं चक्रं च मर्द्धमेव एव वा। ब्रह्महत्या सुरापानं गुरुदाराभिगामिनम्। यच्चान्यद्दुष्कृतं किंचित् सर्वमेव पुनाति च। इत्याह वै वस्वतो यम
स्तथा ॐकारपूर्विकास्तिस्रः सावित्रीं यश्च विंदति। चरितब्रह्मचर्यश्च स वै श्रोत्रिय उच्यते। अग्निपुराणे। दशसाहस्रजप्येन निष्कामः पुरुषो यदि। वि-
धिना नियतो ध्यायेत्प्राप्नोति परमं पदम्। तथा यतंदा नरस्तो विद्वान् सांगवेदस्य पाठकः। गायत्रीध्यान हृतेस्य कलां नार्हति षोडशीम्। योगियाज्ञवल्क्यः।
एतया ज्ञातया सर्वं वाङ्मयं विदितं भवेत्। उपासितं भवत्तेन विश्वं भुवनसप्तकम्। अज्ञात्वा चैव गायत्रीं ब्राह्मण्याद्देव हीयते। अपवादेन संयुक्तो भवेच्छ्रु
तिनिदर्शनम्। कूर्मपुराणे। गायत्री वेदजननी गायत्री लोकपावनी न गायत्र्याः परं जप्यमेतद्विज्ञाय तूच्यते। मनुजमविष्णुधर्मोत्तराणि। सावित्रीमात्रसा
रोपि वरं विप्रः सुयंत्रितः। नायंत्रितस्त्रिवेदोपि सर्वाशी सर्वविक्रयी। वृहद्विष्णुः एतयर्चा विसंयुक्तः काले च क्रियया स्वया। विप्रक्षत्रियविड्योनिर्गर्हणां याति
साधुषु। योगियाज्ञवल्क्यः। सावित्र्याश्चैव मंत्रार्थं ज्ञात्वा चैव यथार्थतः। तस्यां पङ्क्तं चोपास्य ब्रह्मभूयाय कल्प्यते। कूर्मपुराणे। योधीते हन्यहन्येतां गायत्रीं वेद
मातरम्। विज्ञायार्थं ब्रह्मचारी स याति परमां गतिम्। योगियाज्ञवल्क्यः। वेदाः सांगास्तु चत्वारोऽधीताः सर्वे च वाङ्मयाः। गायत्रीं यो न जानाति वृथा तस्य परिश्रमः
। गायत्रीमात्रसंतुष्टः श्रेयान् विप्रः सुयंत्रितः नायंत्रितस्त्रिवेदी च सर्वाशी सर्वविक्रयी। मनुयोगियाज्ञवल्क्यौ। एतयर्चा विसंयुक्तः कालेन क्रियया स्वयां। वि
प्रक्षत्रियविड्योनिर्गर्हणां याति साधुषु। अथ गायत्रीजपफलम्। तत्र वृहद्यमः। गायत्रीजप्यनिरता गच्छंत्सम्रतंतां द्विजाः। अग्निपुराणे। गायत्रीं जपते यस्तु
द्विकालं ब्राह्मणः सदा। अर्थी भनियहीचापि स गच्छेत्परमां गतिम्। गायत्रीं जपते यस्तु कल्यमुत्थाय यो द्विजः। स न लिप्येत पापेन पद्मपत्रमिवांभसा। अग्नि
पुराणे। एवं गायत्रीं प्रति ब्रह्मवाक्यम्। कुर्वते। पीहयापानियेत्वा ध्यायंति पावनि। उभे संध्ये नतेषां हि विद्यते दैवपातकम्। गायत्र्याश्च जपान्नास्ति दिवि चेह

ब्रा॰स॰ चपावनम्।तथा।यथाकथंचिज्जप्यैषादेवीपरमपावनी।सर्वकामप्रदाप्रोक्तापृथक्कर्मसुनिष्ठिता।वसिष्ठः।विद्यातपोभ्यांसंयुक्तंब्राह्मणंजपनित्यकम्
२१ सदापिपापकर्माणमेनोनप्रतियुज्यते।यथाग्निर्वायुनोद्भूतोहविषाचैवदीप्यते।एवंजप्यपरोनित्यंमंत्रयुक्तःसदाद्विजः।विष्णुधर्मोत्तरे।गायत्रींजपतेयस्तु
कल्यमुत्थाययोद्विजः।लिप्यतेनसपापेनपद्मपत्रमिवांभसा।कामकामोलभेत्कामंगतिकामस्तुसद्गतिम्।अकामस्तदवाप्नोतितद्विष्णोःपरमंपदम्।बृ
हद्यमः।नतथावेदजप्येनपापंनिर्दहतिद्विजः।यथासावित्रीजप्येनसर्वपापैःप्रमुच्यते।विष्णुधर्मोत्तरे।गायत्रींजपतेयस्तुद्वौकालौब्राह्मणःसदा।त्वयाश्न
न्सविज्ञेयःपंक्तिपावनपावनः।मनुर्बृहद्विष्णू।योधीतेहन्यहन्येतांत्रीणिवर्षाण्यतंद्रितः।सब्रह्मपरमभ्येतिवायुभूतःखमूर्तिमान्।बृहद्यमः।सहस्रपर-
मांदेवींशतमध्यांदशोत्तराम्।गायत्रींतुजपेन्नित्यंसर्वपापप्रणाशिनीम्।व्यासगोभिलीयौ।दशभिर्जन्मजनितंशतेनतुपुराकृतम्।त्रियुगंतुसहस्रेण
गायत्रीहंतिपातकम्।अग्निपुराणे।दशकृत्वःप्रजप्तासारात्र्यान्हायत्कृतंलघु।तत्पापंप्रणुदत्याशुनात्रकार्याविचारणा।शतजप्तातुसादेवीसर्वपापप्र-
णाशिनी।सहस्रजप्तासादेवीमहापातकनाशिनी।लक्षजप्येनसाप्येवंसप्तजन्मोत्थपातकम्।कोटिजप्येनविप्रर्षेयदिच्छतितदाप्नुयात्।यक्षविद्याधरत्वं
वागंधर्वत्वमथापिवा।देवत्वमथविप्रत्वंभूयोनिहतकंटकम्।योगियाज्ञवल्क्यः।सप्ताहृत्याश्नुनन्देहंदशभिःप्रापयेद्दिवम्।विंशावृत्त्यातुसादेवीनयतेचेश्वराल
यम्।अष्टोत्तरशतंजप्तातारयेज्जन्मसागरात्।जीरोगनपश्यतिप्रायोजन्ममृत्युंहिदारुणम्।गायत्रींचजपेन्नित्यंसोमवद्भ्राजतेहिसः।अत्रिवृद्धापसंवर्तौ।सहस्रप
रमांदेवींशतमध्यांदशावराम्।गायत्रींचजपन्विप्रोनपापेनविलिप्यते।कूर्मपुराणे।सहस्रपरमांदेवींशतमध्यांदशावराम्।गायत्रींवैजपन्नित्यंजपयज्ञःप्रकी
र्तितः।योगियाज्ञवल्क्यः।दशविंशशतंवापिगायत्र्याःपरिवर्तयेत्।अहोरात्रकृताच्चैवपापात्संमुच्यतेहिसः।तथासोंकाराचतुरावृत्ताविज्ञेयासाशनासदा। २१
शतासर्वासमावर्तीसर्ववेदफलंलभेत्।गोभिलीये।कदाचिदपिनोविद्वान्गायत्रीमुदकेजपेत्।गायत्र्यग्निमुखीप्रोक्तातस्मादुत्थायतांजपेत्।यज्ञेस्तु-

एकवस्त्रेणस्नानेचैवार्द्रवाससा।जपोहोमस्तथादानंतत्सर्वंनिष्फलंभवेत्।गृहेषुतत्समंजप्यंगोष्ठेशतगुणंभवेत्।नद्यांशतसहस्रंतुअनंतंचाग्निसंनिधौ।
योगियाज्ञवल्क्यः।आर्षंछंदश्चदैवत्यंविनियोगंचब्राह्मणम्।शिरसाक्षरदैवत्यमाह्वानंचविसर्जनम्।ध्यानंजपप्रयोगंचयेषुकर्मसुयादृशः।ज्ञातमंत्रोस्य
शौर्यत्वाद्ब्राह्मण्यंयेनवैभवेत्।योगियाज्ञवल्क्यः॥एषाहित्रिपदादेवीशब्दब्रह्ममयीशुभा।तपसामहताद्दृष्टाविश्वामित्रेणधीमता।अथाक्षमाला।त-
त्वन्यासःहिरण्यगर्भमणिभिर्जप्तासाशतगुणंभवेत्।सहस्रगुणमिंद्राक्षैरुद्राक्षैरयुतंभवेत्।नियुतंप्रयुतंवास्यात्पद्माक्षैर्नात्रसंशयः।पुत्रजीवकमयस्य
परिसंख्यानविद्यते।योगियाज्ञवल्क्यः।स्फाटिकेंद्राक्षरुद्राक्षपुत्रंजीवसमुद्भवैः।अक्षमालातुकर्त्तव्याप्रशस्तासूत्तरोत्तरं।कोन्याभावातुभवेद्धि हि
रन्नताचात्रसंख्यया।अभावेचाक्षमालानांकुशग्रंथ्याथपाणिना॥अथकाम्यजपः॥तत्रात्रिहृद्रापस्तंबौ।सावित्र्यास्तुपरंनास्तिशोधनंसर्वकर्मणा
म्।वसिष्ठः॥सावित्र्यास्तुपरंनास्तिपावनंपरमंस्मृतम्।योगियाज्ञवल्क्यः।गोघ्नःपितृघ्नोमातृघ्नोभ्रूणहागुरुतल्पगः।ब्राह्मणःस्वर्णहारीचयश्च
विप्रःसुरांपिबेत्।गायत्र्याःशतसाहस्रात्पूतोभवतिमानवः।तथावायुभक्षोदिवातिष्ठेद्रात्रींनीत्वाप्सुसूर्यदृक्।जप्त्वासहस्रंगायत्र्याःशुद्धोब्रह्मवधा
हते।गौतमः।महापातकचतुष्टयरहस्यपापच्छित्तेगायत्रीसहस्रंकृत्वाआवर्तयेत्।पुनीतेहिचात्मानम्।अत्रयद्यपियावंतिसहस्राणिजप्तव्या-
निस्फुटतरंनप्रतिपादितानितथापिरहस्यकृतस्यापिमहापातकस्यगौरवान्मासैकंयावत्प्रतिदिनमेकसहस्रमेवंकृत्वाजप्तव्यम्।एतच्चमनुविष्णु
याज्ञवल्क्यैःस्फुटमेवाभिहितम्।तथा।सहस्रकृत्वस्त्वभ्यस्यबहिरेवत्रिकंद्विजः।महतोप्येनसोमासात्त्वचेवाहिर्विमुच्यते।पूतोभवतीतिसधिका
रेविष्णुः।दशसाहस्रजप्येनसुवर्णस्तेयकर्मकृत्।योगियाज्ञवल्क्यः।संवत्सरंवाषण्मासान्योजपेद्विधिवद्द्विजः।सोर्थितःसर्वतःकामान्प्राप्नुयान्ना
त्रसंशयः।तथा।स्नायाच्छतेनगायत्र्याशतमंतर्जलेजपेत्।आपःशतेनपीत्वातुसर्वपापैःप्रमुच्यते।शतमंतर्जलेजपेदितिनत्वेतिमन्येनशतगायत्रीजप

त्रा॰सं॰ स्पकर्तुमशक्यत्वात्कंठमात्रमुदकमवतीर्यजपेदितिबोधव्यम् ।गद्यव्यासः।सावित्र्याचतिलाग्नौहुत्वासर्वपापेभ्यःप्रमुच्यते।विष्णुधर्मोत्तरांग्निपु-
२२ राणयोः।हुत्वाचवरदांदेवींसर्वकामवरप्रदां।गायत्र्याचतिलैर्होमःसर्वपापप्रणाशनः।वृद्धापस्तंबः।सर्वेषामेवपापानांसंकरेसमुपस्थिते।दशसाह
स्रमभ्यस्तागायत्रीपावनंपरम्।योगियाज्ञवल्क्यः।सर्वेषामेवपापानांसंकरेसमुपस्थिते।दशसाहस्रिकाभ्यासोगायत्र्याःशोधनंपरम्।वसिष्ठः।स
हस्रपरमांदेवींशतमध्यांदशावराम्।शुद्धिकामःप्रयुंजीतसर्वपापेष्वपिस्थितः।शंखः।सावित्र्यावातिलानग्नौजुहुयात्तेनैवपावनंकुर्यात्।एवमग्निः
सर्वपापमपनुदति।कूर्मपुराणे।उच्छिष्टोपद्यनाचांतश्चांडालादीन्स्पृशेद्द्विजः।प्रमादाद्वैजपेत्स्नात्वागायत्र्यष्टसहस्रकम्।पाराशरः।अज्ञानाद्भुंजते
विप्राःसूतकेमृतकेपिवा।प्रायश्चित्तंकथंतेषांसर्ववर्णेनिनिर्दिशेत्।गायत्र्यष्टसहस्रेणब्राह्मणःशूद्रसूतके।वैश्यःपंचशतेनैवक्षत्रियोद्विशतेनवै।
शातातपः।अज्ञानाद्भुंजतेविप्राःसूतकेमृतकेपिवा।गायत्र्यष्टसहस्रेणशुध्यंतिशूद्रसूतके।वैश्यस्यसूतकेभुक्त्वागायत्र्याःपंचभिःशतैः।सूतकेक्ष
त्रियस्यैवद्विशतीजपउच्यते।ब्रह्मचारिणउद्दिश्यकूर्मपुराणे।समरात्रमकृत्वातुभैक्ष्यचर्याग्निइंधनम् रेतसश्चसमुत्सर्गेप्रायश्चित्तंसमाचरेत् ॐ
कारपूर्विकास्तिस्रोमहाव्याहृतिभिःसदा।संवत्सरंजुह्वानानक्तभिक्षाशनःशुचिः।सावित्रींचजपेच्चैवनित्यंक्रोधविवर्जितः।नदीतीरेषुतीर्थेषुतस्मा
त्पापाद्विमुच्यते।ब्रह्मचारिधर्मेसंवर्तः।संध्यांचैवाग्निकार्यंचप्रमादान्नकरोतियः।गायत्र्यष्टसहस्रंतुजपेत्स्नात्वासमाहितः।कूर्मपुराणे।ब्रह्मचार्यधिक-
रणे।अकृत्वासमिदाधानंशुचिःस्नात्वासमाहितः।गायत्र्यष्टसहस्रस्यजपंकृत्वाविशुध्यति।आपस्तंबः।ब्राह्मणस्ययदोच्छिष्टमश्नात्यज्ञानतोद्विजः।अहो
रात्रंतुगायत्र्याजपंकृत्वाविशुध्यति।वृद्धापस्तंबः।यस्तुभुंक्तेएकपंक्त्यांकुत्सितानामजानताम्।गायत्र्यष्टसहस्रेणपंचगव्येनशुध्यति।संवर्तः।स्नानेतु २२
यदिसंप्राप्तेभक्षयेद्यदिवापिबेत्।गायत्र्यष्टसहस्रंतुजपेत्स्नात्वासमाहितः।स्नानेतुयदिसंप्राप्तेरात्रिस्नानापहारिणीयपापेयदास्नात्वाभुंक्तेपिबति।

वानस्तेषु प्रायश्चित्तं बोधयम् ।कूर्मपुराणे। अनुगम्येच्छया शूद्रं प्रेतीभूतं द्विजोत्तमः ।गायत्र्यष्टसहस्रस्य जपं कुर्यान्नदीषु च। तथा। बुद्धिपूर्वं त्वसुदितजप-
दं वर्त्मनि ले द्विजः ।गायत्र्यष्टसहस्रं तु त्र्यहं चोपवसेद्व्रती ।सूर्याभ्युदितविनिर्मुक्तप्रायश्चित्ताधिकारे। गायत्र्यनुहतोऽह्नहन्मनुः। जपन्नुपवसेद्दिनम्। अत्रिः
।अश्रांतमनसः शांतमनसो वागाधव्या भनशोचनाच्छुद्धिरिति। संवर्त्तः। ब्रह्मचारिधर्मे। अनाचांतः पिबेद्यस्तु पदि वा भक्षयेद्द्विजः ।स्नानानि त्रीणि गाय-
त्र्याः प्रायश्चित्तं विशोधनम्। कूर्मपुराणे। प्रायश्चित्तप्रकरणे। स्नात्वा जपेद्वाऽयुतं गायत्रीं श्चतुरष्टौ द्विजोत्तमः ।शंखलिखितौ। स्वैरिण्यां वृषल्यां च प्रस्कू-
तो गायत्रीमेव जपेत् ।योगियाज्ञवल्क्यविश्वामित्रौ ।यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।तत्र तत्र तिलैर्होमो गायत्र्या जप एव वा। रहस्यप्रायश्चित्ते-
ऽहृद्दयमः। अपेयं पीत्वा अभक्ष्यं भक्षयित्वा उपस्पृश्य ऋषभेण त्रीन्प्राणायामान्कृत्वा गायत्र्यष्टशतमावृत्य तस्मात्पापात्पूतो भवति। ऋषभस्य परमेष्ठी-
ऋषिस्त्रिष्टुप्छंदो यज्ञपुरुषो देवता पवनस्यागे यजमानानुवाचने विनियोगः मंत्रो यथा। ॐ चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।त्रि-
धा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश। अस्यार्थः ।वृषभो रोरवीति अत्यर्थं शब्दं करोति अस्य वृषस्य चत्वारि शृंगा ब्रह्म उद्गाता होता अध्वर्यवः त
एवास्य चत्वारि शृंगाणि अस्य च त्रयः पादाः ऋग्यजुःसामान्येव वेदत्रयमस्य पादत्रयं द्वे शीर्षे हविर्दानमहारावौ अस्य सप्त हस्तासः होता मैत्रावरुणब्राह्म-
णाच्छंसी ग्रावस्तुतः अच्छावाकनेष्टापोतारः एते सप्त होतार एवास्य क्रियाकारित्वेन हस्ताः सप्त इत्यर्थः ।पुनः किंभूतो वृषभः त्रिधा बद्धः प्रातःसवनमध्या-
ह्नसवनतृतीयसवनैस्त्रिभिर्बद्धः अयमेव महारमणीयो देवो द्युतिमान् वृषभो धर्मस्वरूपो महादेवः हिरण्यगर्भमूर्त्तिर्मनुष्यान्मर्त्यान् आविवेश प्रविष्ट-
वान् ।गर्भस्वरूपतया मनुष्येषु प्रविष्ट इत्यर्थः ।शृंगा इति। इशब्दो वेदे बहुवचनं सुपामिति लोपः ।हस्तास इति आज्जसेरसुगित्यसुगागमः ।इति वृषभमंत्रव्या-
ख्या। अथ जपयज्ञः ।तत्र मनुबृहद्विष्णुवसिष्ठयोगियाज्ञवल्क्याः ।विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृ-

तः। पैपाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः। सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्। जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मै
त्रो ब्राह्मण उच्यते। अत्रिव्यासहारीतापस्तंबाः। विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः। उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः। तथा चाप्यायते ध
तुस्तैरमृतसंभवैः। एवं जप्यैश्च होमैश्च पुनराप्यायते द्विजः। तथा। नास्ति मातृसमा छाया नास्ति जप्यात्परं तपः। जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते। तथा। विद्यातपोभ्यां संयुक्तो ब्राह्मणो जपनित्यकः। सततं प्रतिगृह्णानः पापं दहति तेजसा। अथ सामान्यजपेति
कर्तव्यता। तत्र योगियाज्ञवल्क्यः। जपस्याहं विधिं वक्ष्ये यथा कार्यं विधानतः। न चंक्रमन्न प्रहसन्न पार्श्वमवलोकयन्। नापाश्रितो न जल्पंश्च न प्रावृतशिरास्त
था। न पदा पादमाक्रम्य न चैव हि तथा करौ। नैवंविधं जपं कुर्यान्न च संश्रावयन् जपेत्। तिष्ठंश्चेद्वीक्षमाणोऽर्कमासीनः प्राङ्मुखो जपेत्। प्रागग्रेषु कुशेष्वेव
मासीनश्चासने जपेत्। तथा। जपस्त्वेवं हि कर्तव्य एकाग्रमनसापि च। धारयेन्मनसा मंत्रान्न जिह्वोष्ठौ विचालयेत्। न कंपयेच्छिरो ग्रीवां दंतान्नैव प्रकाशयेत्। य
क्षराक्षसभूतानि सिद्धविद्याधरास्तथा। हरंति प्रसभं यस्मात्तस्माद्गुप्तं समाचरेत्। अग्निपुराणे। नोच्चैर्जपं बुधः कुर्यान्नीचैः कुर्याद्रतं द्विजः। समाहितमनास्तू
ष्णीं मनसा वापि चिंतयेत्। अत्रिः। ध्वनिर्घोषविकारेण निःश्वासोपांशुलक्षणः। निर्विकारेण वक्त्रेण मनसा मानसः स्मृतः। योगियाज्ञवल्क्यः। अग्न्यागारे नदी
तेवा जपेद्देवालयेऽपि वा। पुण्यतीर्थे गवां गोष्ठे सिद्धक्षेत्रेऽथवा गृहे। गृहे त्वेकगुणं जप्यं नद्यां तु द्विगुणं स्मृतम्। गवां गोष्ठे दशगुणमग्न्यागारे शताधिकम्। सिद्धक्षेत्रे
षु तीर्थेषु देवतायाश्च सन्निधौ। सहस्रं शतकोटीनामनंतं शिवसन्निधौ। नोक्लिन्नवासाः स्थलगो जपादीनाचरेद्बुधः। वस्त्रनिष्पीडनं भूतानपवार्य पिबंति हि
।तत्राहतेनार्द्रवासा नैकवासाः समाचरेत्। न जीर्णेन न नीलेन परिक्लिन्नेन वा जपेत्। तथा। परिवाप्यमलोपः स्याज्जपादिषु कथंचन। व्याहरेद्वैष्णवं मंत्रं स्मरे
द्वा विष्णुमव्ययम्। तथा। शाकयावकभैक्षाणि पयोमूलफलानि च। दधिसर्पिरथो यावः प्रशस्तं तूत्तरोत्तरम्। न चेद्वा ह्युपवासश्च भैक्ष्यं नक्तमयाचितम्। एवा 

यच्च ब्रह्मण्याहुः शस्तानि जपकर्मणि। एतेष्वेव च सक्तस्य यद्यागच्छेद्‌द्विजोत्तमः। अभिवाद्य ततो विप्रं योगक्षेमं च कीर्तयेत्। स्त्रीशूद्रपतितांश्चैव पाषण्डांश्च रज-
स्वलाम्। स्नानकाले न संभाषेज्जपहोमादिके तथा। तूष्णीमेवावगाहेत चाण्डालपतितेक्षणात्। दृष्ट्वैतानशुचिं किंचिद्‌द्विराचामेत्प्रयतोऽपि सन्। तेषां संभाषणं कृत्वा-
स्नानमेव समाचरेत्। आचम्य प्रयतो नित्यं जपेदशुचिदर्शने। सौरान्मन्त्रान्यथोत्साहं पावमानीश्च शक्तितः। तथा प्रायो जपेदित्यनुवृत्तौ। प्रणवव्याहृतिभ्यां तु
स्वाहान्तं होमकर्मणि। प्रतिकूलं प्रयोक्तव्यं हुंकारान्तं अभिचारिके। इति गायत्रीमाहात्म्ये जपानुष्ठानानि। गायत्रीजपानन्तरं सूर्यस्यावर्तनमिति हारीतवचनाद्वृत्ति
प्यावर्तेन परिवर्त्योपविशेत। ततोऽस्य सूक्तस्य ऋषिः सूर्यो देवता यजुषां छन्दो नास्ति सूर्योपस्थाने विनियोगः। मन्त्रो यथा। सूर्यस्यावृतमन्वावर्ते। अस्यार्थः। सूर्यस्यावृतं
आवर्तनमहमन्वावर्ते यथा सूर्य आवर्तमानो जगत्प्रदक्षिणं करोति तथा अहमपि तद्देवानुकुर्वन्पृथिव्याः प्रदक्षिणकरणफलं प्राप्नोमीति वाक्यार्थः। तत्रान्वावर्ते
इत्युत्तमपुरुषैकवचनादहमित्यध्याह्रियते। इत्यावसथिकमहाधर्माधिकृतहलायुधकृतौ ब्राह्मणसर्वस्वे प्रातःसंध्यामन्त्रव्याख्या॥ हलायुधेन गौडेन्द्रमहाधर्मा-
धिकारिणा। मध्याह्नस्नानमन्त्राणां व्याकारोऽयं विभाव्यते। अथ मध्याह्नस्नानम्। तत्र स्नानप्रशंसायां योगियाज्ञवल्क्यः। स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदि-
तानृणाम्। तस्मात्स्नानं प्रकुर्वीत श्रीपुष्ट्यारोग्यवर्द्धनम्। दक्षः। मनःप्रसादजननं रूपसौभाग्यवर्द्धनम्। शोकदुःखप्रहरणं तेजसानन्दनं तथा। अग्निपुरा-
णे। नैर्मल्यं भावशुद्धिश्च विना स्नानं न जायते। तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते। विष्णुः। याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति। नित्यस्नानेन पूयं-
ते येऽपि पापकृतो जनाः। जाबालिः। अगम्यागमनात्स्तेयात्पापेभ्यश्च प्रतिग्रहात्। रहस्याचरितात्पापान्मुच्यते स्नानमाचरन्। अंगीराः। गवाह्निकं देवपूजा नैराभ्याः
सः सरित्प्लवः। नाशयन्त्याशु पापानि महापातकजान्यपि। योगियाज्ञवल्क्यः। सवनत्रयं यः कुर्यान्नित्यमेवमतन्द्रितः। स व्रजेत्परमं स्थानं ब्रह्मणः सदनं द्विज। नव-
था। स्नानं दानं तपो ध्यानं पित्रदेवार्चनं तथा। पावनानि मनुष्याणां दुष्कृतस्येह कर्मणाम्। जाबालिः। यदैव कुरुते स्नानं विष्णुदेवान्तरात्मना। तेनैव सर्वमाप्नोति

विधिवत्तत्क्रियाफलम्। तथा। अकर्तुमसमर्थश्चेज्जुहोति यंजनिक्रियाः। स्नानदानजपध्यानं रात्म्यानंशोभयेद्द्विजः। अष्टधा दिवसविभागे स्नानवेलायां दस्मः। चतु
र्थेवतथाभागे स्नानार्थं मृदमाहरेत्। तिलकपुष्पकुशादींश्च स्नानं चाकृत्रिमे जले। व्यासः। स्नानं मध्यंदिने कुर्यात्सुजीर्णेन्ने निरामयः। न भुक्त्वालंकृतो रोगी ना
ज्ञातैर्भसिनाकुले। अग्निपुराणे। नदीदेवनिखातेषु तडागेषु सरःसु च। स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च। निपानादुद्धृतं पुण्यं ततः प्रस्रवणोदकम्। त
तोऽपि सारसं पुण्यं ततो नादेयमुच्यते तीर्थतोयं ततः पुण्यं गांगं तोयं ततोऽधिकम्। विष्णुपुराणे। कूपेषूद्धृततोयेन स्नानं कुर्वीत वा भुवि। स्नापिनोद्धृततोयेमथवा
वाभुव्यसंभवे। विष्णुः। स्नायात्प्रस्रवणदेवखातसरोवरेषु च। उद्धृताद्भूमिष्ठमुदकं पुण्यं स्थावराच्छ्रुतगुणं तस्मान्नादेयं तस्मादपि साधुपरिगृहीतं सर्वं। एवं
गांगम्। पराशरः। पंचस्नानानि दिव्यानि कीर्तितानि महर्षिभिः। तानीह संप्रवक्ष्यामि यथावदनुपूर्वशः। आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च। आग्नेयं भ-
स्मास्नानमवगाहं तु वारुणम्। आपो हि ष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम्। यत्तु सातपवर्षेण दिव्यं स्नानं तदुच्यते। एतैर्दिव्यद्वयास्नानं गंगास्नानेन तत्समम्।
तत्र मूलस्नानांगशौच संकल्पग्रहणानंतरं तीर्थावाहनम्। तत्र पद्मपुराणमत्स्यपुराणयोः। अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत्। तीर्थं प्रकल्पयेद्विद्वान्मू
लमंत्रेण मंत्रवित्। ॐ नमो नारायणायेति मूलमंत्र उदाहृतः। तथा पद्मपुराणम्। विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता। पाहि नस्त्वेनसस्तस्मादाजन्म-
मरणांतिकात्। तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत्। दिवि भूम्यंतरिक्षे च तानि ते संति जाह्नवि। नंदिनीत्येव ते नाम देवेषु नलिनीति च। वृंदा पृथ्वी-
च सुभगा विश्वकाया शिवासिता। विद्याधरी सुप्रसन्ना तथा लोकप्रसादनी। क्षेमा च जाह्नवी चैव शांता शांतिप्रदायिनी। एतानि पुण्यनामानि स्नानकाले तु यः
पठेत्। भवेत्संनिहिता तत्र गंगा त्रिपथगामिनी। ततो मृत्तिकालंभनम्। तत्र मेधातिथि। ऋषिर्गायत्री छंदो विष्णुर्देवता अग्निष्टोमसविन्होमे विनियोगः। २४
मंत्रो यथा। ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहा। अस्यार्थः। विष्णुर्भगवानिदं जगद्विचक्रमे विक्रांतवानाक्रांतवानित्यर्थः। कथ-

माक्रांतवानत्रेधा त्रिः प्रकारं पदं निदधे निहितवान् पृथिव्यामाकाशे स्वर्गे च पदत्रयमर्पितवानित्यर्थः। अस्य विष्णोस्तत्पदं पांसुरे समूढं पांसुरे पांसुयुक्ते भ
र्यवशात्पृथिव्यामित्यर्थः। समूढं सम्यग्निविष्टम्। अयमत्र वाक्यार्थः। विष्णुर्भूम्याकाशस्वर्गात्मकं जगत्सर्वेन विक्रांतवान् तद्दस्य पदं भूम्यां सम्यक्संबद्धम्। ए
तेन विष्णुपादसंबंधेन भूमिरतीव शुद्धेति भूमेः स्तुतिः। इत्थं स्तुत्वा भूमिर्मापावयत्विति। अभिप्रेत्य मृदाहरणमनेन क्रियते। इदं विष्णुमंत्रव्याख्या॥ ततो मृत्तिका
लंभनानंतरं गोमयालंभनं कुर्यात्। तत्र कर्दम ऋषिरनुष्टुप्छंदः श्रीर्देवता लक्ष्मीकाम्ये गोमयालंभने विनियोगः। मंत्रो यथा। ॐ गंधद्वारां दुराधर्षां नित्य
पुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्। अस्यार्थः। तां श्रियम्। गोमये उपह्वये आह्वयामि तां कां गंधद्वारां गंधो गुणस्तस्यानुभवे द्वार
भूतां पृथिवीस्वरूपां यतः पृथिव्याश्रित एव गंधोनुभूयते। पुनः किंभूतां दुराधर्षां अनाधृष्यां तेजोविशेषशालित्वान्नित्यपुष्टां सदा स्फीतां करीषिणीं करीषं
गोमयं तद्युक्तां गोमयस्थामित्यर्थः। सर्वभूतानामीश्वरीं सर्वभूतानां सर्वप्राणिनां पंचमहाभूतानां वा अत्र च पक्षे पंचानामेव भूतानां शब्दस्पर्शरूपरसगंधानां
गुणाः पृथिव्यामाश्रिता इति सर्वेभ्यो भूतेभ्यः पृथिव्या अधिकत्वादीश्वरीत्वम्। इह गोमये लक्ष्मीमावाह्य गोमयग्रहणं कुर्वतो ममलक्ष्मीर्भवत्विति वाक्यार्थः॥
गंधद्वारा मंत्रव्याख्या। ततो गोमयालंभनानंतरं करौ संपुटीकृत्य उरुं हि मंत्रेणोदकाभिमंत्रणम्। उरुं हीत्यस्य मंत्रस्य वारुणस्य माहात्म्ये हारीतः। यत्किंचि
द्दारुणं मंत्रमतज्जले ऋष्यादिकं स्मृत्वा जपेत्सर्वपापेभ्यः समुच्यते। अस्य मंत्रस्य शुनःशेप ऋषिस्त्रिष्टुप्छंदो वरुणो देवता अवभृथे यजमानवाचने विनियोगः
। मंत्रो यथा। उरुं हि राजा वरुणश्चकार सूर्याय पंथामन्वेतवा उ। अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित्। अस्यार्थः। हि यस्माज्जलस्य राजा वरुणः
सूर्याय सूर्यस्य पंथां पंथानमुरु विस्तीर्णं चकार कृतवान् तस्मात्तं पंथानं अहं अन्वेतवै अनुगच्छामीत्यर्थः। उपस्थानतरेयमेव वरुणस्तमेव पंथानमपदे आकाशे
सूर्यस्य पादाः पादाः पादानां रश्मीनां प्रतिधातवे अर्पणाय अकः कृतवान् उत अपि च स एव वरुणः हृदयाविधश्चित् पिशुनस्यापि अवक्ता नियामकः जलस्य-

ब्रा॰स॰ राजापिशुनस्यापि नियामको वरुणः आकाशे सूर्यरश्मीनामपेणाय विस्तीर्णं पंथानं कृतवान् तं पंथानमनुगच्छामीति याज्ञा वाक्यार्थः। अत्र सूर्याय इति षष्ठ्यर्थे च
२५ तुर्थी। पंथामिति पंथानमित्यघ्र नकारलोपेन। अन्वेतवै इ(ण्) गतावित्यस्मात् तुमर्थे सेसेन् इति तवैकेन् केन्यत्वन इति तवै प्रत्ययः कृन्मेजंत इत्यव्ययत्वम्। पादाय
तिषष्ठी बहुवचनस्थाने छांदसत्वात् कारः। प्रतिधातवे इति प्रति पूर्वात् दधातेः सितनिगमि मसी सा दिसूत्रेण बहुलवचनाद्भावे तुन्। अकरिति करोतेर्लुङ् स्था
नेप्रथमैकवचनं च्लि प्रत्ययः बहुलं छंदसीति बहुल वचनादिण् न भवति धातोर्गुणः रपरत्वं हल्ङ्या दिना विभक्तिलोपः मंत्रेषस द्वरणेसादिना च्लेर्लोपः। हृ
दयाविध इति हृदयं विध्यतीति क्विप् नहि वृतीत्यादिना दीर्घत्वं इत्युरुः ९ हि मंत्र व्याख्या। इति जलोपस्थानानंतरं जलावतरणम्। शुनःशेप ऋषिर्वरुणो दे
वता यजुष्टाच्छन्दो नास्ति अवभृथे यजमानस्य जलावतरणे विनियोगः। मंत्रो यथा। ॐ नमो वरुणायाभिष्ठितो वरुणस्य पाशः। अस्यार्थः। नमो वरुणा-
याभिष्ठितः आक्रांतो वरुणस्य पाशः। अयं वाक्यार्थः वरुणस्य जलरूपपाशाक्रमणेन या अप्रीतिर्जायते सा वरुण नमस्कारेणापनीयते तेन वरुण नमस्का-
र पूर्वकं जलावतरणं क्रियते। नमो वरुणायेति मंत्र व्याख्या। ततो जलेऽवतीर्य तीर्थावाहनं कुर्यात्। मंत्रो यथा। प्रस्तंवीयः इ ॐ इमं मे गंगे यमुने सरस्वति शतद्रु
स्तोमं सचता परुष्ण्या। आसिक्न्या मरुद्वृधे वितस्तया र्जीकीये शृणुह्या सुषोमया। अस्यार्थः। हे गंगे हे यमुने हे सरस्वति हे शतद्रु हे मरुद्वृधे हे र्जीकीये म
या मम आशिषः आशंसाः शृणुहि मदीया शंसां शृणु इत्यर्थः। का वा शंसा इत्याकांक्षायां मे सदृशं मदीयस्नान निमित्तं परुष्ण्या। आसिक्न्या वितस्तया
सह इमं स्तोमं सचत समवेता भवत अस्मिन् सुरोवर्त्तिस्नानजलसमूहे समवेताः सन्निहिता भवतेत्यर्थः। इतीमं मे गंगे मंत्र व्याख्या। इति तीर्थावाहनानंतरं
मंत्रत्रयेण जलांजलित्रयं शिरसि दद्यात्। तत्र प्रजापतिऋषिस्त्रिवसाना पंक्तिश्छन्दः आपो देवता मार्जने विनियोगः। मंत्रो यथा। ॐ इदमापः प्रवहतय- २५
त्किंचिद्दुरितं मयि। यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम्। अस्यार्थः। हे आपः यूयमिदं प्रवहत प्रकर्षेण वहत अपनयतेत्यर्थः। इदं यत्किंचिन्मयि मदाश्रि

तं दुरितं पापं यद्वाऽपदह्यहम् अभि-दुद्रोह परद्रोहरूपं पापं कृतवान् अस्मि यद्वा शेपे पराक्रोशरूपं पापं कृतवानस्मीत्यर्थः। उत अप्यर्थः अनृतं मृषावादरूपं पापं वेत्स-
र्थः। अथ वाक्यार्थः। मम यत्किंचिन्मनःकायवचनैरर्जितं पापं वर्तते तेन स्नानेनापनयेति सम्प्रार्थना। इत्यापस्त्वं वीयेदमाप मंत्रव्याख्या। तथा प्रजापतिर्ऋषिस्त्रि-
ष्टुप्छंदः आपो देवता दीक्षायां यजमानस्नाने विनियोगः द्वितीयो मंत्रो यथा। ॐ आपो अस्मान्मातरः शुंधयंतु घृतेन नो घृतप्वः पुनंतु। विश्वं हि रिप्रं प्रवहंति दे-
वीः। अस्यार्थः आपः अस्मान् शुंधयंतु शोधयन्तु किंभूता आपः मातरः जगतां जनन्यः अपि च नो अस्मान् घृतेन पुनंतु जलस्य वीर्येण पवित्रीकुर्वंतु किंभूता
घृतप्वः घृतं जलस्य वीर्यं तेन पुनंतीति घृतप्वः आपः। यथाश्रुतिः। घृतं हि अपां परमं तेजः तद्वै सुप्रभं घृतेन पुनन्तीति। हि यस्माद्देवीः स्तुत्यादिविषया आपः रि-
प्रं पापं प्रवहंति अपनयंति किंभूतं विश्वं सर्वं अथ वाक्यार्थः। आपो जगन्मातरः घृतं च तासां वीर्यं सकलपापक्षयकारिणं स्मृताः। इति जलस्तुतिः। ता अस्मा-
न्पुनंत्विति याच्ञा। अत्र शुंधयंत्विति शुंध शुद्धावित्यस्य ण्यंतस्य प्रयोगः। घृतप्व इति घृतेन पुनंतीति क्विबंतम्। रिप्रमिति पापनाशिनी भवत इति स्तुतिः देवीरि-
ति वा छंदसीति विकल्पेन पूर्वसवर्णादेशाद्रूपमित्यापो अस्मान्मंत्रव्याख्या। अथ द्रुपदादिवेति तृतीयो मंत्रः। पूर्वं प्रातःस्नान एव व्याख्यात इति तत्रैव तस्य ऋ-
ष्यादिकमप्यनुसंधेयमिति। ततः पुनरपि दक्षिणावर्तेन जलमावर्तनम्। तत्र दध्यङ्ङाथर्वण ऋषिर्गायत्री छंदः आपो देवता शांतिकर्मणि विनियोगः मंत्रो य-
था। ॐ शन्नो देवीरभिष्टय आपो भवंतु पीतये शंयोरभिस्रवंतु नः। अस्यार्थः। देवी आपः नोऽस्माकं शं कल्याणं भवंतु किंभूताः देवीः दिव्यः स्तुत्यादिविषयाः किम-
र्थम् अभिष्टये उपचयार्थं पीतये पानाय किंच पुनः अभिस्रवंतु अस्मदभिमुखं स्रवंतु किमर्थं शंयोः कल्याणसंयोगाय। अथ वाक्यार्थः। आपो अस्माकमुपचयोपपा-
नाय कल्याणसंयोगाय च भवंतु इत्याशंसा। तत्र देवीरिति प्रथमा बहुवचने छंदसीति विकल्पेन पूर्वसवर्णादेशः। अभिष्टय इति ष्टेस्त्वे शब्दसंघातयोरिति अ-
स्माद्धातोरभिपूर्वात्क्तिपि कृते आदेच उपदेशे शितीत्यात्वं स्यमः पूर्वस्येति योगविभागात्संप्रसारणे तादर्थ्ये चतुर्थी। शंयोरिति शंशब्दात्कंशंभ्यां बभयुस्ति

उतयसइतिमत्वर्थीयप्रत्ययेकृते शंयुरिति पदं ततो वहुलंछंदसीति चतुर्थ्यर्थे षष्ठ्येकवचनं यदातु शनैश्चरस्नानायामस्य विनियोगस्तदा अभिष्टये च्छेहितफ-
लावाप्तये यदा श्राद्धे तदा पीतये पितृणां पानायेति विशेषो वोधव्यः। इतिशन्नोदेवीत्याख्या। ततोजले निमज्ज्य मंत्रं पठित्वा त्रिर्निमज्ज्यात्। तत्र प्रजापतिऋषिर्यज्ञो
देवता यजुषांछंदोनास्ति अनीककुंभमार्जने विनियोगः। मंत्रोयथा। ॐ अवभृथनिचुंपुण निचेरुरसि निचुंपुणः। अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृ-
तं पुरुराव्णोदेवरिषस्पाहि। अस्यार्थः हे अवभृथ यज्ञसमाप्तिस्नान किंभूत निचुंपुण ब्रह्महादिभिरपिनीचैराधार्यमाण पुनासीति निचुंपुणः त्वंनिचेरुरसि त्वंनी-
चान् पिरौषि आहूय सि पावनायेत्यर्थः। निचुंपुण असि भवसि असीति मध्यमपुरुषदर्शनात् त्वमित्यध्याह्रियते। अहमेनः पापं अवयासिषं अहं अपनीतवा-
नस्मि अत्रापि अवयासिषमित्यस्यावइस नेन व्यवहितेन संवंधः उत्तमपुरुषदर्शनादहमित्यध्याहार्यं किंभूतमेनः देवकृतं देवविषये कृतं वैश्वदेवाकरणेन कृ-
तं कैरवासिषं देवैर्यज्ञहविर्दीनेन तोषितैः किंच मर्त्यकृतमप्येनः अवयासिषं अत्रापि अवेतानंतरस्थितेन संवद्धः। मर्त्या मनुष्याः तद्विषये कृतं आतिथ्यछलनेन
कृतमित्यर्थः कैरवयासिषं मर्त्यैर्मनुष्यैर्यज्ञकर्मणि ऋत्विग्भूतैः तत्र वैश्वदेवातिथिपूजनयोरुपादानं पंचमहायज्ञोपलक्षणार्थम्। यतोहं नित्यहोमादिकर-
णेन पापमपनीतवान् अतो मां पाहि रक्ष अत्रापि पाहीति मध्यमपुरुषांतक्रियापदस्य साकांक्षत्वान्मामिति कर्मपदं त्वमिति कर्तृपदं चाध्याहरणीयं कस्मात्पा-
हि देवरिषः हिंसारूपात्पापात् पुनः किंभूतात् पुरुराव्णः वहुपापफलप्रदानात्मकात् अत्रापि देवहिंसारूपात् पापापनोदनं पंचमहायज्ञोपनेयपापोपलक्ष-
णार्थम्। अयमत्र वाक्यार्थः यतो मया वैश्वदेवाद्यकरणपापं ऋत्विग्भिः सहकारिणः कृत्वा देवतोषणे अपनीतं अतो हे अवभृथ त्वं मां देवहिंसारूपात्पापा-
द्रक्ष। यजुर्वेदेन विइक्तमवभृथस्नानमुपांशु करणीयं तत्र च उपांशु अवभृथे च्छचरंवीति श्रुतिः प्रमाणत्वेन लिखितातद्युक्तं अवभृथस्नानमवभृथेष्ट्याभि-
न्नत्वात्। अनयाच श्रुत्या अवभृथे देवोपांशुचरणं प्रतिपाद्यते न त्ववभृथस्नानस्यापि। पुरुराव्ण इति। पुरुपदं वहुवाचकम्। रादाने इत्यस्माद्धातोरातोर्मनिन्

कानवृंतानपश्चात्तानपभ्रसयः पुरुष्वांत् पंचम्यारूपम्। देवरिषइति रिष हिंसायामित्येतस्माद्देवशब्दोक्किपिकृतेपंचम्यारूपम्। इत्यवभृथनिचुंपुणमंत्र
व्याख्या। ततः समुद्रेते इति मंत्रेणाचमनं। अस्य मंत्रस्य व्याख्यादिकमुपरि लिखितमिति तत्रैवानुसंधेयमिति। इत्याचमनानंतरं इमं मे गंगे इति मंत्रेण पुनस्ती-
र्थावाहनं। अस्यापि मंत्रव्याख्यादिकमत्रैव मध्याह्नस्नाने लिखितत्वादिह पुनर्न लिखितमिति तत्रैवानुसंधेयमिति। तीर्थावाहनानंतरं आपोहिष्ठेति त्रि
र्नंकुर्यात्। अस्यापि मंत्रस्य व्याख्यादिकं प्रातःस्नान एव लिखितत्वादिह न लिखितमिति तत्रैवानुसंधेयमिति। एतन्मार्जनानंतरं चित्पतिर्मेत्यादिर्मंत्रत्रयेण
पुनर्मार्जनं। तत्र प्रजापतिऋषिः प्रजापतिर्देवता यजुश्छंदो नास्ति यजमानपावने विनियोगः। मंत्रो यथा। चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता
पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्। अस्यार्थः। चित्पतिः प्रजापतिर्मा मां पुनातु पवित्रं करोतु
केन पवित्रेण कुशेन किंभूतेन अच्छिद्रेण अखंडितेन न केवलं कुशेन सूर्यस्य रश्मिभिरपि मां पुनातु हे पवित्रपते पवित्राणां पते नितरां तस्य मम किंभूतस्य
पवित्रपूतस्य पवित्राणां पूतत्वं न कल्पेन तत्पूतस्य मम पवित्रपूतस्य पवित्रैः पवित्रीकृतस्य यत्कामो यदभिलषितं तच्छकेयं प्राप्नुयाम् किं तदभिलषितं पुने
जलेन आत्मानं पावयामीत्यभिलषितम्। अयं वाक्यार्थः। प्रजापतिना कुशसूर्यरश्मिभ्यां पावितस्य मम जलेनात्मानं पावयामीति यदभिलषितं तत्राहं शक्तो भ
वामि। चित्पतिशब्देन प्रजापतिरुच्यते तत्र प्रजापतिर्वै चित्पतिरिति श्रुतिः प्रमाणम्। द्वितीयमंत्रस्य प्रजापतिऋषिर्यजुः वाक्पतिर्देवता यजमानपावने वि
नियोगः। द्वितीयमंत्रो यथा। ॐ वाक्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्। अत्र वा-
क्पतिर्बृहस्पतिः अपरा सकलैव व्याख्या चित्पतिव्याख्यानेन तुल्या। तथा तृतीयमंत्रस्य प्रजापतिऋषिर्यजुः सविता देवता यजमानपावने विनियोगः। तृतीयो
मंत्रो यथा ॐ देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्। अस्यार्थः। तत्र देवः स-

त्रा॰स॰ विनास्मर्षैः अपरं सर्वं विसृतिर्मंत्रेणतुल्यम्। इतिविसृतिर्मैतिमंत्रत्रयव्याख्या। ततोजलेनिमग्नीभूयाघमर्षणमंत्रं त्रिरावर्त्तयेत्। तत्राघमर्षणमंत्रमाहा-
२७ त्म्ये बौधायनः। कृतं च सत्यं चेत्यघमर्षणमंत्रं त्रिरंतर्जले पठेत्सर्वपापात्प्रमुच्यते। व्यासः। कृतं चेति जपन्यस्मात्पापमामरणांतिकम्। मनोवाक्कायजं स
वमर्षयेदघमर्षणमिति। योगीयाज्ञवल्क्यः। हन्यालोकानिमांस्त्रीन्हि त्रिः पठेदघमर्षणम्। यथाश्वमेधावभृथमेवं तन्मनुरब्रवीत्। तथाश्वमेधः क्रतुरा
ट् सर्वपापापनोदनः। तथाघमर्षणसूक्तं सर्वपापप्रणाशनम्। हारीतः। पातकोपपातकमहापातकादिपापानां सन्निपाते। अघमर्षणमेव जपेत्। अथा
तः सर्वदेवपवित्राणि भवंतीत्यधिकारे बृहद्विष्णुः। स्नानं सर्वैश्श्रुतेः मंत्रैर्मार्जनं प्राणसंयमः। अघमर्षणसूक्तेन अश्वमेधावभृत्समम्। जलेनिमग्नः प्रा-
णान्संयम्य त्रिरावृत्त्याघमर्षणसूक्तेन स्नायादित्यर्थः। शंखः। नास्त्यघमर्षणात्परमंतर्जले। गौतमः। अंतर्जले चाघमर्षणं त्रिरावर्त्तयेत्सर्वपापेभ्यो हि
मुच्यते। अत्रिः। अपिचाप्सुनिमज्जित्वा त्रिः पठेदघमर्षणम्। यथाश्वमेधावभृथं तथैतन्मनुरब्रवीत्। वसिष्ठः। अपिचाप्सुनिमज्जानः त्रिः पठेदघमर्षणम्
। यथाश्वमेधावभृथं तादृशं मनुरब्रवीत्। वृद्धापस्तंबः। अपिचाप्सुनिमज्जित्वा त्रिः पठेदघमर्षणम्। यथाश्वमेधयज्ञो हि मनुस्तादृशमाहतत् बौधायनः। त्रिरा
त्रं चाप्सूपवसेत्रिरह्नोभ्युपयन्नरः। प्राणानात्मनि संयम्य त्रिः पठेदघमर्षणम्। यथाश्वमेधावभृथमेवं तन्मनुरब्रवीत्। योगियाज्ञवल्क्यः। त्र्यहेचोपवसेद्यस्तु
त्रिरह्नोभ्युपयन्नरः। मुच्यते पातकैः सर्वैर्जप्त्वा त्रिरघमर्षणम्। रहस्ये बृहद्यमः। मातरं भगिनीं गत्वा मातृष्वसां स्नुषां सखीम्। अगम्यागमनं कृत्वा अघमर्षणे
नांतर्जले त्रिरावर्त्यैतस्मात्पापात्पूतो भवति। तथा। अथ गुरुतल्पगमनं कृत्वाघमर्षणं अंतर्जले त्रिरावर्त्य तदेतस्मात्पूतो भवति। अत्र पापगौरवमाकलय्य संपते
नमनस्त्रामासैकं वा त्र्यहं जले निमग्नीभूयाघमर्षणसूक्तं त्रिरावर्त्य स्नातव्यम्। तथा च लघुयमः। महापातककर्त्तारश्चत्वारो वा विशेषतः। अग्निं प्रविश्य शुध्यं
निस्नात्वा वा मरणांतिकं तौ। रहस्यकरणे चैव मासमभ्यस्य पौरुषम्। अघमर्षणसूक्तं वाप्सु ध्येतांतर्जले स्थितः। बृहद्यमः। अत्र ब्रह्महत्यां कृत्वा प्राचीमुदीचीं दिशमुप

निष्क्रम्यप्रभूतेनेंधनेनाग्निंप्रज्वाल्याघमर्षणंचाष्टसहस्रमावर्त्यत्रिशुद्धपात्तस्मात्पापात्पूतोभवति ।हारीतः।अघमर्षणमंतर्जलेत्रिरावर्त्यपीत्वामुच्यतेब्रह्महत्या-
याः।अत्रिः।क्षत्रियावैश्याभिगमनेघमर्षणंत्रिरावृत्यांतर्जलेशुध्यति।वृहद्दापस्तंबः।अकार्यकरणेचैवतथाभक्ष्यस्यभक्षणे।अघमर्षणसूक्तेनपीत्वापः
शुध्यतेद्विजः।अत्रिः।अपेयंपीत्वाऽभक्ष्यंभक्ष्यभक्षयित्वाऽकार्यंकृत्वाघमर्षणेनापःपीत्वाशुध्येत।वसिष्ठः।मनसापापंकृत्वाऽघमर्षणंपठेत्।वृहद्दापस्तं
बः।क्षत्रियागमनेवैश्यागमनेचैवतापसींत्रिरावृत्त्यशुद्धःस्यात्शूद्रागमनेष्वघमर्षणम्।तापसीमितिऋचमित्यर्थः।शंखलिखितौ।ब्रह्महात्रिरात्रोपोषितो
र्जलेऽघमर्षणंत्रिर्जपेत।योगियाज्ञवल्क्यः।त्रिरावर्त्योपोषितोजप्त्वाब्रह्महात्वघमर्षणम्।अंतर्जलेविशुध्येतदत्त्वागांतुपयस्विनीम्।एकाशनविषयेबौ-
धायनः।तीर्थंगत्वास्नात्वाततःशुचिवागुदकांतेस्थंडिलमुद्धृत्यसकृत्क्लिन्नेनवाससासकृत्पूर्णेनपाणिनाआदित्याभिमुखोघमर्षणंस्वाध्यायमधीयीत-
प्रातःशतंमध्याह्नेशतमपराह्णेशतमपरिमितंवोदितेषुनक्षत्रेषुप्रसृतयावकंप्राश्नीयात्ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यश्चसप्तरात्रात्पुनीते
द्वादशाहाद्भ्रूणहणंगुरुतल्पगमनंसुवर्णस्तेयंसुरापानमितिवर्जयित्वाएकविंशतिमंत्रानजपतिसर्वेनरतिसर्वंजपतिसर्वंक्रतुमाप्नोतिसर्वतीर्थेषुस्नातोभ
वतिसर्वेदेवेषुचीर्णव्रतोभवतिसर्वैर्देवैर्ज्ञातोभवतिआचतुर्थीसंक्तिपुनातिकर्माणिचास्यसिद्ध्यंति।बौधायनवृहद्विस्मृ एतेनाघमर्षणेनसुरापःपूतोभवति
अघमर्षणानुवृत्तौयोगियाज्ञवल्क्यः।तत्वभूतात्स्वपिंडस्थितत्सुत्पत्तिप्रलयास्तथा।सूक्तेस्मिन्व्याहृतमेतन्मंत्रार्थएषवै।तथा।अघमर्षणसूक्तस्यऋषिर्देवोघ
मर्षणः अनुष्टुप्चभवेच्छंदोभाववृत्तंचदैवतं।अश्वमेधावभृथकेविनियोगोस्यकल्पितः।सर्वपापापनोदार्थंस्मृतिकारैरुदाहृतम्।व्यासः।अघमर्षणएवार्षः
छंदोनुष्टुप्तथैवच।देवताभाववृत्तंचहयमेधःप्रकीर्तितः।अत्रअघमर्षणऋषिर्भाववृत्तोदेवतानुष्टुप्छंदः।अश्वमेधावभृथेविनियोगः।मंत्रोयथा।ॐऋ
तंचसत्यंचाभीद्धात्तपसोध्यजायत।ततोरात्र्यजायततततःसमुद्रोअर्णवः।समुद्रादर्णवादधिसंवत्सरोअजायत।अहोरात्राणिविदधद्विश्वस्यमिषतोवशी।

ऋ॰ स॰ सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत्। दिवंच पृथिवींचांतरिक्षमथो स्वः। अस्यायमर्षणमंत्रस्य व्याख्यायां हृदि प्रकंपो जायते यतः सर्ववेदसारभूतोऽयं तत्सुप्र-
२८ सिद्धोऽयं मंत्रः अस्य पदपाठमात्रं च नास्ति ब्राह्मणनिरुक्तादिकमप्यस्य नास्ति इत्थमेतदीयव्याख्यानुगुणकमप्युपायमप्राप्य यदेतस्य स्वकपोलमात्रेण व्याख्यान
माचरणीयं तदतिसाहसं योगियाज्ञवल्क्येन तु तत्त्वभूताश्च पिंडस्य सुसृष्टिप्रलयं तथा। सूक्तेऽस्मिन्व्याहृतमेतत्तत्त्वमंत्रार्थ एष वेदनिर्वचनात्सृष्टिस्थितिप्र-
लयार्थतास्य प्रतिपादिता। पुराणमहाभारतादिष्वपि तु सृष्टिस्थितिप्रलयप्रतिपादकार्थकग्रंथभागाः समस्तास्तेषां च श्रवणेनोत्कीर्तनेन महाफललाभः
प्रतिपादितः। तदेवं सकलवेदसारभूतस्य सृष्टिस्थितिप्रलयप्रतिपादिताघमर्षणमंत्रस्य स्नानादिना तत्र प्राग्लिखितं नानामुनिवचनप्रतिपादितं फलभू
यस्त्वमुपपन्नमेव। किंचास्मिन्ग्रंथे सकलकर्मकांडोचितमंत्रव्याख्यानस्यैव मुख्यत्वाद्यदास्य सारभूतमंत्रस्यैव व्याख्यानं न क्रियते तदास्य ग्रंथस्य सांग
तानमवेदित्येतादृशदोषभयमात्रेण स्वमतिमानुरूपमेतन्मंत्रव्याख्यानमेव लिख्यते। यथा। ऋतं च सत्यं चेति परमं ब्रह्म उच्यते। तथा च श्रुतिः स्मृतिश्च। ऋ
तमेकाक्षरं ब्रह्म। सत्यं ज्ञानमनंतं ब्रह्मेति। अत्रासीदित्यध्याहार्यं तेनायमर्थः। ऋतं च सत्यं परं ब्रह्म आसीत् एतेन महाप्रलयावस्था प्रतिपादिता महाप्रल
यसमये केवलं परं ब्रह्ममात्रमासीदित्यर्थः ततस्तदनंतरं महाप्रलयावस्थायामेव रात्रिरजायत रात्रिः समुत्पन्ना सकलमंधकारमयमासीदित्यर्थः। तथा-
च श्रुतिः। आसीदिदं तमोभूतमप्रज्ञातमलक्षणमिति। ततस्तदनंतरं महाप्रलयावसाने सृष्ट्यारंभसमये तपसः अदृष्टात् पुनः किंभूतात् अभीद्धात् सर्वतो
भावेन दीप्तत्वात् सर्वतो गतवृत्तिलब्धादित्यर्थः। एवंभूताददृष्टात् पुनः समुद्रो अजायत किंभूतः समुद्रः अर्णवः अर्णः पानीयं तदस्यास्तीत्यर्णवः पानीययु-
क्तः समुद्रः संजायत इत्यर्थः। प्रथमतः सकलसृष्टिनिमित्तं जलराशिरुत्पन्न इत्यर्थः। तथा च स्मृतिः। अप एव ससर्जादौ तासु वीर्यमवासृजदिति। ततस्तदनं २८
तरं समुद्रादर्णवादधि संवत्सरो अजायत किंभूतो धाता मिषत अप्रकटीभूतो विश्वस्य वशी प्रभुः महाप्रलयेन विलुप्तस्यास्य त्रैलोक्यस्य निर्माणे प्रभुरित्यर्थः।

सधाताऽयथापूर्वंयथाक्रमेणसूर्याचंद्रमसावकल्पयत निर्मितवान् किंभूतौसूर्याचन्द्रमसौ अहोरात्राणिविदधत अहोरात्राणिकुर्वाणौसूर्यएवदिव-
संकरोतिचंद्रएवरात्रिंकरोतिततः सूर्यचंद्रयोरुत्पत्त्यनंतरंसंवत्सरोध्यजायतसमुत्पन्नः सूर्यचन्द्रोत्पत्त्यनंतरमेवरात्रिदिवसविभागोऽभवत्।रात्रि
दिवसविभागेसतिसंवत्सरव्यवस्थाभवतीत्यर्थः। अथोअनंतरंदिवंचपृथिवींचअंतरिक्षंचस्वश्चएतान्लोकान्सएवधाताअकल्पयत्सृष्टवान्।चराचरा
त्मकसकललोकानेवसधातासृष्टवानित्यर्थः तत्रस्वःशब्देनस्वर्लोकोपरिस्थः स्वर्गलोकउच्यते। दिवंशब्देनतदूर्ध्वस्थमहर्लोकादिलोकचतुष्टयं
तदनेनमंत्रेणसृष्टिस्थितिप्रलयाः प्रतिपादिताः विदधत इतिद्विवचनेएकवचनम्। अर्णवइति अर्णशब्दादर्णसोलोपश्चेतिवप्रत्ययःसकारलोपश्च।
इत्यघमर्षणमंत्रव्याख्या। ततोऽघमर्षणस्नानानंतरं अंतर्जलेनिमग्नीभूयद्रुपदांत्रिरावर्त्यस्नायात्। तत्रद्रुपदामंत्रमाहात्म्येबृहस्पतिः।द्रुपदानाम
योमंत्रोवेदेवाजसनेयके। अंतर्जलेत्रिरावर्त्यसर्वपापैःप्रमुच्यते।योगियाज्ञवल्क्यः।द्रुपदानामसादेवीयजुर्वेदेप्रतिष्ठिता।अंतर्जलेत्रिरावर्त्यमुच्यते
ब्रह्महत्यया।हारीतः।पवित्रमसिद्रुपदादिवेतिचाघमर्षणमंतर्जले त्रिरावर्तयित्वामुच्यतेब्रह्महत्यया।बौधायनः।द्रुपदादिवमुमुचानेत्यवापूतंत्रि
रंतर्जलेपठन्सर्वस्मात्पापात्प्रमुच्यते।पराशरः।आपत्कालेतुविप्रेणभुक्तंशूद्रगृहेयदि।मानस्ताकेनशुध्येतद्रुपदांवाशतंजपेत्।योगियाज्ञवल्क्यः।आ
चांतःपुनराचामेन्मंत्रवत्स्नानभोजने।द्रुपदांवात्रिरावर्त्यतथाचैवाघमर्षणम्।गायत्रींवात्रिरावर्त्यमहाव्याहृतिभिःसह।सोगांशुप्रणवेनापिआपःपी
ताश्चपापहाः।तथा।कोकिलोराजपुत्रस्तुद्रुपदायाऋषिःस्मृतः।अनुष्टुप्चभवेच्छंदआपश्चैवतुदैवतम्।सौत्रामण्यावभृथस्नानेचविनियोजनम्।
अस्यमंत्रस्यव्याख्यादिकंप्रातःसंध्यायामेवलिखितंतत्रैवानुसंधेयमिति।तदनु अधिकपापनिवर्हणेच्छुरंतर्जलेएवसप्रणवसव्याहृतिसहितसशि
रस्कगायत्र्याप्राणायामत्रयंकृत्वास्नायात्।तथासशिरस्कगायत्रीप्रकरणेशंखः।प्राणायामत्रयंकृत्वास्नानकालेसमाहितः।अहोरात्रकृतात्पाप

ग्रा·स तत्स्मरणादेवमुच्यते। तथा त्रिपदासावित्रीप्रकरणे बौधायनः। अपि वा सावित्रीं पच्छोऽर्धशस्ततः समस्तां त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते। पच्छ इति-
२६ पादशः पादेन पादेनेत्यर्थः एकैकपादेन गायत्र्याः पादत्रयं पठेदित्यर्थः ॐ तत्सवितुर्वरेण्यमित्येकं पादं ॐ भर्गो देवस्य धीमहि इति द्वितीयं ॐ धियो यो नः
प्रचोदयादिति तृतीयम्। अर्धश इति अर्धार्धक्रमेण पूर्वार्धभागं पठित्वोत्तरार्धभागं पठेदित्यर्थः तत्र ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि इत्यर्धं प्र-
थमं ॐ धियो यो नः प्रचोदयादित्यपरमर्धम्। ततः समस्तां सकलां चतुर्विंशत्यक्षरात्मिकामेवैकवारेण पठेदित्यर्थः। अनेन क्रमेण वारत्रयं गायत्रीपा-
ठः पर्यवस्यतीति। तथा प्रणवव्याहृतिशिरःसहितगायत्र्यधिकारे विष्णुधर्मोत्तराग्निपुराणयोः। अंतर्जले त्रिरावर्त्य गायत्रीं प्रयतस्तथा। मुच्यते पातकैः
सर्वैर्यदि न ब्रह्महा भवेत्। तथा। अंतर्जले व्यस्तसमस्तमहाव्याहृतिपाठपूर्वकस्नाने बौधायनः। अपि व्याहृतीर्व्यस्ताः समस्ताश्च त्रिरन्तर्जले पठन् सर्व-
स्मात्पापात्प्रमुच्यते। तत्र व्यस्तसमस्तव्याहृतिर्यथा ॐ भूः ॐ भुवः ॐ स्वः एतास्त्रिरावर्त्य स्नायात्। तथा रहस्ये हृदयमः। अथ चाण्डालादिकुलेषु शौं-
डकुलेषु निकुलेषु दांभिकाभिशस्तकुलेऽन्यस्मिन्वा अभोज्ये पापकर्मणः प्रतिगृह्य भुक्त्वा वा ग्रामात्प्राचीमुदीचीं वा दिशमभिनिष्क्रम्य पृथिव्यां पु
वौदिशोऽप्सु परिप्लवमानः तरत्समंदीं जपति। ॐकारपूर्वव्याहृतीर्वावर्तयेत्तस्मात्पापात्पूतो भवति। तत्र तरत्समंदीमंत्रस्य माहात्म्ये गौतमः। चतुर्व-
वं तरत्समंदीयमप्सु जपेदप्रतिग्राह्यं प्रतिनिषिद्ध्य प्रतिगृह्य वा अभोज्यं वा भुज्य समारणः पृथिवीमाप्लावयेत् त्वं तु रारमण उदकोपस्पर्शनाच्छुचिरेके स्त्रीषु।
अस्य च प्रपत्सां पत्सारक ऋषिर्गायत्री छंदः सोमो देवता मार्जने विनियोगः। मंत्रो यथा। ॐ तरत्समंदी धावति धारा सुतस्यांधसः। तरत्समंदी धावति। उस्रा
वेदवसूनां मर्त्यस्य देव्यवसः। तरत्समंदी धावति। ध्वस्रयोः पुरुषंत्योरासहस्राणि दद्महे। तरत्समंदी धावति। आययोः त्रिंशतं तना सहस्राणि च दद्महे। तरत्स २६
मंदी धावति। तथा रहस्ये। अथ सुरापः कंठमात्रमुदकमवतीर्य सुवसोमस्य प्रसूतस्य प्रसूतिमादाय। ॐकारेणाभिमंत्र्य पित्वा पिबेत्। तत्रो निमज्जमानस्तो-

कोजपेत्। तस्मात्पूतो भवति ब्राह्मणः सुवर्णं हिरण्यं कृत्वा हिरण्यशालायां प्रक्षिप्यास्तु निमज्यमानस्तोकाञ्जपेत् तदेतस्मात्पापात्पूतो भवति। तत्र मानस्तोके इत्यस्य कुत्सऋषिः रुद्रो देवता जगतीछन्दः शतरुद्रीयहोमे विनियोगः मंत्रो यथा। ॐ मानस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे। तत्र मानस्तोके इत्यस्याः ऋचः टीकायाः रुद्रदेवतात्वाद्रुद्र एव संबोध्यते। हे रुद्र मानस्तोके तनये रीरिषः नोऽस्माकं तोके अपत्ये तनये पौत्रे वा मा रीरिषः मा हिंसां कुरु तथास्माकं आयुषि मा रीरिषः अस्माकं गोषु मा रीरिषः अस्माकमश्वेषु मा रीरिषः मा हिंसां कुर्वित्यर्थः। तथा नोऽस्माकमस्मत्संबंधिनो वीरान् दृप्यान् हे भामिनः पुरुषान् तथास्माकं रुद्र भामिनः उग्रबोधयुक्तान् पुरुषान्मावधीर्मा घातय। यस्माद्धविष्मंतो वयं सदमित्सदैव त्वा त्वां हवामहे यस्माद्धविर्गृहीत्वा यज्ञकरणार्थं त्वां प्रार्थयामह इत्यर्थः। इति मानस्तोकमंत्रव्याख्या। इति स्नानं समाप्य जलाद्बहिर्निर्गत्य धौते वाससी परिधाय प्रक्षालितपाणिपादः पवित्रपाणिराचम्य प्रातःसंध्योक्तविधिनैव मध्याह्नसंध्यामपि कुर्यात्। अयं तु विशेषः। प्राणायामानंतरमाचमनमापः पुनंत्वित्यनेन मंत्रेण कुर्यात्। तत्र वसिष्ठऋषिरापो देवतानुष्टुप्छंदः उपस्पर्शने विनियोगः। मंत्रो यथा। ॐ आपः पुनंतु पृथिवीं पृथ्वी पूता पुनातु माम्। पुनंतु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम्। यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम। सर्वं पुनंतु मामापोऽसतां च प्रतिग्रहं स्वाहा। अस्यार्थः। आपः पृथिवीं पुनंतु पवित्रीकुर्वंतु पृथ्वी पूता अद्भिः पूता सती मां सेवमानं पुनातु न केवलमापः पृथिवीं पुनंतु ब्रह्मणस्पतिं तान्नस्य पतिं आश्चर्यं परमात्मानमपि पुनंतु तद्ब्रह्म पूता मां पुनातु अत्र पृथिवीपदेन पार्थिवदेहो लक्ष्यते तत्र च आपः पृथिवीं पुनंतु इति मदीयं पार्थिवं देहं पुनंत्वित्यर्थः। इत्थं चेह पावनद्वारा मामापः पुनंतु कुत्र मम यदुच्छिष्टमपावनं अभोज्यं गर्हितं भोज्यं च यद्वा यद् दुश्चरितमसदाचरणं असतामप्रतिग्राह्याणां प्रतिग्रहं च तत्सर्वं तत्र सर्वत्र मामापः पुनंत्वित्यर्थः। इत्यमाशास्यापः आचम्यं ते ताः स्वाहा सुहुता भवंतु। अपामन्त्रि

या॰स॰ त्रिराचमनेन मदीयदेहपादनपूर्वं शुद्धिकृत्वा दिरूपेणापे मां पावयंत्विसाशंसावाक्यार्थः। अंत्र पतिरितिसुपांसुपो भवंतीति त्रिद्वितीयायां प्रथमा
३० ब्रह्मपूता इति पूतमिति प्राप्ते लिंगव्यत्ययेन स्त्रीलिंगिता। सर्वमिति सप्तमीस्थाने द्वितीया। इत्यापःपुनंतु मंत्रव्याख्या। इत्याचमनं कृत्वा प्रातःसंध्योक्तक्र
मेण गायत्रीजपांतं कर्म समाप्य पूर्वोक्तमंत्रेण प्रदक्षिणमावृत्यादित्यं नमस्कृत्य ब्रह्मयज्ञं कुर्यात्। तत्र ब्रह्मयज्ञमाहात्म्यं छंदोगपरिशिष्टे कात्याय-
नः नब्रह्मयज्ञादधिकोस्तियज्ञो न तत्प्रदानात्परमस्तिदानम्। सर्वेतदंतः क्रतवः सदाना नान्तो दृष्टः कैश्चिदस्य द्विनस्य द्विजस्येति ब्रह्मयज्ञप्रदानयोः। याज्ञ
वल्क्यः। यज्ञानां तपसां चैव शुभानां चैव कर्मणाम्। वेद एव द्विजातीनां निःश्रेयसकरः परः। मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः। पितॄन्मधुघृताभ्यां-
च ऋचोधीते तु योन्वहम्। यजूंषि शक्तितोधीते योन्वहं स घृतामृतैः। प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा। स तु सोमघृतैर्देवांस्तर्पयेद्योन्वहं पठेत्
सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा। मेदसा तर्पयेद्देवानथर्वांगिरसः पठन्। पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः। वाकोवाक्यं पुराणं च
नाराशंसीश्च गाथिकाः। इतिहासांस्तथा विद्या योधीते शक्तितोन्वहम्। मांसक्षीरौदनमधुतर्पणं स दिवौकसाम्। करोति तृप्तिं च तथा पितॄणां म-
धुसर्पिषा। ते तृप्तास्तर्पयंत्येनं सर्वकामफलैः शुभैः। यं यं क्रतुमधीयीत तस्य तस्याप्नुयात्फलम्। त्रिवित्तपूर्णपृथिवीदानस्य फलमश्नुते। तपसश्च
परस्येह नित्यं स्वाध्यायवान्द्विजः। तथा ब्रह्मयज्ञानुष्ठानप्रतिपादने योगियाज्ञवल्क्यः। प्रदक्षिणं समावृत्य नमस्कृत्योपविश्य च। दर्भेषु दर्भपाणिः स
म्याङ्मुखस्तु कृतांजलिः। स्वाध्यायं तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत्। ऋचां च यजुषां साम्नां गाथां गुह्यां यथाविधि। आदावारभ्य वेदं तु स्नात्वोपक्रु
पक्रमात्। यदधीतेन्वहं शक्त्या स स्वाध्याय इति स्मृतः। स्नात्वा मध्याह्नस्नानं कृत्वा योधीते वेदं स प्रथमकंडिकामारभ्य कृत्स्नवेदसमाप्तिपर्यंतं ३०
यावद्भिर्दिवसैः शक्नोति तावद्दिवसैः क्रमेण कृत्स्नं वेदं पठेत्। अनधीन कृत्स्नवेदस्तु यावदधीतवेदपुराणस्तवादिकं यथाशक्ति पठेदित्यर्थः। आके

साधान्मस्वाध्यायाद्धि परमं तप्यते तपः । यस्त्वंगविद् द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् । स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् । ब्रह्मयज्ञानुष्ठानस्येतिकर्तव्यता
पांडहालिंग कुराणम् । एवमीस्तीर्य चाबम्यदर्भ पिंजुलमात्मनः । कृत्वा पाणितलेधीमानात्मनो दक्षिणोत्तरम् । हेमांगुलीयसंयुक्तो ब्रह्मबंधयुतोपि वा । विधिव
द्ब्रह्मयज्ञं तु कुर्यान्मंत्री समाहितः । तथा शौनकः । प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य यज्ञोपवीत्यक्लिन्नवासा दर्भानुपस्तीर्य प्रागग्रेषु कुशेषु प्राङ्मुख उपविश्य
दक्षिणोत्तरौ पाणी संधाय पवित्रवंतौ द्यावापृथिव्योः संधिमीक्ष्यमाणः संमील्योन्मील्य वाचक्षीय यथायुक्तमात्मानं मन्येत तथायुक्तोऽधीयीत स्वाध्यायमिति
यत्तु नरत्नापि दर्भः पवित्रमिति स्मृतिदर्शनात् । पवित्रपदं दर्भमात्रं वदंतीति केचित् । तच्छिष्टाचारविरुद्धं यतः सर्व एवानुष्ठातारः प्रादेशमात्रत्वादिलक्षणमुक्तमे
व पवित्रं गृहीत्वैव ब्रह्मयज्ञं कुर्वंति । पवित्रपदं तादृशमेव युक्तं । तथा दक्षिणोत्तरौ पाणी संधायेति । पाणी इति द्विवचनेनैव दक्षिणवामहस्तयोरुपादाने सिद्धे दक्षिणो
त्तरमित्यभिधानाद्दक्षिणहस्त उत्तरपरिभाषीययोर्हस्तयोस्तौ दक्षिणोत्तराविति बोद्धव्यम् । एवं सति प्राङ्मुखः प्रागग्रेषु कुशेषूपविश्य वामहस्ततले कुशपवित्रे
कृत्वा तदुपरि दक्षिणहस्तमधोमुखं कृत्वोंकारपूर्विकां गायत्रीं पठित्वा ऋग्वेदादींश्चतुरो मंत्रान्पठेत् । तत्र ऋग्वेदादिमंत्रस्य मधुच्छंद ऋषिर्गायत्रीछंदोऽग्निर्देवता
स्वाध्याये विनियोगः । मंत्रो यथा । ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं । होतारं रत्नधातमम् । अस्यार्थः । अग्निं देवं ईळे स्तौमि किंभूतं पुरोहितं पुरः प्रथमतो हितं
आहितं अर्पितमिति यावत् । पुनः किंभूतं यज्ञस्य ऋत्विजं यजमानानुरोधेन यागकारी ऋत्विक् अग्निश्च यजमानाभ्युदयाय यागकारी ऋत्विगुच्यते । अपि किंभूतं होता
रं होमस्य प्रधानसाधने कर्तृभूतं । पुनः किंभूतं रत्नधातमं रत्नं सुवर्णादि तद्दधातीति रत्नधा अतिशयेन रत्नधाः रत्नधातमस्तं । तद्रूपं वाक्यार्थः । प्रथमतोऽर्थितं धनं-
दातारमग्निं स्तौमि ततो अयमग्निर्मह्यं धनं ददात्विति । इत्यग्निमीळे मंत्रव्याख्या । यजुर्वेदादिमंत्रस्य परमेष्ठी प्रजापतिऋषिर्यजुः पांक्तं छंदो नास्ति शाखावत्सगावो देव
ता शाखाच्छेदने समुन्नयवत् सापाकापाकरणे शाखया गोपस्पर्शने च विनियोगः । मंत्रो यथा । ॐ इषे त्वोर्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे

वा.स. आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा व स्तेन ईशत माघशंसो ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि इषे त्वेति द्विपद
३१ स्य प्रस्तारो मंत्रो दैव्य अनुष्टुप्। अस्यार्थः। हे शाखे त्वा त्वां इषे वृष्ट्यै छिनद्मीति। ऊर्जे त्वा इति द्विपदस्य प्रस्तारो मंत्रः दैव्यनुष्टुप्। अस्यार्थः। हे शाखे त्वा त्वां ऊर्जे रसा
य संनयामि अत्र मंत्रद्वये छिनद्मि संनयामीति यथाक्रमं क्रियापदमध्याहरणीयम्। वायवस्थ इति द्विपदस्य बृहत्यनुष्टुब्वा प्रस्तारो मंत्रः। अस्यार्थः हे वत्सा वायवस्थ यथा वा
युर्वृष्ट्यादिद्वारेण जगतामाप्यायकः तथा यूयं धेनुप्रसूतिद्वारेण यज्ञनिष्पत्तिकारिणः यज्ञाद्वृष्टिरिति परंपरया जगतामाप्यायकाः स्थ भवथ। देवो वः सविते
त्याद्यवशिष्टः प्रस्तारोपरो मंत्रः। अस्यार्थः। देवः दानादिगुणयुक्तः वो युष्मान्कर्मणे यज्ञाय प्रार्पयतु किंभूतो देवः सविता जगतां प्रसविता किंभूताय कर्मणे श्रे
ष्ठतमाय अतिप्रेष्ठाय। अत्र इषे इति इषु इच्छायामित्यतः संपदादित्वात्क्विप्प्रत्ययस्तेन इष्शब्दस्य हलंतस्य व्युत्पत्तिः। अनेन च सर्वेषामिष्यमाणतया वृ
ष्टिरुच्यते। यथाप्श्रुतिर्वृष्ट्यै तदाह यथेषे त्वेति। वृष्टिः सर्वैरपेक्ष्यते। इषे इति तादर्थ्ये चतुर्थी। त्वा इति द्वितीयैकवचनं युष्मच्छब्दस्यानेत्वामौ द्वितीयाया इति
त्वादेशः। वृष्ट्यर्थं त्वा शाखां छिनद्मीत्यर्थः। ऊर्जे इति। ऊर्ज बलप्राणधारणयोः। अस्मात्क्विप्प्रत्ययेन ऊर्जे इति। हलंतपदव्युत्पत्तिः तादर्थ्ये चतुर्थी अनेन जग
तां बलहेतुत्वाद्रसोऽभिधीयते। ऊर्जे रसाय त्वां संनयामीत्यर्थः। श्रेष्ठतमाय कर्मणे इति यज्ञोऽभिधीयते। अत्र श्रुतिः प्रमाणम् यज्ञो वै श्रेष्ठतमं कर्म इति द्वितीया
बहुवचनात् युष्मच्छब्दस्य स्थाने बहुवचनस्य वस्नसाविति वसादेशः। अग्निहोत्रकर्तव्यदर्शपूर्णमासे सान्नाय्यस्योत्पादनेनाभिष्टुतुभिर्मंत्रैः शाखाछेदनेशाखा
नयने शाखाया वत्सोपस्पर्शने शाखा वत्सधेनवः प्रार्थ्यंत इति पूर्वार्द्धऋग्व्याख्यार्थः। अथोत्तरार्द्धव्याख्या। अप्यायध्वमित्यत्र ओप्यायी वृद्धौ णिचो लोपः अ
प्यायध्वं हे अघ्न्या गावः कं इंद्राय भागं तादर्थ्ये चतुर्थी इंद्रार्थो यो भागस्तं इति संबंधः। इंद्रो हविर्भोक्तृक यथभूताः संतः प्रजावतीः वाह्वदसी विदीर्घत्वं प्रजावत्सः ३१
जीवद्वत्साः अनमीवाः अमरोगे अमीवा व्याधिरभिधेयः न विद्यते अमीवा यासां तथोक्ताः। अयक्ष्माः व्याधीनां राजा यक्ष्मा स यासां विद्यते याः प्रभक्षणार्थे

ताः अपक्ष्माः अनिवारितो गोभ्रचर इत्यर्थः। किंच सावः पुष्माकं स्तेनश्योर ईशत। मा ऽइस्तुउ। मा पुष्माकं चौरः ईषत्कार्षीदित्यर्थः। माघः अघशंसः अघ
पापं यः शंसतीति भरसरणार्थं कृत्वा इको वाचां उलोवा सच मा ईशत किंच ध्रुवाः शाश्वतिकाः अस्मिन्गोपतौ यजमाने स्यात् भवेत् वह्वीर्बह्वयः शाखामुपस्पृ
हति यजमानस्य पशून्याहि यजमानस्य संबंधिनः पशून्प्राकृतं गोवत्सं अभिप्रेतं देहांगभूतं पाहि गोपय इति इषेत्वा मंत्रव्याख्या। सामवेदादिमंत्रस्य गौ
तमऋषिर्गायत्रीछंदो ऽग्निर्देवता स्वाध्याये विनियोगः। मंत्रो यथा। ॐ अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि वर्हिषि। अस्यार्थः। हे अग्ने
आयाहि आगच्छात्र मम कर्मणि सन्निहितो भवेत्यर्थः। किमर्थं वीतये खादनाय अस्मद्होतव्यस्यान्नस्य खादनायेत्यर्थः किंभूतस्त्वं गृणानः स्तूयमानः कि
मर्थं हव्यमन्नं तस्य दातये दानाय न केवलं आयाहि अपितु वर्हिषि आस्तृतकुशे सत्सि सीद स्थितो भवेत्यर्थः। किंभूतस्त्वं निहोता निरवशेषहोता सांगहोम
स्य प्रधानसाधनतया कर्तृभूत इत्यर्थः। हे अग्ने यज्ञकर्मणि देयस्य हविषो ऽदनाय आगत्य वर्हिषि निषीद इत्यग्नौ प्रार्थनावाक्यार्थः। अत्र वीतय इति वी प्रज-
नगतिकांत्यशनखादनेषु इति धातोः क्तिः। न्प्रत्यये रूपम्। इति अग्न आयाहि मंत्रव्याख्या। अथर्ववेदादिमंत्रस्य दध्यङ्ङाथर्वण ऋषिर्गायत्री छंदः आपो
देवता शांतिकर्मणि विनियोगः। मंत्रो यथा। ॐ शन्नो देवीरभिष्टय आपो भवंतु पीतये। शंयोरभिस्रवंतु नः। अस्यार्थः। आपः नो ऽस्माकं शं कल्याण्यो भवंतु किंभू
ताः देवीर्देव्यः स्तुत्यादिविषया इत्यर्थः। किमर्थं अभिष्टये उपचयार्थं पीतये पानार्थं। किंच नो ऽस्माकं शंयोः कल्याणयोगाय अभिस्रवंतु अभिमुखं आगच्छंतु।
अयं वाक्यार्थः। आपो अस्माकमुपचयाय पानार्थं कल्याणयोगाय भवंत्वित्याशंसा। एतद्वेदादिमंत्रचतुष्टयं पठित्वेच्छातो परमपि वेदवेदांगपुराणेतिहास
स्मृत्यादिकं यथाशक्ति पठेत्। इति शन्नो देवीरिति मंत्रव्याख्या। इति ब्रह्मयज्ञं कृत्वा तर्पणं कुर्यात्। अत्र तर्पणविधौ शातातपः। तर्पणं तु शुचिः कुर्यात्प्रत्यहं-
स्नातको द्विजः। देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्। मनुशातातपयोगियाज्ञवल्क्याः। यद्देवतर्पयत्यद्भिः पितॄन्स्नात्वा द्विजोत्तमः। तेनैव। सर्वमाप्नोति

ब्रा०स० पितृप्रतिक्रियाफलम्।योगियाज्ञवल्क्यः।नास्तिक्यादथवालौल्यान्नतर्पयतिवैसुतः।पिबंतिदेहनिःस्रावंपितरोस्यजलार्थिनः।नपीशमिसनुदृत्तौद्धृदोगव-
३२ रिष्टिष्टेकास्नायनः।तस्मात्सदैवकर्तव्यमकुर्वन्महदेनसा।युज्यतेब्राह्मणःकुर्वन्विश्वमेतद्बिभर्तिहि।विष्णुः।स्नातश्चार्द्रवासास्वेपितृतर्पणमंभस्थएवकुर्या
त्।तर्पणविधौशातातपः।तर्पणंतुपरिवर्तितवासाश्चेत्तीरादुत्तीर्य।योगियाज्ञवल्क्यः।यत्राप्सुविस्थलंवास्यादुदकेदेवतापितॄन्।तर्पयेयुर्यथाकाममप्सु
सर्वप्रतिष्ठितम्।सुमंतः।जलार्द्रवासाःस्थलगोयःप्रदद्याज्जलांजलिम्।वस्त्रनिष्पीडनंप्रेताअपवार्यपिबंतिहि।शंखः।नोदकेषुनपात्रेषुनक्रुद्धोनैकपाणि
ना।नोपतिष्ठतितत्तोयंयन्नभूमौप्रदीयते।शंखलिखितौ।नेष्टकचितेपितॄंस्तर्पयेत्।वापीकूपतडागोदपानेषुसप्तपंचत्रीन्वापिंडानुद्धृत्यस्नायात्।अयम
भिप्रायः।स्नानार्थिनास्नानपूर्वकालेएतापिंडाःसमुद्धरणीयाः।स्नानाशक्तेनतर्पणमात्रार्थिनापितानपिंडानुद्धृत्यतर्पणीयम्।मार्कंडेयपुराणे।यत्न
सर्वापचोत्सृष्टंयथाभोज्यनिपानजम्।तद्वर्ज्यसलिलंतावत्सदैवपितृकर्मणि।सुमंतुः।आकाशेचक्षिपेद्वारिजलस्थोदक्षिणामुखः।पितॄणांस्थानमाका
शंदक्षिणादिक्तथैवच।यमः।त्रींस्त्रीञ्जलांजलीन्दद्यादुच्चैरुच्चतरंततः।गोशृंगमात्रमुद्धृत्यजलमध्येजलंक्षिपेत्।शंखः।विनारूप्यसुवर्णेनविनाताम्रति
लैस्तथा।विनादर्भैश्चमंत्रैश्चपितॄणांनोपतिष्ठते।सौवर्णराजताभ्यांचखड्गेनौदुंबरेणच।दत्तमक्षय्यतांयातिपितॄणांतुतिलोदकम्।मरीचिः।तिलाना
मप्यभावेनसुवर्णरजतान्वितम्।तदभावेनिषिंचेत्तुदर्भैर्मंत्रेणवापुनः।राजतेमनसायातिसुवर्णेहस्तनिर्गतम्।तिलेषुतत्क्षीरणादुद्धृत्यामेषुहिमुहूर्त-
कम्।दर्भैःसममुहूर्तेनमंत्रयुक्तंतदक्षयम्।शंखः।हैमेनसहयद्दत्तंक्षीरेणमधुनासह।तदप्यक्षय्यतांयातिपितॄणांतुतिलोदकम्।तथा।सौवर्णेनतुपा
त्रेणराजतौदुंबरेणच।खड्गपात्रेणवाशंकुनावापिउदकंपितृतीर्थस्पर्शनंदद्यात्।अत्रशंकुनेतिखड्गपात्रघटनाशक्तौअविकृतिनाखड्गगुणकेनेत्यर्थः
योगियाज्ञवल्क्यः।यद्युद्धृतंप्रसिंचेत्तुतिलान्संमिश्रयेज्जले।अतोन्यथातुसव्येनतिलायायाविषसरोः।दक्षिणेपितृतीर्थेननर्लंसिंचेद्यथाविधि ३२

दक्षिणेनैव तु गृह्णीयात् पितृतीर्थसमीपतः। अत्र दक्षिणेन तु गृह्णीयादिति जलं गृह्णीयादित्यर्थः। तथा। शुक्लैस्तु तर्पयेद्देवान्मनुष्यान् शबलैस्तिलैः। पितॄंस्तु
तर्पयेत्कृष्णैस्तर्पयन्सर्वदा द्विजः। तथा देवतर्पणविधौ। ब्राह्म्याद्यानुपवीती तु देवतीर्थेन तर्पयेत्। निवीती कायतीर्थेन मनुष्यान्सनकादिकान्। अत्र कायतीर्थं
प्राजापत्यम्। मनुः। उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः। सव्ये प्राचीनावीती निवीती कण्ठसज्जने। देवादितीर्थान्याह याज्ञवल्क्यः। कनिष्ठदेशिन्यंगुष्ठ
मूलान्यग्रं करस्य च। प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्। दैवादिकर्मसु कुशाग्रवस्थायां पिंडपितृयज्ञवांत्सरणम्। अग्रमेव देवानां मध्यमेव मनुष्याणां
मूलमेषां पितृणामिति तैत्तिरीयप्रमाणं वाजसनेयं तु अग्रमिव देवानां मध्यमिव मनुष्याणां मूलमिव पितृणामिति वाजसनेयब्राह्मणमपि प्रमाणम्। छंदो
गपरिशिष्टम्। यवाद्भिस्तर्पयेद्देवान्सतिलाद्भिः पितॄनपि। तत्र तिलसंख्यामाह देवलः। तर्पणे पितृयज्ञादौ तिलो भागोपमो भवेत्। दर्शमिश्रतिलैस्तेन पि
तॄन्संतर्पयेत्सदा। तिलैः सप्ताष्टभिर्वापि पितॄणां तृप्तिरुत्तमा। अग्निस्तम्भभयाद्देवनचेच्छन्ति विस्तरम्। विशेषात्कुशसंसर्गान्यायसाद्दधिकं भवेत्।
ततः संतर्पयेदित्यधिकारे योगियाज्ञवल्क्यः। अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। तृप्यतामिति सेक्तव्यं नाम्नां तु प्रणवादिना। आवाह्य पूर्ववन्मंत्रैरा-
स्तीर्य च कुशान्शुभान्। प्रागग्रेषु सुरान्सम्यग्दक्षिणाग्रेषु वै पितॄन्। ब्रह्मपुराणम्। खड्गास्थिपात्रे कर्तव्यं पितृदैवानुतर्पणम्। योगियाज्ञवल्क्यः। सव्यं
जानु ततो नाम्य पाणिभ्यां दक्षिणामुखः। तल्लिंगैस्तर्पयेन्मंत्रैः सर्वान्पितृगणांस्तथा। मातामहांश्च सततं श्रद्धया तर्पयेद्बुधः। प्राचीनावीत्युदकं प्रसिंचेद्दै-
तिलान्वितम्। अत्रावाह्य पूर्ववन्मंत्रैरिति। याज्ञवल्क्यः। संहितायां श्राद्धप्रकरणोक्तैर्विश्वेदेवास आगतेति विश्वेदेवाः शृणुतेममिति देवानुशंतस्त्वेसा
यंतु न इति मंत्राभ्यां पितॄनावाहयेदित्यर्थः। तथा तल्लिंगैरिति। ऊर्जं वहंतीरित्यादिभिः पितृतृप्तिप्रकाशकैरित्यर्थः। देवतर्पणानंतरं। पद्मपुराणे। कृत्वोपवीती दे
वेभ्यो निवीती च भवेत्ततः। मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा। सनकश्च सनंदश्च तृतीयश्च सनातनः। कपिलश्चासुरिश्चैव वोढुः पंचशिखस्तथा।

श्रा·स उदत्वाद्यभिधायदेवानृषीन्सर्वांस्तर्पयेदसनोदकैः।शातातपः॥वसून्रुद्रांस्तथादित्यानृषींश्चैवयथाक्रमम्।सुपूर्वाभिमुखःस्थित्वाजलमध्येतुतर्पयेत्।वा
३३ युपुराणे।सव्येनवैकृत्वादैवेदर्भान्विचक्षणः।दद्यात्तुद्विगुणंपित्र्येअपसव्येनपार्थिव।लघुविष्णुः।निवीतंकारणमनुष्यांस्तर्पयेदथ।कुशमध्यप्रदेशेनतु
तीर्थेनातुदउ·मुखः।गोभिलधृतसंहितायाम्।एकैकमंजलिंदेवाद्वौद्वौतुसनकादयः।अर्हंतिपितरस्त्रींस्त्रींस्त्रियश्चैकैकमंजलिम्।हारीतः।देवांश्छंद
सिवेदानृषीन्पुराणाचार्यान्गंधर्वानितराचार्यान्मनुष्यान्कलाःकाष्ठानिमेषान्मुहूर्तान्होरात्रानर्द्धमासान्मासानृतून्संवत्सरान्सादवान्।म-
नुष्यानाह।योगियाज्ञवल्क्यः।सनकश्चसनंदश्चतृतीयश्चसनातन।कपिलश्चासुरिश्चैववोढुःपंचशिखस्तथा।एतेब्रह्मसुताःसप्तमनुष्याःप्रकीर्ति
ताः।कव्यवाडनलंसोमंयमंमर्यमणंतथा।येभ्योवापिपितादद्यात्तेभ्योवापिप्रदापयेत्।हारीतः।नाराशर्यःपराशर्यःशुकःशाकल्योयाज्ञवल्क्योजातू
कर्ण्यःकात्यायनआपस्तंबोबौधायनोवाचिकुटीवैजवापीकुहूलोकाक्षीमैत्रायणीरित्येतानृषीन्।कात्यायनः।यमायधर्मराजायमृत्यवेचांतकायच।वै-
वस्वतायकालायसर्वभूतक्षयायच।औडुंबरायदध्नायनीलायपरमेष्ठिने।वृकोदरायचित्रायचित्रगुप्तायतेनमः।एकैकस्यतिलैर्मिश्रांस्त्रींस्त्रीन्दद्या
ज्जलांजलीन्।यावज्जीवकृतंपापंतत्क्षणादेवनश्यति।योगियाज्ञवल्क्यः।एतांश्चवक्ष्यमाणांश्चप्रमीतपितृकोद्विजः।तथाचार्यान्पितॄन्स्वांश्चपितृप्रभृति
नामतः।मंत्रैश्चदेयमुदकंपितॄणांप्रीतिवर्द्धनम्।उदीरतामांगिरसमायांत्विदूर्जेमिसपि।पितृभ्यइतिचैवेहमधुवाताइत्यृचा।पितॄन्ध्यायन्दसिंचञ्च
जपन्मंत्रान्यथाक्रमम्।तृप्यध्वमितिचत्रिवैततःप्रांजलिरानतः।नमोवइतिजप्त्वावैततोमातामहान्सखीन्।तर्पयेदानृशंस्यार्थंधर्मेपरममास्थितः।
मातामहान्स्वसाश्चैवदुहिताचस्वसातथा।शिष्यर्त्विग्बांधवाश्चैवज्ञातयोगुरवस्तथा।नामगोत्रस्वधाकारैस्तर्प्याःस्युरनुपूर्वशः।जातूकर्ण्यः।प्रमीतपि ३३
तृकस्तुउच्यंतस्तेसावाग्रनामगोत्रमुच्चार्ययावतांपितृकार्यमसावेतनेउदकमिति॥पितॄन्पितामहांश्चपितामहानेकैकस्मैत्रींस्त्रीञ्जलांजलिंदद्यात्

॥तथा॥ हारीतः। नामगोत्रयोरुक्तिर्वहंतीरिति प्रत्यासत्त्यास्मानवस्य मार्गाऽप्यस्त्वपितृस्मर्यये दिति॥ अथ तर्पणानुष्ठानम्। तत्र प्राङ्मुख उपवीती उपवि-
ष्टप्रागग्रान्कुशानास्तीर्य दक्षिणहस्तेन यवान्गृहीत्वा देवानावाहयेत्। तत्र मदऋषिर्विश्वेदेवा देवता गायत्री छंदः अग्निष्टोमे विश्वेदेवग्रहणे विनियो-
गः। मंत्रो यथा। ॐ विश्वे देवास आगत शृणुता म इमं हवं। एदं बर्हिर्निषीदत। अस्यार्थः। हे विश्वे देवाः यूयं मे मम इदं हवं आह्वानं शृणुत शृणुत श्रु-
त्वा च आगत आगच्छत आगत्य च इदं बर्हिः कुशाः आ निषीदत आसनार्थमुपकल्पिते बर्हिषि उपविष्टा भवतेत्यर्थः। अत्र विश्वे देवा स इति संबोधने प्रथमाबहु-
वचने आज्जसेरसुगिति असुगागमेन रूपम्। शृणुतारति। शृणुत इत्यत्र तस्य तादेशे ति तकारस्य तादेशः। आगतेति। आगच्छत इत्यत्र गमो वलीविपर्य-
येति छकारलोपः। आनिषीदतेति छंदसि परेपि व्यवहिताश्चेति पाणिनिस्मरणात् व्यवहितेनाप्याङा निषीदतेत्यस्य संबंधः। एदं बर्हिरिति आङ् कर्मप्र-
वचनीययुक्ते द्वितीयेति सप्तम्यर्थे द्वितीया। इति विश्वेदेवासमंत्रव्याख्या। एतं मंत्रं पठित्वा यवान्विकीर्य बद्धांजलिः पठेत्। ॐ विश्वे देवाः शृणुतेमं हवं मे
ये अंतरिक्षे य उप द्यवि ष्ठ ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम्। अस्याः सुहोत्र ऋषिः विश्वे देवा देवता त्रिष्टुप् छंदः सर्वमेधे वैश्वदेव-
ग्रहणे विनियोगः। अस्यार्थः। हे विश्वे देवाः यूयं मे मम इमं हवं आह्वानं शृणुत किंभूता यूयं ये अंतरिक्षे आकाशे निष्ठथ ये उप समीपे पृथिव्यां द्यवि स्वर्गे द-
योरपि तिष्ठथ इत्यनेन संबंधः। एतदुक्तं भवति। भूमौ आकाशे स्वर्गे च स्थिता ये विश्वे देवाः केन अग्निजिह्वाः अग्निरेव जिह्वा हविर्भोजनसाधनं येषां उत वा
अपि वा ये यजत्राः यजंते प्राज्ञकारिणः त्रायंत इति यजत्राः। पुरूरवो माद्रवप्रभृतयः ये यूयं अस्मिन्नुद्दिते बर्हिषि कुशे आसद्य उपविश्य मादयध्वं महो हर्षस-
हिता भवत मादयध्वमिति स्वार्थे णिच् स्वादेव्यु देवा रसका इस च तेषा मारस भूतं तु दैवं पूर्वानिर्यानयदिति स्मृतिप्रमाणमिति विश्वे देवाः शृणुतेमंत्र-
व्याख्या। एवं मंत्रं पठित्वा प्रागग्रान्कुशानास्तीर्य तदुपरि वामहस्तान्वारब्धदक्षिणहस्तेन कुशानुकुशाग्रेण देवतीर्थेन यवोदकेन देवाः छंदांसि वेदास्त्र-

षयः पुराणाः पुराणाचार्याः गंधर्वा इतराचार्या मनुष्याः कलाः काष्ठाः निमेषा मुहूर्ता अहोरात्रा अर्द्धमासा ऋतवः संवत्सराः मावयवा इति प्रत्येकं तृप्यता
मिति क्रियापदं दत्वा। ॐ देवाः स्तृप्यतां छंदांसि तृप्यंतामित्यादिवाक्येन हारीतोक्तमष्टादश देवतानां तर्पणं कुर्यात्। ततो निवीती उदङ्मुखः कुशमध्येन मनु
ष्यतीर्थेन केवलेन यवोदकेन वा उत्तराग्रकुशोपरि सनकः सनंदनः सनातनः कपिलः आसुरिर्वोढुः पंचशिख इत्यत्र प्रत्येकं तृप्यतामिति क्रियापदं दत्वा। ॐ
सनकस्तृप्यतामिति वाक्येन। योगियाज्ञवल्क्योक्तसप्त मनुष्यतर्पणं कुर्यात्। ततः प्राचीनावीती दक्षिणाभिमुखो भस्मकुशान् पितृतीर्थेन तिलोदकेन
दक्षिणाग्रकुशोपरि स्वर्णपात्रोपरि ॐ कव्यवाडनलस्तृप्यतां अनलः सोमः यमः अर्यमा अग्निष्वात्ताः स्तृप्यंतां सोम्याः बर्हिषदः। योगियाज्ञवल्क्योक्तस
प्तपितृतर्पणं कुर्यात। ततोऽनेन विधानेन नाराशर्य्यः पाराशर्य्यः शुकः शाकल्यः याज्ञवल्क्यः जातूकर्ण्यः कात्यायनः आपस्तंबः बौधायनः वाचिकुटी वै
जवापी हूहूः लोकाक्षीः मैत्रायणीः ऐंद्रायणी इत्यत्र तृप्यतामिति प्रत्येकं क्रियापदं प्रदाय ॐ नाराशर्य्यस्तृप्यतामित्यादिवाक्येन हारीतोक्तपंचदशर्
षितर्पणं कुर्यात्। ततोऽनेनैव क्रमेण। यमाय धर्मराजाय मृत्यवे चांतकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च। औदुंबराय दध्नाय नीलाय परमेष्ठिने। वृ
कोदराय चित्राय चित्रगुप्ताय वै नमः। इत्यत्र प्रत्येकं नमः इति दत्वा यमाय नमः इत्यादिवाक्येन कात्यायनोक्तचतुर्दश यमानां प्रत्येकं त्रीन् त्रीन् तिलांजलीन् दद्यात्
। ततस्तिलान् गृहीत्वा। मंत्रो यथा। ॐ उशंतस्त्वा निधीमह्युशंतः समिधीमहि। उशन्नुशत आवह पितॄन् हविषे अत्तवे। अग्निर्देवतोयं मंत्रः। उशंतस्त्वेत्यस्य
शंखऋषिस्त्रिष्टुप् छंदः पितरो देवता सौत्रामण्यामग्न्युपस्थाने विनियोगः। अस्यार्थः। हे अग्ने त्वां वयं निधीमहि आदधीमहि आधानं कुर्म इत्यावत्
पूर्वमिध्याहार्यं किंभूता वयं उशंतः इच्छंतः। किंच उशंत एव वयं त्वां समिधीमहि ज्वालयामः त्वं चास्माभिराहितो ज्वालितश्च पितॄनग्निष्वात्तादीन् ३५
आवह आनय सर्वः किंभूतस्त्वं उशन् इच्छन् किंभूतान् पितॄन् उशंतः इच्छंतः किमर्थमावाहनमित्यत आह हविषे आनते अस्मद्दत्तहविषः भक्षवे अत्तुम्

यहे अग्ने अस्माभिराधानज्वालनाभ्यामाराधितस्त्वमस्माकं पितॄन् प्राहं इदं यस्मद्विधाम सकर्णायानयत्यग्ना प्रार्थना। वाक्यार्थः। अत्तवे निधीमहीति। डुधाञ् धार-
णपोषणयोः इत्यस्माद्धातोरुत्तमपुरुषस्य बहुवचने आत्मनेपदे रूपं। बहुलं छंदसीति बहुलवचनाद्द्विर्वचनं न भवति। समिधीमहीति। ञिइंधी दीप्तावित्यस्य
धातोरूपम्। हविषे इति षष्ठ्यर्थे चतुर्थी। अत्तवे इति। अद भक्षणे इत्यस्मात् तुमर्थे सेसेनसे इत्यादिसूत्रेण तवेङ्प्रत्ययेनाव्ययपदमिति। इति उशंतस्त्वा मंत्रव्याख्या।
रातं मंत्रं पठित्वा तिलान् विकीर्य बद्धांजलिर्भूत्वा। अस्य मंत्रस्य शंखऋषिः त्रिष्टुप् छंदः पितरो देवता सौत्रामण्यामभ्युपस्थाने विनियोगः। मंत्रो यथा। ॐ आयं-
तु नः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदंतोधि ब्रुवंतु ते वंत्वस्मान्। अस्यार्थः। नोस्माकं पितरः आयंतु आगच्छंतु के ते पितरः
सोम्यासः सोमपाः न केवलं सोम्याः सोमपाः अग्निष्वात्ताश्च ये तस्मात् अग्निभिः ष्वात्ता भक्षिता ये येषां ष्वात्ता न स्मार्ताग्निभिः संस्कारः कृत इत्यर्थः। कैरागच्छं-
तु पथिभिर्वर्त्मभिः। किंभूतैर्देवयानैः देवानां यानं गमनं तैरित्यर्थः। आगत्य च ते पितरः अस्मिन् तर्पणरूपे पितृयज्ञे स्वधया पिंडरूपान्नेन मदंतस्तृप्यंतः सं-
तः अस्मानधिब्रुवंतु अधिकान् वदंतु श्लाघयंत्वित्यर्थः। अवंतु रक्षंतु। अथवा वाक्यार्थः। अस्मिन् तर्पणेऽस्माकं सोमपाश्चाग्निष्वात्ताश्च पितरः आगच्छंतु आगत्य
च तर्पणजलेन तृप्ताः अस्मान् श्लाघयंतो रक्षयंतु चास्मत्पितामहादीन् प्रीणयंत्विति। अत्र च सोम्यास इति सोममर्हतीति य इति यप्रत्यये कृते सोम्यशब्दात् प्रथ-
मा बहुवचने आज्जसेरसुक् इत्यसुगागमेन रूपम्। इति आयंतु न इति मंत्रव्याख्या। अनेन मंत्रेण पितॄनावाह्य। अस्य मंत्रस्य प्रजापतिऋषिः आपो देवता विराट् छंदः
पिंडपितृयज्ञे विनियोगः। मंत्रो यथा। ॐ ऊर्जं वहंतीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितॄन्। अस्यार्थः। हे आपः यूयं स्वधा स्थ पितॄ-
णामन्नं भवत। तथा च श्रुतिः। स्वधा वै पितॄणामन्नमिति। ततो मे मम पितॄंस्तर्पयत तृप्तान् कुरुत। किंभूता यूयं ऊर्जं वहंतीः अन्नं वहंत्यः प्रापयंत्यः किं-
भूतमूर्जं अमृतं इत्यादिपंचभिः [illegible] तमूर्जं विशेषणानि। अमृतं देवानामन्नं घृतं प्रसिद्धं पयो दुग्धं कीलालं मंडः कीलं बंधनं अलं योग्यमस्येति कीलालं

श्रा॰स॰ मंत्रः। परिस्रुतं स्वधा। एतच्चामृतादि सर्वमेवोर्ज्जशब्दाभिधेयमन्नवाचकं। यथा श्रुतिः। तस्माद्यावन्मात्रं ईशान्नस्परशः सर्वमेवान्नं भवति। अयं वाक्यार्थः। य
३५ तो यूयं नानाविधमन्नं वहंत्यः स्वधा भवथ तस्मान्मम पितॄन् तर्पयतेत्यर्थः। वहन्तीरिति सुपां सुपो भवंतीति प्रथमा बहुवचनस्थाने द्वितीया बहुवचनं। अथ
वा दीर्घाज्जसि चेति नित्यं पूर्वसवर्णादेशः प्राप्ते वा छंदसीति सूत्रेण पूर्वसवर्णादेशप्रतिषेधस्य विकल्पितत्वात् यदा प्रतिषेधो नास्ति तदा पूर्वसवर्णा-
देशे कृते रूपम्। इति ऊर्ज्जं वहंतीमंत्रव्याख्या। एतन्मंत्रपाठपूर्वकं अमुकगोत्रमत्पितरमुकदेवशर्मन्नेतत्ते तिलोदकं स्वधेति जलांजलित्रयं दद्यात्
एवं पितामहप्रपितामहमातामहप्रमातामहवृद्धप्रमातामहानां प्रत्येकं तन्मंत्रैर्जलांजलित्रयं दद्यात्। ततोऽमुकगोत्रेऽस्मन्मातरमुकीदेवि एतत्ते
तिलोदकं स्वधा इति मातृतर्पणं कुर्यात्। एवं पितामह्यादिमातामह्यादीनामेकैकांजलिं प्रत्येकं दद्यात्। ततो ज्येष्ठतातपितृव्यपुत्रपौत्रदौहित्रभ्रातृ
पुत्रजामातृमातुलभागिनेयपितृस्वस्रीयमातृभगिनीमातुलानीपत्नीभगिनीभ्रातृपत्नीभागिनेयीदुहितास्वश्रूश्वशुरबंधुबांधवादीनां मध्ये पुरुषा
णां जलांजलित्रयं स्त्रीणामेकैकांजलिं दद्यात्। ततो विष्णुपुराणोक्तकाम्यमंजलित्रयं दद्यात्। तथा देवांश्चापि जपेदंबु दद्यादामेच्छयान्नृप। उपकारायभू-
तानां कृतदेवादितर्पणः। तत्रायं मंत्रः। देवासुरास्तथा यक्षा नागा गंधर्वकिन्नराः। पिशाचा गुह्यकाः सिद्धाः कूष्मांडा भैरवाः खगाः। जलेचरा भूनिलया
वाय्वाधाराश्च जंतवः। प्रीतिमेते प्रयांत्वाशु मद्दत्तेनांबुनाखिलाः। इति मंत्ररूपश्लोकद्वयेन देवासुरयक्षनागगंधर्वादीनां तर्पणीयत्वाद्दक्षिणोपवीती
प्राङ्मुखो देवतर्पणवदेकैकांजलिं दद्यात्। ततः। नरकेषु समस्तेषु यातनासु च ये स्थिताः। तेषामाप्यायनायैतद्दीयते सलिलं मया। इत्यनेन मंत्रश्लोके
न नरकस्थानां तर्पणीयत्वाद्वामोपवीती दक्षिणाभिमुखः पितृतर्पणवदपरमेकमंजलिं दद्यात्। ततः। येऽबांधवा बांधवा येऽन्यजन्मनि बांधवाः। ते तृप्ति ३५
मखिला यांतु ये चास्मत्तोयाभिकांक्षिणः। इत्यपरेण मंत्रश्लोकेन जलांजलिं दद्यात्। तथास्यैव काम्योदकप्रदानस्य फलम्। काम्योदकप्रदानं तेमयैतत्क

पितं नृप। यद्दत्वा प्रीणयस्येतन्मनुष्यः सकलं जगत्। जगदाप्यायनोद्भूतं पुण्यमाप्नोति चानघ। दत्वा काम्योदकं सम्यगेतेभ्यः श्रद्धयान्वितः। इति तर्पणं स
माप्य। येचास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः। ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकं इति पठित्वा स्नानशाटीं निष्पीडयेत्। ततो दक्षिणोपवीती
आचम्योत्थायादित्यमवलोकयेत्। तथा च। योगियाज्ञवल्क्यः। ततोवलोकयेदर्कं हंसः शुचिषदित्यृचा। स याति ब्रह्मणः सद्म स्नात्वे सेवानपावुयः।
ततः नमो विवस्वते ब्रह्मन्भास्वते विष्णुतेजसे। जगत्सवित्रे शुचये सवित्रे कर्मदायिने इति पौराणीयमंत्रेण सूर्याय सलिलांजलिं दत्वा। योगियाज्ञवल्क्यो
क्तं सूर्योपस्थानादिकं कुर्यात्। तद्यथा। स्वयंभूरित्युपस्थाय सूर्यस्येति प्रदक्षिणम्। समावृत्य नमस्कुर्याद्दिशो दिग्देवता अपि। ब्रह्मणे चैव पृथिव्यै चैवौ
षधिभ्यस्तथाग्नये। वाचे च वाचस्पतये विष्णवे महते तथा। एताभ्यो देवताभ्यश्च नमस्कारादिना जलम्। दत्वा नमस्येत्क्रमशस्तते वै सर्वकर्मिणाम्। नमो
अद्भ्यो पांपतये वरुणाय नमो नमः। अत्र स्वयंभूरित्युपस्थायेत्यादि। ॐ स्वयंभूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि। इति मंत्रेण सूर्यमुपस्थाय। ॐ सू
र्यस्यावृतमन्वावर्ते इति प्रदक्षिणमावृत्य नमो दिग्भ्य इत्यादिनां यथोक्तदिगादीनामंजलिदानपूर्वकं नमस्कारं कुर्यादित्यर्थः। अस्य च मंत्रद्वयस्य व्याख्यादि
कं प्रातः संध्यायां सूर्योपस्थाने लिखितत्वात्तत्रैवानुसंधेयम्। इत्यावसथिकमहाधर्माधिकृतश्रीहलायुधविरचितब्राह्मणसर्वस्वे स्नानमंत्रव्याख्याप्र
करम्। अथ सूर्यायार्घ्यदानं तत्रार्घ्यं दद्यादित्यनंतरं पद्मपुराणे। आचम्य विधिवत्सम्यगालिखेत्पद्ममग्रतः। साक्षताभिः सपुष्पाभिः सतिलारुणचंदनैः।
अर्घ्यपात्रे प्रयत्नेन सूर्यनामानुकीर्तनैः। नरसिंहपुराणे। ततोर्घ्यं भानवे दद्यात्तिलपुष्पसमन्वितम्। उत्थाप्य मूर्धिपर्यंतं हंसः शुचिषदित्यृचा। हंसः शु
चिषदितिमंत्रस्य माहात्म्ये हारीतः। हंसः शुचिषदिति विमलं पवित्रं येन सर्वपापेभ्यो मुच्यते अप्सु जपेत्। घृतं तिलान्। समिधो वा जुहुयात् आदित्य
मुपतिष्ठेस्स्तोभवति तथा बौधायनः। हंसः शुचिषदित्येतामृचं त्रिरंतर्जले पठेत्। सर्वपापात्प्रमुच्यते। अत्र शुक्तिं नाम पात्रस्थतिलपुष्पयवजलरक्त

वा·सं· चंदनैरर्घ्यमुपकल्प्य शिरसि निधायानेन मंत्रेण। सौर्यं दद्यात्। तद्यथा। वामदेव ऋषिर्निजगती छंदः सूर्यो देवता राजसूयेयजमानस्य रथावतरणे विनि-
·३६ योगः। मंत्रो यथा। ॐ हंसः शुचिषद्वसुरंतरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। अस्यार्थः
। हंसः अध्वानं हंति गच्छतीति हंसः सर्वः शुचिषत् शुचावग्निमंडले सीदतीति निषण्णो निशुचिषद्वसुस्तेजोरूपः अंतरिक्षे आकाशे सीदतीत्यंतरिक्षसत् होता
यज्ञे होतृमंत्रेण देवाह्वानकर्ता वेदिषत् यज्ञवेद्यामध्वर्युरूपेण सीदतीति वेदिषत् अतिथिः नित्यस्थितिः क्वचिदपि नस्थायी नित्यभ्रमणशीलः दुरो-
णसत् दुरोणे गृहे सीदतीति गृहस्थरूपोप्ययमित्यर्थः। नृषत् नृषु मनुष्येषु सीदति जीवस्वरूपेण यास्थितः वरसत् वरेषूत्कृष्टस्थानेषु स्वर्गादिषु सीदती-
ति वरसत् ऋतसत् ऋते सत्ये सीदतीति परमात्मेत्यर्थः। व्योमसत् व्योम अंतरिक्षं तत्र सीदतीति ज्योतिःस्वरूपेण। अब्जाः अप्सु जलेषु जायते अग्निस्व-
रूपेण। गोजाः गवि पृथिव्यां जायते नरायुजांडजःस्वेदजोद्भिज्जरूपेण। ऋतजाः ऋते सत्ये जायते त्रयीरूपेण। अद्रिजाः अद्रौ पाषाणात्मके पर्वते जायते-
स्फुलिंगस्वरूपेणेत्यर्थः। ऋतं सूक्ष्मं बृहत् सर्वव्यापित्वादनवच्छिन्नपरिमाण इत्यर्थः। अत्र ऋतमिति। ऋ गतावित्यस्य धातोः क्तेन रूपम्। अनया कंडि-
कयाऽयमेव ब्रह्मस्वरूपः सर्वत्र स्थितः सर्वत्र जातः सर्वत्र गतः सर्वव्यापक इत्यादित्यस्तूयते। इति हंसः शुचिषन्मंत्रव्याख्या। अनेन मंत्रेणादित्यायार्घ्यं
दत्वा अदृश्रमस्येति मंत्रेणादित्यमुपतिष्ठेत्। तस्य प्रजापतिऋषिर्गायत्रीछंदः सूर्यो देवता द्वादशाग्न्याग्रहणे विनियोगः। मंत्रो यथा। ॐ अदृश्रम
स्य केतवो विरश्मयो जनाँ अनु भ्राजंतो अग्नयो यथा। अस्यार्थः। अस्य सूर्यस्य विरश्मयो विविधा रश्मयः अदृश्रं दृश्यंत इत्यर्थः किंभूताः केतवः ज्ञा-
नहेतवः अंधकारनाशकतया जनान् धलोकाननुगतान्भ्राजंतः देदीप्यमानाः कथं दृश्यंते। अग्नयो यथा अग्नयो गार्हपत्याहवनीयदक्षिणाग्नयः ३६
पुरस्कृताः संतो देदीप्यमाना दृश्यंते। तथा च आदित्यस्य रश्मयोऽपीत्यादित्यस्तुतिरेवास्यार्थः। अदृश्रमिति। दृशिर्प्रेक्षण इत्यस्य धातोः कर्मणि

मथमउऊषस्य बहुवचने छांदसं रूपम्। इत्यहष्यममंत्रव्याख्या। ततो देवपूजा मारभेत। तत्र पद्मपुराणम्। एवं सूर्यं नमस्कृत्य त्रिः कृत्वा च प्रदक्षिणम्। द्विजं
गां कांचनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत्। तथा विष्णुपुराणम्। ततो गृहार्चनं कुर्यादभीष्टसुरपूजनम्। जलाभिषेकपुष्पाणां धूपानां च निवेदनैः। अत्र यद्यपि सू-
र्यादिदेवतापूजासु पौराणिकादिमंत्रा बहव एव संविहिताः संति तथाप्यस्माभिर्वैदिकमंत्रव्याख्यानस्योपात्तत्वात्तत्प्रसंगेनैवानुष्ठानाभिधानं तात्पर्यं तु
वैदिकमंत्रव्याख्यायामेव। अतो वैदिका एव मंत्रा लिख्यंते। एवं सति नवग्रहपूजाप्रकरणे याज्ञवल्क्येन आकृष्णेत्यादि विहिता एवावना इत्यादिपूजा तेनै-
व मंत्रेण करणीया। आकृष्णेति मंत्रस्य हिरण्यस्तूप ऋषिरांगिरसो वा त्रिष्टुप्छंदः सूर्यो देवता सर्वमेधे सौर्यग्रहणे विनियोगः। मंत्रो यथा। ॐ आकृष्णे-
न रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवना निपश्यन्। अस्यार्थः। सविता आदित्यः आयाति आगच्छति किंभूतो दे-
वः सुत्यादियुक्तः केन रथेन किंभूतेन हिरण्ययेन सुवर्णमयेन किं कुर्वन् भुवनानि पश्यन् भुवनवर्तिनो मनुष्यान् कर्मभूमिस्थान् प्रकाशं पापकर्तॄन्निरीक्षमा-
णः निरीक्ष्यमाण इत्यर्थः। न केवलमपरं च निवेशयन् स्वेषु स्वेषु व्यापारेषु समावेशयन् किं अमृतं देवं मर्त्यं मनुष्यं च मनुष्या हि सूर्योदये स्वकर्मसु वर्तं-
माना देवाश्चीरणपंतिभीताश्च देवता इष्ट्यादिना मनुष्यानाप्याययंतीति देवमनुष्ययोः परस्परव्यापारसमावेशः। पुनः किंभूतः सविता आवर्तमानः पुनः
पुनरनुदिवसं तमेव देशमागच्छन् केन सह रजसा रात्रिकालेन सह किंभूतेन कृष्णेन मलिनेन प्रायेण रात्रिकाले पुण्यकर्मणामनुत्साहाद् रात्रिकालस्य कृ-
ष्णत्वमुक्तम्। अथ वाक्यार्थः। यः सविता देवमनुष्यव्यापारस्य प्रवर्तको यश्च कर्मभूमिवर्तिनां पुण्यानामपि साक्षिभूतः प्रसह्य समायाति तस्माद् हेलं
कुर्मह इति। तत्राकृष्णेनेत्यव्यवहितोप्याङ् छंदसि व्यवहिताश्चेति पाणिनिस्मरणाद् वर्तमानपदेन सह संबध्यते तेन आवर्तमान इति व्याख्यानम्। यद्वा रथ-
नरस्यत्र स्थितस्य भाउ संबंध्याकारस्य यातीति क्रियापदेन संबंधः आत्यवाक्य माध्वी हिरण्ययानि छंदसीति पाणिनिस्मरणाद् हिरण्मयार्थे हिर-

एपयशब्दो निपातितः इत्याक्षेपस्य मंत्रव्याख्या। यस्य पुनर्नवग्रहानेव पूजितुमिच्छा भवति तेन गणपतिपूजापूर्वकं याज्ञवल्क्योक्तैर्मंत्रैर्नवग्रहपूजा कार्या
३७ तथा ग्रहयज्ञे आदित्यादीनां मंत्रविधौ याज्ञवल्क्यः आकृष्णेन इमं देवा अग्निर्मूर्द्धा दिवः ककुत्। उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्तिताः। बृहस्पते अति
यदर्यस्तथैवान्नात्परिस्रुतः। शन्नो देवीस्ततः कांडात्केतुं कृण्वन्निमाः क्रमात्। गणपतिमंत्रस्य प्रजापतिऋषिर्यजुषांछंदो नास्ति गणपतिप्रियपतिनिधि
पतिअश्वा देवता अश्वमेधे अश्वप्रदक्षिणाकरणे विनियोगः। मंत्रो यथा ॐ गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा
निधिपतिं हवामहे वसो मम हे मम वसो सर्वस्वभूत त्वां हवामहे आह्वयामः किंभूतं गणानां मध्ये गणपतिं गणा रुद्रपरिषदास्तेषां पतिं त्वा मिनं पुनरपि
त्वा हवामहे किंभूतं प्रियाणां मध्ये प्रियपतिं प्रियाण्यभिलषितानि भार्यादीनि तेषां पतिं पुनरपि त्वा हवामहे किंभूतं निधीनां मध्ये निधिपतिं निधयः पद्माद
यस्तेषां पतिं। अत्र भौतिकविघ्नोपशमनाय भार्यादिप्रियलाभाय धनलाभाय च त्वां गणपतिं प्रियपतिं निधिपतिं च आह्वयाम इति वाक्यार्थः। हवामहे इति
तिङां तिङो भवंतीति उत्तमपुरुष एकवचनस्थाने बहुवचनम्। इति गणानां त्वा मंत्रव्याख्या। आदित्यमंत्रो व्याख्यात एव। सोम मंत्रस्य वरुण ऋषिर
ग्निर्देवता यजुषांछंदो नास्ति राजसूये यजमानदक्षिणबाहुग्रहणपूर्वकजपे विनियोगः। मंत्रो यथा। ॐ इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय
महते जानराज्यायेंद्रस्येंद्रियाय इमममुष्य पुत्रममुष्यै पुत्रमस्यै विशे। अस्यार्थः। अत्र प्रकृतत्वादिदंशब्देन सोमः परामृश्यते। हे देवाः इमं सोमं सुवध्वं जन
यत किंभूतं असपत्नं सपत्नः शत्रुस्तेन रहितं सोम्यत्वेन सर्वप्रियत्वात्। एतज्जननस्य किं प्रयोजनमित्याह महते क्षत्राय क्षत्रत्वाय राजभावाय लोकपाल
त्वायेति यावत्। ज्यैष्ठ्याय ज्येष्ठभावाय सर्वोत्तमत्वाय किंभूताय महते सातिशयाय पुनः कीदृशमिमं यत्स दृश्यममुं नित्यपरोक्षं परोक्षं परत्र ब्रह्मस्वरूपं अ ३
मुष्य स्वर्गस्य पुत्रं नानं तं सुषुम्णाभिधानसूर्यरश्मेः सोमत्वात्। अमुष्या दिशः पुत्रं अत्रिमहर्षेश्चक्षुर्निःसृतं तेजो दिशाधृतं सोमो नाम्नेति पुराणेषु श्रूयते

रभिप्रायेणोक्तेन। किमर्थमयं दिशाधृतमित्यत आह। अस्यै विशे अस्यै प्रजायै तादर्थ्ये चतुर्थी आप्यायनप्रकाशादिभिः प्रजानामनुग्रहायेत्यर्थः। लोकपा-
लायेष्टत्वाय आप्यायनप्रकाशादिभिर्लोकानुग्रहाय त्वाम् एवं सोमो देवैर्जन्यत इति सोमस्तुतिर्वाक्यार्थः। इति इमं देवा मंत्रव्याख्या। मंगलमंत्रस्य विरूपा-
ङ्गिरस ऋषिस्त्रिष्टुप्छंदोऽग्निर्देवता अग्न्युपस्थाने विनियोगः। मंत्रो यथा। ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयं अपां रेतांसि जिन्वति। याज्ञवल्क्यम-
त्स्यपुराणाद्यावस्य मंत्रस्य पूजायामुपयोगाद्धोमप्रकाशत्वं स्तुतित्वं सूच्यते। अतोऽयमितिपदेन भौमोऽभिधीयते। तथा च सत्ययं मंत्रार्थः। अयं भौमः अग्निर्मूर्द्धा
अत्यन्ततेजोरूपतया निर्वाणलोहितत्वात् अग्निं मूर्द्धत्वमेव संलक्ष्यते दिवः ककुत् दिव आकाशस्य ककुच्चिह्नं भूषणमित्यर्थः वृष्टिकर्तृत्वादपां जलानां प-
तिः अतः पृथिव्या रेतांसि बीजानि अन्नोसस्यानि जिन्वति प्रीणाति सफलीकरोतीत्यर्थः। अत्राग्निरिति विभक्तिपरिणामाः षष्ठ्यर्थे प्रथमेत्यर्थः। इति भौम-
मंत्रव्याख्या। बुधमंत्रस्य परमेष्ठी ऋषिस्त्रिष्टुप्छंदोऽग्निर्देवता बुधोपस्थाने विनियोगः। मंत्रो यथा। ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते संसृ-
जेथामयं च। अस्मिन्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत। अस्यार्थः। अत्र याज्ञवल्क्यस्मरणात्त्वमितिपदेन बुधोऽभिधीयते तथा सत्ययं मं-
त्रार्थः। हे अग्ने उद्बुध्यस्व उद्बुद्धो भव हे बुध त्वं च प्रतिजागृहि अस्मिन्क्रियमाणे कर्मण्यवहितो भव पुनर्बुधाग्नी इष्टापूर्ते इष्टं यज्ञादि पूर्तं खातादि ते इष्टापूर्ते
संसृजेथाः यजमानं संसर्गं कुरुत इति गृह्य यत्ते ऋत्विक् आसीदत इति ऋत्विग्ज्ञायय यजमानस्य विश्वेदेवैः सह सामानाधिकरण्यमनेन मंत्रेण चोच्यते। स-
धस्थ इति श्लागति निर्वचाति तस्य सहोपपदस्य सधमाधस्थयोश्छन्दसि इति सूत्रेण सहस्य स्थाने सधादेशः। इति बुधमंत्रव्याख्या। यथा बृहस्पतिमंत्रस्य गृत्सम-
द ऋषिस्त्रिष्टुप्छंदो ब्रह्मा देवता बार्हस्पत्यग्रहणे विनियोगः। मंत्रो यथा। ॐ बृहस्पते अति यदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋत-
प्रजात तदस्मासु द्रविणं धेहि चित्रं। हे बृहस्पते अति यदर्य इति। हे बृहस्पते किंभूत ऋतप्रजात ऋतात्सत्यात् अविनाशिनः प्रजात तद् द्रविणं धनमस्मासु

वा॰स॰ येहिस्थापय किंभूतं अति अतिशायितं कतरत्तत्यद्द्यनं अर्य्यः ईश्वरः आहीं ब्रजयेत। अस्तु तावन्निर्द्देन ईश्वरोपि तत्पूजयतीत्यर्थः। किंच यद्द्यनं लोकेषु वि
३८ भाति शोभते किंभूतं द्युमद्दीप्तिमत्। धनवानेव दीप्तिमाली भवतीत्यभिप्रायः। पुनः किंभूतं क्रतुमत् यज्ञवत् यज्ञोपि धनवद्भिरेव क्रियत इत्यर्थः। यच्छवसा
लेन दीदयत् रस्पते उनः किंभूतं चित्रं नानाविधं गोवस्त्रहिरण्यादिरूपमित्यर्थः। अत्र मंत्रे ऋत प्रजात इति वृहस्पतिं स्तुत्वा धनमस्मासु धेहीति वाक्यार्थः
इति वृहस्पतिमंत्रव्याख्या। शुक्रमंत्रस्य प्रजापतिऋषिरतिजगतीछंदोग्निसरस्वतींद्रा देवताः सौत्रामण्यां पयोग्रहोपस्थाने विनियोगः। मंत्रो यथा। ॐ अ
न्नात्परिस्रुतो रसं ब्रह्मणा व्यपिवत्क्षत्रं पयः। सोमं प्रजापतिः ऋतेन सत्यमिंद्रियं विपानं शुक्रमंधस इंद्रस्येंद्रियमिदं पयोमृतं मधु। अस्यार्थः। प्रजापतिर्ब्रह्म
अन्नाद्द्विषः परिस्रुतः परिसवंतो भावेन स्रुतं गलितं रसं सारं व्यपिवत् पीतवान् कीदृशं सत्त्रं ओजस्वि किंच पयः क्षीरं सोमं सामरसं प्रजापतिर्व्यपिवत् इ
ति तेनैव संबंधः। केन साधनेन व्यपिवत् ब्रह्मणा वेदेन किंभूतेन ऋतेन प्रपंचास्पृष्टेन मंत्रस्वरूपेणेत्यर्थः। इदं मन्नरसं पयः सोमस्वरूपमंधसः अन्नात्संभू
तं व्यपानं प्रजापतेर्विसृष्टं पानं शुक्रं वीजमभवदित्यध्याहार्यं किंभूतं सत्यं अविनाशि इंद्रियं सकलसंसारकारणं व्यपानं विशिष्टं पानं पुनः किंभूतं इन्द्रस्य दे-
वराजस्येंद्रियं वीर्यं पयः क्षीरममृतममरत्वकारणं मधु पितृणां तृप्तिकारणं अत्र परिस्रुत इति द्वितीयायां प्रथमा मंत्रे दत्तहविषां प्रजापतिभुक्तानां परि-
णामभूतं शुक्रं सकलसंसारोत्पत्तिस्थितिकारणमिति शुक्रस्तुतिर्वाक्यार्थः। इति शुक्रमंत्रव्याख्या। शनिमंत्रस्य दध्यङ्ङाथर्वणऋषिर्गायत्रीछंद
आपो देवता महावीरशांतिकरणे विनियोगः। मंत्रो यथा। ॐ शन्नोदेवीरभिष्टय आपो भवंतु पीतये शंयोरभिस्रवंतु नः। अस्यार्थः। अस्य मंत्रस्य म-
त्स्यपुराणे याज्ञवल्क्यादिभिः शनैश्चरपूजादौ विनियोगनियमान्मुख्यतया शनैश्चरनामाश्रवणेपि आदित्यप्रभवत्वेनापां शनैश्चरस्याभेदोपचारात् ३८
आप इति पदेन शनैश्चरस्वाभिमतः तेनायं मंत्रार्थः। आपो देवीः शनैश्चरो देवः नोऽस्माकं शं कल्याणं भवंतु किमर्थमभिष्टये उपचयाय पीतये इति-

द्वारेणवृष्टिहेतवेपानायभवंतु । किंचशंयोःशंकल्याणंतस्ययोगायप्राप्त्याभिस्रवंतुअभिमुखंगच्छंत्विति भावः । अतएकस्मिन्नपिशनैश्चरेवाच्येअपशब्दस्य-
नित्यंबहुवचनान्तत्वाद्बहुवचनंतदनुगुणतयाचभुवंतुंकिमर्थमभिष्टयेउपचारंबहुवचनं । इतिशनिमंत्रव्याख्या । राहुमंत्रस्याग्निऋषिरनुष्टुप्छंदोदूर्वेष्ट-
कादेवतादूर्वेष्टकोपधानेविनियोगः । मंत्रोयथा । ॐ काण्डात्काण्डात्प्ररोहंतीपरुषःपरुषस्परि । एवानोदूर्वेप्रतनुसहस्रेणशतेनच । अस्यार्थः । हेदूर्वेकां-
डात्कांडात्सर्वस्मात्पर्वणःप्रतिपर्वेत्यर्थःपरुषःपरुषोग्रंथितोग्रंथितःपरिग्रंथिपरिसर्वतोभावेनप्ररोहंतीप्रजायमानात्वंयथातथैवनोऽस्मान् प्रतनुवि-
स्तारयकथंसहस्रेणशतेनचयथात्वंप्रतिपर्वप्रतिग्रंथिप्रजायसेतथास्मानपिसहस्रशतसंख्यपुत्रपौत्रादिभिर्विस्तारयेतिवाक्यार्थः । अनेनमंत्रेणग्रह-
होमेराहवेहूयमानांदूर्वांप्रकाश्यस्वीयपुत्रादिंविस्तारयेतियाचयाराहोःपूजादिकमपिक्रियते । इतिराहुमंत्रव्याख्या । केतुमंत्रस्यमधुच्छंदऋषिर-
ग्निर्देवतागायत्रीछंदःकेत्वभिमंत्रणेविनियोगः । मंत्रोयथा । ॐ केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे । समुषद्भिरजायथाः । अस्यार्थः । हेकेतोध्वज-
रूपत्वंसमजायथाःसंजातोभवकैर्जन्यमानःउषद्भिर्वसद्भिर्गृहस्थैरित्यर्थः । किंकुर्वन्मर्याःमर्त्येभ्योमनुष्येभ्यःकेतुंज्ञानंकृण्वन्कुर्वन्नकेवलंसं-
ज्ञानंकुर्वन् अपिपेशःसुवर्णंकुर्वन्पेशःशब्देनसुवर्णंसौंदर्यंवाऽभिधीयतेइतिनिघंटुः । तथाचशरीरंब्राह्मणंपेशस्कारीपेशसोमात्रामुपास्येसा-
दिकंकिंभूतेभ्योमनुष्येभ्यःअकेतवेअज्ञानेभ्यःपुनःकिंभूतेभ्यःअपेशसेअसुवर्णेभ्यःनिर्धनेभ्यःकुरूपेभ्योवाकेतुमितीचितिसंज्ञानइत्यस्यधातोरू-
पंअकेतवेअपेशसेइतिबहुवचनेएकवचनंमयाइतिचतुर्थ्याःप्रथमा । अथवावाक्यार्थःहेकेतोयद्यपितवोसतिलोकानामुत्पातार्थमेवभवतितथापि
अज्ञानेभ्योज्ञानंकुरूपेभ्योरूपंकुर्वन् लोकानांशुभार्थंसंजातोभवेतिकेतौयाच्ञा । इतिसूर्यादिनवग्रहमंत्रव्याख्या । हलायुधेनगौडेंद्रधर्मकोषस्य
कारिणः ।। एतत्पुरुषसूक्तस्यव्याख्यानंप्रतिपद्यते । अथपुरुषसूक्तपूजाएषायद्यपिवेदव्यवधर्मेसर्वैःस्मरावततद्विशेषेणप्रतिपादितानतथापिपुरुष

सूक्तमंत्रस्याकप्रसंगादेतदीयमाहात्म्यंपुनरपिकिंचिदभिधीयते।वाराहपुराणे।विष्णुरुवाच।पौरुषंसूक्तमास्थाययेयजंतिद्विजाःसुमां।संहितावा-
प्यथास्थायतेमामाप्स्यंतिब्राह्मणाः।योगियाज्ञवल्क्यनृसिंहपुराणयोः।स्नात्वापुरुषसूक्तेनयःपुष्पाण्यपएवच।अर्चितंस्याज्जगदिदंतेनसर्वंचरा-
चरम्।तथानृसिंहपुराणे।एतत्पठेत्केवलमेवसूक्तंदिनेदिनेतन्नित्यशुद्धवृत्तिः।ससर्वदुःखंपरिहायवैष्णवंपदंप्रयात्यच्युतभक्तिकृन्नरः।विष्णुधर्मो-
त्तरीयेद्वितीयकांडे।रामउवाच।एवंमंत्रंसमाचक्ष्वसर्वकर्मैककरंपरम्।रोहिकंसर्वधर्मज्ञपारलौकिकमेवच।पुष्करउवाच।प्रतिवेदंमहाभागयत्सूक्तं
पौरुषंस्मृतम्।सर्वकर्मकरंपुण्यंपवित्रंपापसूदनम्।एकैकयाऋचारामस्नातोदत्वाजलांजलीन्।पौरुषेणचसूक्तेनमुच्यतेसर्वकिल्बिषात्।अं-
तर्जलगतोजप्त्वातथासूक्तंतुपौरुषम्।सर्वकल्मषनिर्मुक्तोयथेष्टांलभतेगतिम्।एकैकयाऋचास्नातःपुष्पंधूपंनिवेदयेत्।पुरुषायजलंरामसर्वै-
पापैःप्रमुच्यते।एकैकयाऋचास्नातोदत्वारामफलंजलं।सर्वकाममवाप्नोतिरामयन्मनसेप्सितम्।पौरुषेणतुसूक्तेनप्राणायामोमहाफलः।जप्तो
हौतथारामसर्वकल्मषनाशनो।सुरापोब्रह्महास्तेनस्तथैवगुरुतल्पगः।पापेभ्योविप्रमुच्यंतेजप्त्वासूक्तंतुपौरुषम्।कृच्छ्रेविशोधितःपूर्वंनद्यादेःस-
लिलेपिवा।स्नातस्तुपौरुषंसूक्तंजपन्नित्यमतंद्रितः।संवत्सरेणदेवेशंवासुदेवंसपश्यति स्वयमेवंमहाभागशाकमूलफलाशनः।सर्वान्कामानवा-
प्नोतियद्राममनसेच्छति।प्रियमप्यांतथारूपंजीवितंदीर्घमेवच।अणिमालघिमाप्राप्तिर्महिमाचभृगूत्तम।ईशित्वंचवशित्वंचप्राकाम्यंभृगुनंद-
नम्।यत्रकामावसायित्वंतस्मात्प्राप्नोतिमानवः।पुनराप्नतथान्यद्धियत्किंचिन्मनसेच्छति।अकामःपौरुषंसूक्तंजप्त्वानित्यमतंद्रितः।वत्रयातिम-
हाभागयद्विष्णोःपरमंपदम्।मंगल्यमेतत्परमंपवित्रंसंसारदुःखौघविनाशकारि।सुखप्रदंधर्मविदांनराणांमनोरथावाप्तिकरंप्रदिष्टम्॥कूर्मपु-
राणे।अदद्यादाथपुष्पाणिसूक्तेनपुरुषेणतु।आपोवादेवताःसर्वास्तेनसम्यक्समर्चिताः।तथाचरहस्ये।मनुः।जप्त्वातुपौरुषंसूक्तंमुच्यतेगुरु

तल्पगः। पूतो भवतीत्यधिकारे। बृहद्विष्णुः। त्रिरात्रोपोषितः पौरुषं सूक्तं जपहोमाभ्यां गुरुतल्पगः। तथा गुरुतल्पगाधिकारे बृहन्मनुः। पौरुषं सूक्तमाव
र्तयन्नेव विमुच्यति। कूर्मपुराणम्। तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम्। तद्विष्णोरिति मंत्रेण सूक्तेन पौरुषेण तु। नैताभ्यां सदृशो मंत्रो वेदेषू
क्तश्चतुर्ष्वपि। बृहद्विष्णुः। पुरुषसूक्तेन प्रत्यृचं पुरुषाय पुष्पं जलिं दद्यात् जलाञ्जलीं श्च तथास्नातः पवित्रपाणिर्यथाशक्ति जपेत् विशेषतः सावित्रीं
पुरुषसूक्तं वा नैताभ्यामधिकमस्तीति। त्रिरात्रोपोषित इत्यधिकारे योगियाज्ञवल्क्यः। सहस्रशीर्षां जापी तु मुच्यते गुरुतल्पगः। गौर्दद्यात् कर्मणो दे
यात्कर्मणोऽस्यान्ते पृथगाभीः पयस्विनी। इति पुरुषसूक्तस्य माहात्म्यम्। अथ विष्णुपूजायां पुरुषसूक्तमंत्रव्याख्या॥ तत्र सहस्रशीर्षा पुरुष इत्यादि ष
ह्यास्यास नित्यंतानामेवानुष्टुप्छंदः। पंचदशत्रिष्टुप्छंदो यज्ञेनयज्ञमित्यादि त्रिषु कंडिकासमेत जपकंडिकानां षोडशकंडिकानां यद्यपि पुरुषमेधे पु
न्नेपोह्यणीय पुरुषस्यात यौमिहोत्रन पुरुषस्तुतौ च तत्सत्यभृतिभिर्यजुर्वेदभाष्यकारैर्विनियोगो व्याख्यातस्तथापि आद्येमावाहयेद्देवमित्यादि षो
डशोद्वाप्तनं कुर्यादित्यंतग्रंथेन षोडशानामेककंडिकानां पूजायां नरसिंहपुराणे विनियोगप्रतिपादनादस्माभिरभिधीयते। विश्वव्यापकस्य विश्वांत
र्यामिणो विज्ञानमयस्यानंदस्वरूपिणो भगवतः पुरुषस्य पूजायामुपयोगो वर्णितः। अथ षोडशर्चस्य नारायण ऋषिरनुष्टुप्छंदो जगद्बीजपुरुषो
देवता। यथा नरसिंहपुराणे अनुष्टुभस्य सूक्तस्य त्रिष्टुबंतस्य देवता। पुरुषो हि जगद्बीजमृषिर्नारायणः परः इति विनियोगश्च। पुरुषमेधयज्ञेप्योऽस्य
णीय पुरुषमेधस्तुतौ कल्पसूत्रकृता कात्यायनेनोक्तः। तत्र ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं सर्वतस्पृत्वात्यतिष्ठद्दशांगुलम्
१ अस्यार्थः। यः पुरुषः नाभेरूर्द्ध्वं दशांगुलमिति अतिक्रम्यार्थं वध्याद्धृदये विज्ञानरूपः अतिष्ठत् किंभूतः सहस्रशीर्षा सहस्रशब्दोऽसंख्यातवचनः ते
नासंख्यातवचनः तेनासंख्यातशिराः पुनः किंभूतः सहस्राक्षः अक्षशब्दोऽत्र बुद्धींद्रियोपलक्षकः तानि च यस्य पुनः किंभूतः सहस्रपात् पादशब्दोऽपि

वा·सं· कर्मेंद्रियोपलक्षकः तानि च पंच एतेन त्रैलोक्यवर्तिनां प्राणिनां यानि शिरांसि बुद्धींद्रियाणि कर्मेन्द्रियाणि च तानि सर्वाणि अस्यैव पुरुषस्येत्यर्थः । एतेनासौ सहस्राक्षः सहस्रशिराः सहस्रपात् सर्वपुरुष एव । एतेन वर्तमानभूतभविष्यत्कालगोचरो भगवानधिकृतः किं कृत्वाऽतिष्ठत् भूमिं सर्वतः स्पृत्वा व्याप्य भूमिशब्दो भूम्या धारणात् देहवचनः तेन सर्वभावेन त्रैलोक्यवर्तिनां पार्थिवदेहान्व्याप्येत्यर्थः । अनेन सहस्रशीर्षत्वादिना पद्यापकत्वमुपक्रांतं तदेव स्फुटीकृतम् । सर्वदेहिनां हृदयस्थं विज्ञानरूपं पुरुषं सहस्रशीर्षेत्यादिरूपोक्तौ तेनेनाभिमुखीकृत्य सोऽसौ मत्क्रियमाणपूजायां सान्निध्यमुपकल्पयत्विति वाक्यार्थः अत्र नाभेरुर्ध्वं दशांगुलमतिक्रम्य हृदयं भवतीति सकललोकानुभवसिद्धमेवात्र पुरुषस्तिष्ठतीति । यमो वैवस्वतो देवो यस्तवैष हृदि स्थित इति मनुवचनं प्रमाणम् । तत्र च संख्यासु पूर्वस्येत्यनेन सहस्रशब्द पूर्वस्य पादशब्दस्याकारलोपः तेन सहस्रपादिति भवति ष्ठ्वेति ष्ठ इ व्यायाम इत्यस्माद्धातोः क्त्वा प्रत्ययेन रूपं सर्वतः स्पृत्वेति कस्कादित्वाद्विसर्जनीयस्य सः ॥ ॐ पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यं । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥ अस्यार्थः । इदं यत्किंचिद्वर्तमानकालीनं तत्सर्वं पुरुष एवास्येत्र ज्ञा इत्यर्थः । न केवलं वर्तमानकालीनं पुरुषः यद्भूतं परंतीतकालीनं यच्च भाव्यं यदपि भविष्यत्कालीनं तदपि सर्वं पुरुष एव एतेन वर्तमानभूतभविष्यत्कालस्वरूपो भगवान् विकृतस्वरूप इति दर्शितम् न केवलमेवं उत एवं च यदन्नेनादनीयेन भक्तादिना तिरोहति अतिशयेन जन्म लभते तत्सर्वं च पुरुष एव ये मनुष्यादयो जंगमा भक्ताद्याहारेण जन्म लभंते ये च स्थावराः । वृक्षशैलादयो जलसंतर्पणरूपेणाहारेण जन्म लभंते ते सर्वे एव तत्पुरुषस्वरूप इत्यर्थः पुनः किंभूतोऽसौ पुरुषः अमृतत्वस्य मोक्षस्य ईशानः प्रभुः मोक्षदाता च सर्व एव पुरुष इत्यर्थः अत्राप्यनेन मंत्रेणाभिमुखीकृत्य भगवानेतस्मिन्कुसुमादिमये आसनेऽस्माभिर्दत्ते उपवेशनं करोतिताशंसा वाक्यार्थः ॥ ॐ एतावानस्य महिमातो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि । अस्यार्थः । अस्य पुरुषस्य एतावान्महिमा-

यत्त्वं वैकुण्ठिकादयोक्तसर्वदेशकालव्यापित्वं संसारापवर्गप्रभुत्वरूपं नाम अतोस्मात्कारणात्पुरुषः ज्यायान्महत्तरः यतोयं ज्यायान् अतोस्य भवः पादः
श्चास्य विश्वा भूतानि चराचरस्य व्यापकानि पंच महाभूतानि अस्य पुरुषस्यापरम्त्रिपात्सारत्रयं ऋग्यजुःसामात्मकसूर्यस्वरूपममृतं मोक्षद्वारं
कस्मां हि विसूर्यमंडलभेदद्वारेण गच्छतां मुमुक्षूणां परमात्मनिलयात्तन्मोक्षद्वारमिति भावः। एतेनास्य भगवतो विश्वं पाद इति पादं स्तुत्वा तस्मै
पादं दीयते॥ ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोस्येहाभवत्पुनः। ततो विष्वङ् व्यक्रामत्साशनानशने अभि। अस्यार्थः। अस्य चतुष्पाल्लक्षणस्य पु
रुषस्य योसौ त्रिपात्पुरुषः ऋग्यजुःसामात्मलक्षणो भगवेवनादित्यः सोभ्युदैत् अभ्युदितवान् किंभूतः ऊर्ध्वः कर्मबंधनिबंधनां स्थावरजंगमा-
नामुपरिभूत इत्यर्थः। किंचास्य चतुष्पाल्लक्षणस्य पुरुषस्य पादश्चतुर्थांशः हिरण्यगर्भतया इह जगत्यभवत्प्रथमतः सत्तामात्रेणात्मानमकरो
त्। इह किंभूते जगति साशनानशने भोक्तरि चाभोक्तरि च येषां सुकृतदुष्कृते अधिकारस्ते भोक्तारो ब्राह्मणादयः येषामनधिकारस्ते अभोक्तारः कृमि
वृक्षप्रभृतयः तदेवं कर्माधिकारिणि जगति अपारः पादो व्यापकतया अभवत्। प्रथमं सत्तामात्रेण तिष्ठत्ततः पुनस्तदनंतरं विष्वङ् व्यक्रामत् वि-
ष्वं सर्वशः व्यक्रामद्व्याप्तवान् कर्माधिकारिणामनधिकारिणां च शरीराणि व्याप्यावस्थानमकरोदितियावत्। अत्र विषुशब्दपूर्वादंचुगतिपूजनयोरि
त्यस्माद्धातोः क्विन्प्रत्यये विष्वङ्ङिति रूपं अभ्युदैदित्यत्र साशनानशने अभीत्यत्र व्यवधानस्थितोप्यभिरुपसर्गः क्रियया सह संबध्यते व्यवहिताश्चेति
पाणिनिवचनात्। अत्र च यो भगवांस्त्रिपाल्लक्षणो हरहरभ्युदैतीति नित्यातिथिरूपः सूर्यस्तेतस्मा अर्घ्यमनेन दीयते। ॐ ततो विराडजायत विराजो अ-
धि पूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः। अस्यार्थः। ततः पुरुषाद्धिरण्यगर्भो विराडजायत ब्रह्मा अभवदित्यर्थः। ततोऽनंतरं तस्माद्विराजो
ब्रह्मणः पुरुषो मनुरध्यजायत स मनुः पुरोयेन पश्चात्पिजातः सन्भूमिमत्यरिच्यत अतिरिक्तो भूत् अधिको भूदिति यावत्। अत्र भूमिपदं देशोपलक्ष

ब्रा.स रणार्थं।पुरः पश्चादिति कालोपलक्षणं।अनेनसृष्टोहकृचिदपिदेशेकालेचतस्यमनोः पुत्रपौत्रसमृद्धिभिः प्रतिमन्त्रो ऽन्योयस्मादपिमाभूदित्यभिप्रायः।अ
४१ नेनमंत्रेणचाभिमुखीकृत्यास्मद्दत्तमाचमनीयंभगवान्गृह्णात्विस्याशंसावाक्यार्थः॥ ॐ तस्माद्यज्ञात्सर्वहुतंसंभृतंपृषदाज्यं। पशूंस्तांश्चक्रेवायव्या-
नारण्याग्राम्याश्चये। अस्यार्थः।तस्मादितियेनपादेनसकलचराचरात्मकंविश्वमेतद्व्याप्तमितिपादोस्येहाभवत्पुनरित्युपरितनकंडिकाप्रतिपादितं-
तस्मात्पुरुषस्यचतुर्थपादात्किंभूतात्सर्वहुतः सर्वहुतसंज्ञयज्ञरूपात्पृषदाज्यंहविः संभृतंउत्पन्नंतत्पृषदाज्यंकर्तृभूतंपशूंश्चक्रेकृतवत्कानेप
शून्येआरण्याग्राम्याश्चतान्किंभूतान्वायव्यान्वायुदैवत्यान् अत्रापिअनेनमंत्रेणपुरुषमभिमुखीकृत्यास्मद्दत्तंस्नानंगृह्णात्वितिवाक्यार्थः॥
ॐ तस्माद्यज्ञात् सर्वहुतऋचः सामानिजज्ञिरे। छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत। अस्यार्थः।तस्मात्सर्वहुतयज्ञसंज्ञपुरुषादृचः ऋग्वेदः
सामानिसामवेदश्चजज्ञिरेजातावित्यर्थः।तस्मादेवछंदांसिगायत्रीत्रिष्टुबादीनिजज्ञिरेजातानितस्मादेवयजुः यजुर्वेदोअजायतजातइत्यर्थः।एतेन
ब्राह्मणादिवर्णचतुष्टयरूपात्रयीसकलमंत्राणामाच्छादनभूतंछंदोभगवतएवसमुत्पन्नमित्युक्तंभवति।त्रयीशावरणमितिविष्णुपुराणं।सर्वेषामेव
वर्णानांत्रयीसंवरणंस्मृतम्।तामुत्सृजंतियेमोहात्तेवैनग्नाः प्रकीर्तिताः।छंदःसामाच्छादनत्वेयोगियाज्ञवल्क्यः।छादनाच्छंदउद्दिष्टंवाससीत्यवच्चा
कृतेः।तदयमभिप्रायः त्वत्तएवभगवद्दत्तमन्नमाच्छादनंतुभ्यंददानीतिमंत्रार्थः ॐ तस्मादश्वाअजायंतयेकेचोभयादतः।गावोहजज्ञिरेतस्मात्तस्मा
ज्जाताअजावयः।अस्यार्थः।तस्मात्[illegible]हुतयज्ञस्वरूपात्पुरुषात् अश्वायेकेचोभयादतः उभयतोदंताः पशवस्तेप्यजायंतजाताः तस्मादेवगावश्चजज्ञि
रेजातास्तस्मादेवाजावयश्च[illegible]णामेषाश्चोत्पन्नाइत्यर्थः उभयादतइत्यन्येषामपिदृश्यतइतिदीर्घः गावोहेतिहप्रकारार्थोव्ययसमुच्चयेच। ४१
अत्रकंडिकात्रयेपत्नि[illegible]अस्माकंपत्तमाधनंविद्यार्थंवाइदंमंत्रात्मकाश्चत्रयोवेदाश्चतत्सर्वंपुरुषोत्तमदेवपुरुषमेवयागस्वरूपाज्जातमितिवाक्या

र्थः ।तदर्च्चापि भगवंतमभिमुखीकृत्यानेन मंत्रेण भगवान्सम्याभिदीयमानं यज्ञोपवीतं गृह्णात्विति मंत्रार्थः ॥ ॐ तंयज्ञंबर्हिषि प्रौक्षन्पुरुषंजातमग्रतः
।तेनदेवाअयजंतसाध्याऋषयश्चये ॥ अस्यार्थः तंपुरुषंयज्ञसाधनंभूतंबर्हिषिकुशेषुसंस्थाप्य देवाब्रह्मादयः साध्याश्चसाधननामानोगणदेवताः ऋष
यश्चमरीच्यादयः प्रौक्षन्प्रोक्षितवंतः नकेवलंप्रौक्षन्नपितुतेन पुरुषेणयज्ञसाधनभूतेनायजंतयागंकृतवंतः । अत्रयज्ञशब्देनकार्यकारणोपचाराद्य
ज्ञसाधनमभिधीयते। प्रोक्षणग्रहणंसकलसंस्कारोपलक्षणार्थं एतेनैतदुक्तंभवति। तत्पुरुषंपशुदाम्यादिरूपेणयज्ञसाधनभूतंप्रोक्षणादिसंस्का
रैरित्यर्थः। संस्कृतेनपशुदाम्यादिरूपेणपुरुषेणदेवादयोयागंकृतवंतः अत्राप्यभिमुखीकृत्यास्मद्दत्तंगंधंभगवान्गृह्णात्विति मंत्रार्थः।९। ॐयत्
पुरुषंव्यदधुः कतिधाव्यकल्पयन्। मुखंकिमस्यासीत्किंबाहूकिमूरूपादाउच्येते १० अस्यार्थः। अत्रकंडिकायांकर्तृपदंनश्रूयतेअतस्तदत्रकल्प-
नीयंतत्कल्पनेनचपूर्वकंडिकोपात्तादेवादयएवात्रानुषंजनीयाः॥ इयंकंडिकायोजना। देवादयोयत्प्रोक्षितंपुरुषंव्यदधुः विहितवंतः कृतवंतः कतिधाक
तिप्रकारंव्यकल्पयन्विकल्पितवंतः तस्यकतिधाभेदंकृतवंतइत्यर्थः। अस्यपुरुषस्यमुखंकिमासीत्किंबभूवबाहूकिमुच्येतेकिमूरूच्येते किंपादौउच्येते
।पादाउच्येतेइत्यत्रपादावित्यस्यावादेशेकृतेलोपः शाकल्यस्येतिवकारलोपःवक्ष्यमाणकंडिकादिभिः पुरुषाकृतावाक्याऽस्याजनकत्वा इयमपिकंडि-
कास्तुतिरेवतदनयास्तुत्याभिमुखीकृत्यास्मद्दत्तंदीयमानंवापुष्पंगृह्णात्विति मंत्रार्थः।१०। ॐ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः। ऊरूतदस्य
यद्वैश्यः पद्भ्यां शूद्रोअजायत ११ अस्यार्थः। अस्यपुरुषस्यमुखंब्राह्मणः आसीत्तबभूवअस्यबाहूराजन्यः क्षत्रियः कृतः अस्ययदूरूतद्वैश्यःकृ
तइति। पूर्वेणसंबंधः। अस्यपद्भ्यांपादतःशूद्रोअजायतजातवान् अयमेवपुरुषोब्राह्मणादिवर्णचतुष्टयमपरति। अनेनपुरुषमभिमुखीकृत्यास्म
द्दत्तंधूपंगृह्णात्विति वाक्यार्थः।११। ॐ चंद्रमामनसोजातश्चक्षोःसूर्योअजायत। श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत।१२। अस्यार्थः। अस्येति

ब्रा·स पूर्वकंडिकास्थमंत्रापियोऽयमतेनास्यपुरुषस्यमनसः सकाशाच्चंद्रमा अजायतच सोऽप्यक्षुषः सकाशात्सूर्यो अजायतश्च मुपतच सोऽप्यक्षुषःसाकाशा-
४२ त्सूर्यो अजायतश्रोत्रात्कर्णाद्वायुश्च प्राणश्चाजायतेतसनेनैवसंबंधः मुखादग्निरजायते तिव्यक्तमेवं चंद्रसूर्य वायुभ्यो मनश्चक्षुः श्रोत्र प्राणानामुत्पत्तिरि
तिसामान्येनसृष्टिक्रमः। नत्रत्वचिंत्यमहिम्नि पुरुषे विपरीत मेतच्चंद्रसूर्यवायुप्राणानां तस्य पुरुषस्य मनश्चक्षुः श्रोत्रेभ्यउत्पत्ति स्थिति रिति पुरुषस्तु-
विरेववाक्यार्थः यस्ययज्ञपुरुषस्यमुखादग्निः श्रोत्राद्वायुश्च प्राणश्चक्षुषः सूर्यो मनसश्चन्द्रमा अभवदितिसर्वं तेजसांयो भगवान्कारणंतस्मैसर्वतेजः
कारणायतेजोरूपः प्रदीपो अनेन मंत्रेणदीयते। १२। ॐ नाभ्या आसीदंतरिक्ष शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकां अकल्पय
न १३ अस्यार्थः। नाभ्यानाभितः आसीद्बभूव किंवभूतअंतरिक्षंआकाशम् शीर्ष्णः मस्तकाद्द्यौः स्वर्गः समवर्ततसमभवत् पद्भ्यांपादतोभूमिः समभव
त् दिशः श्रोत्रात्कर्णात्समभवत् तथा सएवपुरुषः लोकानप्यकल्पयन्नकल्पयतदेवमनुष्यादिनिखिलस्थावरजंगमात्मकंत्रैलोक्यमेवसृष्टवानित्यर्थः
अकल्पयन्निति वचनव्यत्ययेनएकवचनेबहुवचनम्। अनयाऋचाअभिमुखीकृत्यनैवेद्यंदीयते। १३। ॐ यत्पुरुषेणहविषादेवायज्ञमतन्वत। वसंतोस्या-
सीदाज्यंग्रीष्मइध्मः शरद्धविः। १४। अस्यार्थः पुरुषेणहविषादेवाइत्युपलक्षणं। साध्या ऋषयश्च यज्ञमतन्वतकृतवंतः अस्ययज्ञस्यवसंतऋतुविशेष-
आज्यघृतमासाद्ग्रीष्मइध्मः समिद्विशेषः आसीत शरद्धविरासीदितिसंबंधः प्रथमतआज्यस्योक्तत्वातहविरिसाज्यातिरिक्तंपुरोडाशादि। अस्यमंत्रस्य
स्वावकत्वादंजलिकरमेवयुक्तं। १४। ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः। देवायद्यज्ञंतन्वानांअवध्नन्पुरुषंपशुम् १५ अस्यार्थः यज्ञस्यस-
प्तसमुद्राः परिधयः यज्ञभूमिवेष्टनान्यासन्भूताः त्रिः सप्तछन्दांसिसमिधः कृताः सप्तछंदांसिसप्तव्याहृतयश्चैतान्येकविंशतिछंदांसिसमिधः कृताः ४२
तर्थः किंभूतस्यास्ययज्ञस्यपतत्पतंतन्वानाः कुर्वाणाः देवाः अवध्नन्पुरुषंपशुपशुभूतंअत्रसप्तेतिसंख्यामात्रप्रपूपलेनतुसंख्येयेकिंचनत्रसरसेसये

कल्पमानेयत्तभूमिवेष्टकंतत्कल्पनीयंयत्तभूमिश्चभारतंवर्षंतद्वेष्टकाश्चलवणोदप्रभृतयःसप्तसमुद्राइत्येवकल्पिताः त्रिःसप्तइत्यत्रापिसंख्येयक-
ल्पनायांबहुव्रीहिर्जज्ञिरेतस्मादित्यत्रयत्तसाधनस्पृष्टावेकविंशतिछंदसांसृकृत्यातेषामेवग्रहणमयंचाभिप्रायः।अस्ययत्तमयस्यविष्णोःसप्तसमु-
द्राःपरिधित्वेनवेष्टनद्रव्याणितत्परिधित्वंयतोस्माकंसप्तसमुद्रवेष्टितपृथिवीपरिधित्वफलंभवत्वित्याशंसामंत्रार्थः।१५। ॐ यज्ञेनयज्ञमयजंतदे-
वास्तानिधर्माणिप्रथमान्यासन्।तेहनाकंमहिमानःसचंत।यत्रपूर्वेसाध्याःसंतिदेवाः।१६ अस्यार्थः।हेदेवाइन्द्रादयःयज्ञेनयज्ञसाधनभूतेनपुरु-
षेणयज्ञेनयज्ञंयज्ञपुरुषंपुरुषोत्तममयजंतपूजितवंतः केनैतदृष्टहिंसात्मकेनकर्मणापुरुषंपशुंकृत्वायज्ञःक्रियतेइहतानिचेद्धर्माणिप्रथमा-
न्यासन् अतएवतेदेवाएवंरूपेणैवयज्ञेननाकंसचंतसंगताः यत्रनाकेस्वर्गेपूर्वेसाध्यादयोदेवामहिमानोमहात्मानःसंति।अत्रतेहनाकमित्यत्र
हकारश्छांदसःस्तोत्रार्थः।सचंतइतिसचसमवायइत्यस्माल्लुङ्प्रथमपुरुषबहुवचनंबहुलंछंदस्यमाङ्योगेपीत्यडागमनिषेधः अनयाकंडिकया
देवानांस्वर्गोनिवासस्थानमितिवासुदेवस्यस्मरणात्सभगवानस्माभिःपूजितःसन्स्थानंस्वर्गंपुनयातुइतिमंत्राभिप्रायः।१६ इतिपुरुषसूक्तमंत्रव्या-
ख्यासमाप्ता॥ अथोत्तरनारायणम्।अस्यचोत्तरनारायणस्यषडृचस्योत्तरनारायणऋषिराद्यास्तिस्रस्त्रिष्टुभोद्वावनुष्टुभौअंतेत्रिष्टुप्पुरुषोदेवतास-
र्वमेधेआदित्योपस्थानेविनियोगः।मंत्रोयथा। ॐ अद्भ्यःसंभृतःपृथिव्यैरसाच्चविश्वकर्मणःसमवर्तताग्रेतस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेव-
त्वमाजानमग्रे।१७।अस्यार्थः।त्वष्टाआदित्यःअद्भ्योजलात्पृथिव्यैपृथिवीतोपिअग्नेःप्रथमंसंभृतःउत्पन्नःअत्रापःपृथिवीचपंचभूतोपलक्षणार्थी-
तेनपंचभूतेभ्योपिपूर्वकालएवत्वष्टासंभृतइत्यर्थः।नकेवलंपंचभूतेभ्यएवपूर्वंसंभृतः अपितुविश्वकर्मणोरसादिच्छातोपिप्रथमंसमवर्ततयदेव
विश्वकर्मणोजगन्निर्माणेच्छानभवत्तितदैवसंभृतइत्यर्थः।तस्मादादित्यस्यतद्रूपंमंडलाकारंमर्त्यस्यआजानंमनुष्याणांसृष्टितोप्यग्रेपूर्वंदेवत्वं

ब्रा·सू विद्वथतथारयन्नेतिसमागच्छतीति ।१७। ॐ वेदाहमेतंपुरुषंमहान्तमादित्यवर्णं तमसःपरस्तात्।तमेवविदित्वातिमृत्युमेतिनान्यःपंथाविद्यतेऽनाय
४३ १८ अस्यार्थः।अहमेतंपुरुषंपुरुषोत्तमंदेवंजानामि अस्मदादीनांसर्वेषामेवानुभ वसिद्धोयमित्यर्थः। एतंकिंभूतंमहान्तंसर्वव्यापकादित्यवर्णमादि
त्यरूपंज्योतिर्मयमित्यर्थः।यथाआदित्यःस्वप्रकाशःपरान्प्रकाशयतितथाय मपिस्वप्रकाशःब्रह्मस्वरूपोजगदपिप्रकाशयति।तमसःअविद्यात्म
कसंसारस्यपरस्तात्परमुत्तीर्णमित्यर्थः।तमेवपुरुषमेवविदित्वाज्ञात्वामृत्यु मरणमप्यतिक्रम्यसतिगच्छति अपुनरावृत्तयेअनायअयनायगम
नायअन्यःपंथानविद्यतेनतिष्ठति अनायेत्यत्रवर्णागमेवर्णविपर्ययश्चेतिय कारलोपः।अयमेवपुरुषोध्यानगम्योज्ञातोमोक्षंददातीतिवाक्यार्थः
।१८। ॐ प्रजापतिश्चरतिगर्भेअंतरजायमानोबहुधाविजायतेतस्ययोनिंपरि पश्यन्तिधीरास्तस्मिन्हतस्थुर्भुवनानिविश्वा ।१९। अस्यार्थः।प्रजापतिः
प्रजानांपतिःसूर्यःअंतश्चरतिप्राणिनांदेहमध्येजीवात्मरूपेणवसतीत्यर्थः किंभूतःगर्भेअजायमानःनित्यत्वादनुत्पत्तिधर्म्मापिसन्बहुधाजायतेबहु
प्रकारस्थावरजङ्गमदेहेषुजन्मलभतइत्यर्थः।तस्यप्रजापतेर्योनिंमुख्यस्वरूपात्तस्थानंधीरब्रह्मविदःपश्यन्तिध्यानेनोपलभन्तिइत्यर्थः।तस्मिन्प्रजापतौभु
वनानिस्वर्गमर्त्यपातालानिविश्वानिसर्वाणितस्थुःस्थितानिहकारस्तेजार्थः।विश्वाइतिडाकारस्योनिलोपः १९ ॐ योदेवेभ्यआतपतियोदेवानांपुरो
हितः।सर्वेयोदेवेभ्योजातोनमोरुचायब्राह्मये।२०।अस्यार्थः।यःसूर्यः आतपतिआसमंतात्कारेणतपतिकिमर्थंदेवेभ्योदेवानांप्रयोजनेनोदितेह्या-
दित्येदेवकर्मण्यधिकारोभवतियोदेवानांपुरोहितःपुरोअग्रेहितः।आहितःदेवानांहविर्दानायप्रथमममग्निरूपेणाधीयतेइत्यभिप्रायः।योदेवेभ्यःसका
शात्सर्वेजातउत्पन्नःअदितेर्द्वादशात्माआदित्यःसप्रथममुत्पन्नइत्यर्थः।स्थानत्रयेयच्चक्षुर्दर्शनात्तस्मैनमइतियोजना।किंभूतायरुचायरोचमाना ४३
यपुनःकिंभूतायब्राह्मयेब्रह्मणोऽपत्यंब्राह्मिःतस्मैपरब्रह्मभूतायेत्यर्थः।२०। ॐ रुचंब्राह्मंजनयन्तोदेवाअग्रेतदब्रुवन्।यस्त्वैवंब्राह्मणोविद्यात्तस्यदेवा

असन्वशे ।२१। अस्यार्थः । देवा ब्राह्मणादयः जनयंतः स्वयमुत्पाद्यमानास्तं ब्राह्मं ब्रह्मणो जातं रुचं स्वप्रकाशस्वरूपमादित्यमग्रे प्रथमम् अब्रुवन् उक्तव
न्तः इदमेवास्माकं प्रथममुख्यमित्युक्तवंतः हे पुरुषोत्तम त्वां त्वामेवमनेनाध्यायेनोक्तस्वरूपं यो ब्राह्मणो विद्याज्जानाति तस्य ब्राह्मणस्य देवा वशे इ-
च्छायामासन् भवंति सहस्रशीर्षाध्यायं यं यतोर्थतश्चाधीत्य यो ब्राह्मणः पुरुषोत्तमं जानाति तस्य ब्राह्मणस्य देवा ब्रह्मादय अभिलषितानि संपादयं-
ति इति वाक्यार्थः २१ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ । व्यात्तम् । इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण
।२२। अस्यार्थः । हे पुरुषोत्तम ते तव श्रीश्च लक्ष्मीश्च श्रीर्द्वौ यं यद्दृश्यात् पुरुषोनुजीवंति अनुजीविनश्चाश्रयणीयो भवति लक्ष्मीर्धनं तद्यस्मात् पुरुषः स
र्वलोकस्य लक्ष्योदर्शनीयो भवति ते श्रीलक्ष्म्यौ पत्न्यौ सहचारिण्यौ त्वा नत्स जनत इत्यर्थः एकेनैव चकारेण समुच्चये प्राप्ते चकारद्वयग्रहणेन तुल्यप्र-
धानता प्रतिपादिता । अहोरात्रे पार्श्वे अहश्च रात्रिश्च पार्श्वद्वयमहःशब्दः परमब्रह्मपरः तस्य विश्वात्मकत्वेन प्रकाशरूपत्वात् रात्रिशब्दः संसारप
रः तस्मादविद्यात्मकत्वेनाप्रकाशकत्वात् तेन धर्मार्थकामात्मकः संसारो मोक्षकश्च श्रीपुरुषोत्तमपार्श्वद्वयमित्युक्तं भवति नक्षत्राणि रूपं ता-
रागणो मूर्तिरित्यर्थः । अश्विनौ द्यावापृथिव्यौ एतद्द्वयं तव व्यात्तम् विवृतमुखमित्यर्थः तथा च श्रुतिः इमे हि सर्वे हंसवता एवंभूतं पुरुषोत्तमं त्वं यया
चेइष्णन् इच्छन् तं सकामं इषाण इच्छ । न केवलमेय मम अमुमिहलोकमिषाण मे मम सर्वलोकं भूरादिसत्यांतं लोकसप्तकमिषाण । अयं वाक्यार्थः । यः
कश्चिद्यत्किंचित्स्वर्गपुत्रादिकाममत्तेन सहस्रशीर्षाध्यायेन त्वां स्तौति पूजयति उपतिष्ठते तमिच्छन् मम मातापितृपुत्रधनपश्वादियुक्तमिहलोकमिच्छ
ति परलोकं स्वर्गमोक्षादिकमिच्छति तं वेच्छामात्रेणैव सर्वं संपद्यते स स्वेच्छत्वादित्यभिप्रायः अत्र पत्न्या अहोरात्रे इति स्थिते अवादेशे कृते लोपः शा
कल्यस्येति वकारलोपः इष्णन्निति इषु इच्छायामित्यस्य धातोः स्मा स्यात्सये कृते शत्रारूपं इत्युत्तरनारायणं । इत्यावसथिकमहायम्मीधिकृतह-

ब्रा॰स॰ लायुधकृतौ ब्राह्मणसर्वस्वे सहस्रशीर्षाध्यायव्याख्या ॥ अथत्र्यंबकमंत्रेण शिवपूजा ॥ त्र्यंबकमन्त्रमाहात्म्यं लिंगपुराणोपरिभागे । त्रियम्बकेनमंत्रे
४४ णदेवदेवंत्रियम्बकम् । पूजयेद्वाणलिंगेवा स्वयंभूतेपिवापुनः । आर्षेपिदैवतेवापियथावद्नुपूर्वशः । अष्टोत्तरसहस्रेण पुंडरीकेणशंकरम् । कमलेन
सहस्रेणतथानीलोत्पलेनच । संपूज्यपायसंदत्वाघृतंच्चैवौदनंपुनः । मुद्गान्नंमधुनायुक्तंभक्ष्याणिसुरभीणिच । देवंसंपूज्यविधिवज्जपेन्मंत्रंत्रियम्बक
म् । मुच्यतेसर्वपापेभ्यःसप्तजन्मकृतैरपि । संग्रामेविजयंलब्ध्वासौभाग्यमतुलंलभेत् । लक्षहोमेनराज्यार्थीराज्यंप्राप्यसुखीभवेत् । पुत्रार्थीपुत्रमाप्नो-
तिनियुतेननसंशयः । धर्म्मार्थीप्रयुतेनैवजयेनैवनसंशयः । धनधान्यादिभिःसर्वैःसंपूर्णैःसर्वमंगलैः । क्रीडयेत्पुत्रपौत्रैश्चमृतःस्वर्गेचजायते । ना
नेनसदृशोमंत्रोलोकेवेदेचसुष्कृतः । तस्मात्त्रियम्बकंदेवंनरोनित्यंप्रपूजयेत् । अग्निष्टोमस्ययज्ञस्यफलमष्टगुणंलभेत् । त्रयाणामपिवोकानांगु-
णानामधियःप्रभुः । वेदानामपिदेवानांब्रह्मक्षत्रविशामपि । अकारोकारमकाराणांमंत्राणामपिवाचकः । कर्त्तासोमस्यसूर्य्यस्यवन्हेरग्नित्रयस्य
च । अथोउमामहादेवोह्यमूलस्तुत्रियम्बकः । सुपुष्पितस्यवृक्षस्ययथागंधोस्तिशोभनः । अविदूरात्तथातस्यगंधःशम्भोर्महात्मनः । तस्मात्सुगं
धोभगवान्गंधस्यारयतिशङ्करः । गंधारश्चमहादेवोदेवनामपिलीलया । सुगन्धस्तस्यलोकेस्मिन्वायुर्वातिनभस्तले । तस्मात्सुगंधितंदेवंसुगंधिं
पुष्टिवर्द्धनम् । यस्यरेतःपुराशम्भोर्हरेर्योनौप्रतिष्ठितम् । तस्यवीर्यमभूदण्डंहिरण्यञ्चजलोद्भवम् । चन्द्रादित्यौसनक्षत्रौभूर्भुवःस्वर्जनस्तपः ।
सत्यलोकमतिक्रम्यपुष्टिवीर्य्यस्यवैतथा । पंचभूतान्यहंकारोबुद्धिःप्रकृतिरेवच । पुष्टिवीर्य्यस्यतस्यैवतस्माद्वैपुष्टिवर्द्धनः । तंपुष्टिवर्द्धनंदेवंघृतेन
पयसापिवा । मधुनायवगोधूममुद्गविल्वफलेनच । कुमुदार्कशमीपत्रगौरसर्षपशालिभिः । कृत्वालिंगेयथान्यायंभक्त्यादेवंयजामहे । कृतेनानेन ४४
मांभागाद्बंधनात्कर्म्मयोगतः । मृत्योश्चबंधनाच्चैवमुक्षीयतवतेजसा । उर्वारुकानांपक्वानांयथाकालादभूत्पुनः । तथैवकालसंप्राप्तौमंत्रेणानेनय

ततः ।विधिज्ञात्वाशिवलिङ्गंसमर्चयेत्।तस्यपापक्षयस्तावद्रोगिणोमृत्युनिग्रहः।त्रियम्बकसमोनास्तिदेवोन्योघृणयान्वितः।प्रसादंशी
लःप्रीतिश्चतथामन्त्रोपिसुव्रताः।तस्मात्सर्वंपरित्यज्यत्रियम्बकमुमापतिम्।त्रियम्बकेनमन्त्रेणपूजयेत्सुसमाहितः।सर्वावस्थाङ्गतोवापियुक्तो-
वासर्वपातकैः।शिवध्यानान्नसन्देहोयथारुद्रस्तथास्वयम्।हत्वाभित्वाचभूतानिभुक्त्वाचान्यायतोपिवा।शिवमेकंसकृत्स्मृत्वासर्वपापैःप्रमुच्य
ते।यथाविष्णुधर्मोत्तरे।द्वितीयेकाण्डेऋग्वेदानाम्।त्रिरात्रंनियतोपोष्यश्रपयेत्पायसञ्चरुम्।तेनाहुतिशतंपूर्णञ्जुहुयात्त्र्यम्बकेत्यृच।समुद्दिश्य
महादेवञ्जीवेदब्दशतंसुखी।तत्रत्र्यम्बकमन्त्रस्यवशिष्ठऋषिरनुष्टुप्छन्दस्त्र्यम्बकोदेवताश्चातुर्मास्यत्र्यम्बकेष्ट्यामग्निपरिक्रमणेविनियोगः
।मन्त्रोयथा।ॐत्र्यम्बकंयजामहेसुगन्धिंपुष्टिवर्द्धनम्।उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्।अस्यार्थःत्रियम्बक।त्र्यम्बकंमहेश्वरंवयंयजा
महेपूजयामहे।किंभूतंसुगन्धिंशोभनोगन्धोस्यसुगन्धिंपुष्टिवर्द्धनंपुष्टिरुपचयस्तस्यवर्द्धयितारम्।यजामहइतिदर्शनात्वयमितिकर्तृपदमध्या
ह्रियते।उत्तरार्द्धेकर्तृपदंकर्मपदञ्चनश्रूयते।अतस्तद्वयकल्पनेपूर्वार्द्धपाठमेवद्वयंविपरिणम्ययोज्यम्।।तथाचत्र्यम्बकः।अस्मान्मुक्षीयमुक्ता
न्करोतुकुतःमृत्योर्मरणात्।मृत्युनाचात्रमृत्युजन्मलक्षणःसंसारउपलक्षितः।संसारान्मुक्तान्करोत्वित्यर्थः।कमिवकुतः।उर्वारुकमिवबन्ध
नादुर्वारुकंकर्कटीफलंयथाबन्धनाद्विमुक्तंपुनर्नसंयुज्यते।तथावयमपिसंसारान्मोचिताःपुनःसंसारंनप्रविशामहइत्यभिप्रायः।मामृतान्मो
क्षास्यपुरुषान्मामुक्षीयनमोचयअत्रमुक्षीयेतिमुचेःआशिषिलिङ्।आत्मनेपदोत्तमपुरुषैकवचनस्येटोदित्सदादेशेकृतेसीयुडागमेरूपम्।ति
ङन्तिङि·तिप्रथमपुरुषस्थानेत्तमपुरुष।तथाकुमारीणांविशिष्टपतिलाभकामनयास्त्रीणाञ्चसौभाग्यकामनयाद्वितीयत्र्यम्बकमन्त्रेणपू-
जाथाम्।कात्यायनः।कुमार्य्यश्चोत्तरेणपतिकामासौभाग्यकामाचेति।कृष्यादिकंपूर्ववत्।विनियोगस्तुकुमार्य्याअग्निपरिक्रमणे।तत्रोत्तरमन्त्रंव

ततः। एवंमन्त्रविधिंज्ञात्वाशिवलिङ्गंसमर्चयेत्। तस्यपापस्यपस्तावद्योगिनोमृत्युनिग्रहः त्रियम्बकसमोनास्तिदेवोन्योघृणयान्वितः। प्रसादशी
लः शीतश्चतथामन्त्रोपिसुव्रताः। तस्मात्सर्वंपरित्यज्यत्रियम्बकमुमापतिम्। त्रियम्बकेनमन्त्रेणपूजयेत्सुसमाहितः। सर्वावस्थाङ्गतोवापियुक्तो-
वासर्वपातकैः शिवध्यानान्नसन्देहोयथारुद्रस्तथास्वयम्। हत्वाभित्वाचभूतानिभुक्त्वाचान्यायतोपिवा। शिवमेकंसकृत्स्मृत्वासर्वपापैःप्रमुच्य
ते। यथाविष्णुधर्मोत्तरे। द्वितीयंकाण्डऋग्वेदानाम्। त्रिरात्रंनियतोपोष्यश्रपयेत्सायसञ्चरुम्। तेनाहुतिशतंपूर्णंजुहुयात्त्र्यंबकेत्यृच। समुद्दिश्य
महादेवञ्जीवेद्वर्षशतंसुखी। तत्रत्र्यम्बकमन्त्रस्यवशिष्ठऋषिरनुष्टुप्छन्दस्त्र्यम्बकोदेवताश्चातुर्मास्यत्र्यम्बकेष्ट्यामग्निपरिक्रमणेविनियोगः
।मन्त्रोयथा। ॐ त्र्यम्बकंयजामहेसुगन्धिंपुष्टिवर्द्धनम्। उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्। अस्यार्थः त्रियम्बक। त्र्यम्बकंमहेश्वरंवयंयजा
महेपूजयामहे। किंभूतंसुगन्धिंशोभनोगन्धोऽस्यसुगन्धिंपुष्टिवर्द्धनंपुष्टिरूपञ्चयस्तस्यवर्द्धयितारम्। यजामहइतिदर्शनात्वयमितिकर्तृपदमध्या
ह्रियते। उत्तरार्द्धेकर्तृपदंकर्मपदञ्चनश्रूयते। अतस्तदुभयकल्पनेपूर्वार्द्धमात्रमेवहृद्यंविपरिणम्ययोज्यम्॥ तथाचत्र्यम्बकः। अस्मान्मुक्षीयमुक्ता
न्करोतुकुतःमृत्योर्मरणात्। मृत्युनाचात्रमृत्युजन्मलक्षणःसंसारउपलक्षितः। संसारान्मुक्तान्करोत्वित्यर्थः। कमिवकुतः। उर्वारुकमिवबन्ध
नात्उर्वारुकंकर्कटीफलंयथाबन्धनाद्विमुक्तंपुनर्नसंयुज्यते। तथावयमपिसंसारान्मोचिताःपुनःसंसारंनप्रविशामहइत्यभिप्रायः। मामृतान्मो
क्षात्स्यपुरुषान्मामुक्षीयनमोचयअत्रमुक्षीयेतिमुचेःआशिषिलिङ्। आत्मनेपदोत्तमपुरुषैकवचनस्येदोरिसरादेशेकृतेसीयुडागमेरूपम्। ति
ङन्तिङि-निप्रथमपुरुषस्थानेउत्तमपुरुष। तथाकुमारीणांविशिष्टपतिलाभकामनयास्त्रीणाञ्चसौभाग्यकामनयाद्वितीयत्र्यम्बकमन्त्रेणपू-
नायाम्। कात्यायनः। कुमार्य्यश्चोत्तरेणपतिकामास्सौभाग्यकामाश्चेति। ऋष्यादिकंपूर्ववत्। विनियोगस्तुकुमार्य्याअग्निपरिक्रमणे। तत्रोत्तरमन्त्र

ब्रा.स इनेनमन्त्रेण। प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवताग्निसंस्कारे विनियोगः। ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः। इहैवायमि
४६ तरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्। अस्यार्थः। अग्निं प्रहिणोमि प्रस्थापयामि किंभूतं दूरं लोकान्तरप्रापकम्। पुनः किंभूतं क्रव्यादं मांसाद
म्। असौ मानुषमांसान्यभिलषतीति। अमंगलत्वाद्यमराज्यं गच्छतु यमस्याधिकारं यातु किंभूतः रिप्रवाहः रिप्रं पापं वहति प्रापयतीति रिप्र
वाहः यदितरः क्रव्यादादन्यो जातवेदाः जातज्ञानाग्निः। इह एष गृह एव हव्यं वहतु प्रापयतु हविः केभ्यो देवेभ्यः किंभूतः प्रजानन् स्वीयमधिकारं प्र
काशयन् जानन्नित्यर्थः। अत्र क्रव्यादमग्नमङ्गलमग्निं दूरं प्रेषयामि यमराज्यं गच्छत्विति अग्नेः प्रस्थापनं पूर्वार्द्धस्य वाक्यार्थः। अयमितरो मङ्ग-
ल्यः इहमदीये गृह एव वैश्वदेवे स्वीयमधिकारं जानन् देवेभ्यो हविः प्रापयत्विति आशंसोत्तरार्द्धवाक्यार्थः। अनेन मन्त्रेण क्रव्यादांशं परित्यज्य
संस्कृतस्याने ऽनुष्ठातृपरंपरानुष्ठानप्रामाण्यादग्न्यारोपणं परिस्तरणं कुशदानञ्च करणीयम्। तत्राग्न्यारोपणमन्त्रो यथा। ॐ अयन्ते योनिरृ
त्वियो यतो जातो अरोचथाः। तञ्जानन्नग्न आरोहाथा नो वर्द्धया रयिम्। प्रजापतिर्ऋषिरनुष्टुप्छन्दोऽग्निर्देवता ऋषयोऽपि अग्न्युपस्थाने विनियो
गः। अस्यार्थः। अरणिरिध्माहार्यम्। हे अग्ने यतो यस्मादरणेः सकाशाज्जातः स नरोचथाः दीप्तोऽसि अयन्ते तव ऋत्विजः पुरोहितः योनिरुत्प
त्तिस्थानं तं आरोह। आरूढो भव किं कुर्वन् जानन् अथानन्तरं नोऽस्माकं रयिं धनं वर्द्धय इद्धि युक्तं कुरु इत्याशंसा मन्त्रार्थः। अनेनैव मन्त्रेण गार्ह
पत्याहवनीयाग्न्योररणौ समारोपणं क्रियते आरोह थावर्द्धया इत्युभयत्रापि आकारश्छान्दसः। अनेनाग्निमारोप्याग्निं पूर्वेण उदगग्रं परि-
स्तरणं कुशं दद्यात्। अत्र परिस्तरणमन्त्रो यथा॥ ॐ अग्निमीळे इति। अस्य व्याख्या कृता। ततो दक्षिणे प्रागग्रं कुशपत्रं दद्यादनेन मन्त्रेण। ॐ ४६
इषे त्वोर्जे त्वेति अयमपि व्याख्यातः। ततः पश्चिमे उदगग्रमेवापरकुशपत्रद्वयं दद्यादनेन मन्त्रेण ॐ अग्न आयाहीति। अयमपि व्याख्यातः

इनेनमन्त्रेण। प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोग्निर्देवताग्निसंस्कारे विनियोगः। ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः। इहैवायमि
तरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्। अस्यार्थः। अग्निं प्रहिणोमि प्रस्थापयामि किंभूतं दूरं लोकान्तरप्रापकम्। पुनः किंभूतं क्रव्यादं मांसाद
म। असौ मानुषमांसान्यभिलषतीति। अमंगल्यत्वाद्यमराज्यं गच्छतु यमस्याधिकारं यातु किंभूतः रिप्रवाहः रिप्रं पापं वहति प्रापयतीति रिप्र
वाहः यइतरः क्रव्यादादन्यो जातवेदाः जातज्ञानाग्निः। इह एष गृहे एव हव्यं वहतु प्रापयतु हविः केभ्यो देवेभ्यः किंभूतः प्रजानन् स्वीयमधिकारं प्र
काशयन् जानन्नित्यर्थः। अत्र क्रव्यादममङ्गल्यमग्निं दूरं प्रेषयामि यमराज्यं गच्छत्विति अग्नेः प्रस्थापनं पूर्वार्द्धस्य वाक्यार्थः। अयमितरो मंगल्यः
इहमदीये गृहे एव वैश्वदेवे स्वीयमधिकारं जानन् देवेभ्यो हविः प्रापयत्विति आशंसोत्तरार्द्धवाक्यार्थः। अनेन मन्त्रेण क्रव्यादांशं परित्यज्य
संस्कृतस्थाने ऽनुष्ठातृपरंपरानुष्ठानप्रामाण्यादग्न्यारोपणं परिस्तरणं कुशदानञ्च करणीयम्। तत्राग्न्यारोपणमन्त्रो यथा। ॐ अयन्ते योनिरृ
त्विजो यतो जातो अरोचथाः। तञ्जानन्नग्न आरोहाथा नो वर्द्धया रयिम्। प्रजापतिर्ऋषिरनुष्टुप्छन्दोग्निर्देवता ऋषयोपि अग्न्युपस्थाने विनियो
गः। अस्यार्थः। अरणिरित्यध्याहार्यम्। हे अग्ने यतो यस्मादरणेः सकाशाज्जातः सन् रोचथाः दीप्तोसि अयन्ते तव ऋत्विजः पुरोहितः योनिरुत्प
त्तिस्थानं तं आरोह। आरूढो भव किंकुर्वन् जानन् अथानन्तरं नोस्माकं रयिं धनं वर्द्धय हद्वियुक्तं कुर्विति आशंसा मन्त्रार्थः। अनेनैवं मन्त्रेण गार्ह
पत्याहवनीयाग्न्योररणौ समारोपणं क्रियते आरोहथा वर्द्धया इत्युभयत्रापि आकारश्छान्दसः। अनेनाग्निमारोप्याग्निपूर्वे उदगग्रं परि
स्तरणं कुशं दद्यात्। अत्र परिस्तरणमन्त्रो यथा॥ ॐ अग्निमीळे इति। अस्य व्याख्या कृता। ततो दक्षिणे प्रागग्रं कुशपत्रं दद्यात् इनेन मन्त्रेण। ॐ ४६
इषे त्वोर्ज्जे त्वेति अयमपि व्याख्यातः। ततः पश्चिमे उदगग्रमेवापरकुशपत्रद्वयं दद्यात् अनेन मन्त्रेण ॐ अग्न आयाहीति। अयमपि व्याख्यातः

ततउत्तरेभागएवमेवापरंकुशत्रयंदद्यात्अनेनमन्त्रेणॐ शन्नोदेवीरिति । अथमणिर्व्याख्यातः इतिपरिस्तरणंकृत्वाग्निंप्रज्वाल्यपर्युक्ष्यघृताक्तम
न्नंहस्तेनजुहुयात् । तत्रव्याहृत्याहुतित्रयंहुत्वागौतमोक्ताग्न्यादिपञ्चाहुतीःकृत्वाशाकलमन्त्रैःषडाहुतयः । तत्रशाकलमन्त्रोयथा । ॐ देव-
कृतस्यैनसोवयजनमसिस्वाहा । अग्निरत्रदेवता । यथानुक्रमणिका । देवकृतस्यवसइत्याग्नेयानिषडयजूंषितेनहेअग्नेएनसःपापस्यावयजनंनाश-
नमसिभवतिअवपूर्वोयजतिर्नाशनेवर्त्तते । किंभूतस्यैनसः देवकृतस्यदेवविषयेकृतस्यदेवकर्म्मण्यसाङ्गतादिकृतस्येत्यर्थः । अतस्तुभ्यंस्वाहा ।
ॐ मनुष्यकृतस्यैनसोवयजनमसिस्वाहा । अस्यार्थः । मनुष्यकृतस्यमनुष्यविषयेऽतिथिविषयेअसाङ्गतादितस्ययद्वामनुष्यहिंसादिनाकृतस्यापरं
समानम् । ॐ पितृकृतस्यैनसोवयजनमसिस्वाहा ॥ अस्यार्थः । पितृकृतस्यपितृकर्मण्यसाङ्गतादिकृतस्यापरंसमानम् । ॐ आत्मकृतस्यैनसोवयज
नमसिस्वाहा । अस्यार्थः । आत्मकृतस्यात्मनिन्दादिकृतस्यापरंसमानम् ॐ एनसएनसोवयजनमसिस्वाहा । अस्यार्थः । एनसःपापस्यसहानेनसंबन्धे
नसर्वेणापुनःपुनःकरणेनयदेनःसंभूतंतस्यापरंसमानम् । ॐ यच्चाहमेनोविद्वांश्चकारयच्चाविद्वांस्तस्यसर्वस्यैनसोवयजनमसिस्वाहा । अस्यार्थः । -
अहंयच्चयदप्येनःपापंचकारकृतवानस्मिकिंभूतोविद्वान्जानन्यच्चयदप्यविद्वान्अजानन्चकारतस्यैनसोवयजनंनाशनमसिकिंभूतस्यसर्वस्यसाव-
शेषस्य । इतिहोमंसमाप्यअग्निंपूजयेदनेनमन्त्रेण । ॐ सप्ततेअग्नेसमिधःसप्तजिह्वाःसप्तर्षयःसप्तधामप्रियाणि । सप्तहोत्राःसप्तधात्वात्वायज-
न्तिसप्तयोनीरापृणस्वघृतेनस्वाहा । त्रिष्टुप् । अस्यार्थः । हेअग्नेतेतवसप्तसंख्याःसमिधःसमिन्धनहेतवः तेतवसप्तजिह्वाःप्रवहोद्वहसंवहविवहनिव-
हपरिवहानुवहनामानःसप्तवायवरावजिह्वाइत्यर्थः तेतवसप्तऋषयःसप्तहोत्राःसप्तहोतारःकेतेसप्तर्षयःहोतामैत्रावरुणिब्राह्मणाच्छंस्यच्छा
वाकपोतानेष्टाग्नीद्ध्राःएतेतवसप्तधामानिस्थानानिससछन्दांसिकिंभूतानिप्रियाणिहृद्यानित्वात्वांयजन्तिकथंसप्तधाज्योतिष्टोमादिसप्तसंस्थसो

ब्रा॰स॰ ४० मयागेन सप्तयोनीः चितिस्वरूपाः सप्त चितिं को पि रिति श्रुतेः आप्रेण स्व सुप्रीतो भव केन घृतेन स्वाहा सुहुतं भवतु। अत्र याम इति बहुवचनस्थानेऽस्मद्वचनन
म। अग्निस्तुतिपूर्वकं सुहुतत्वाशंसनेनाग्नेरुपस्थानमनेन मंत्रेण क्रियते। इति वैश्वदेवमन्त्रव्याख्या। ततो यथोक्तान्बलीन्दत्वा ऋचं वाचमित्यध्यायेन
शान्तिं कुर्यात्। तत्र वेदमन्त्रव्याख्यापरत्वाद्ग्रन्थवल्लीनामत्र वैदिकमन्त्रपृथक्त्वाहलयोनाक्ताः। अत्र यद्यपि शान्त्यध्यायसंबधिनीनां सर्वासां मंत्रकण्डिका
नामृषिच्छन्दोदेवताविनियोगा विद्यन्त एव तथाप्यमीभिर्मन्त्रैः कर्मान्तरे क्रियमाणा एते स्मर्तव्याः। शांतिकर्मणि तु स्वाध्यायपाठस्य श्रुतत्वाद्देतेषां स्मरणं का
मीयमेव। ॐ ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये वागोजः सहौजो मयि प्राणापानौ। एतेषां दध्यङ्ङाथर्वण ऋषिर्विश्वेदेवा देवता-
महावीरादावन्तयोः शांतिकरणे विनियोगः। अस्यार्थः। अहं ऋचं ऋग्वेदं वाचं वाणीञ्च प्रपद्ये शरणं यामि तथा मन इन्द्रियं यजुः यजुर्वेदञ्च प्रपद्ये तथा सामवेदम
प्राणं प्राणवायुञ्च प्रपद्ये तथा चक्षुः श्रोत्रश्चेन्द्रियद्वयं प्रपद्ये किमर्थमेतेषु शरणगमनम् वाग् वचनं तेजो बलं प्राणापानौ वा पूर्णता निःसहत्यैकीभूय न पिवर्ते-
न्नामिसध्याहार्य्यम्। द्वितीयमोजग्रहणमादरार्थम्। महावीरकर्म्मणो भीषणत्वेन रागादिविरोधसंभावनायां साम विरोधाय शान्तिंकमेत्याशयः। वाङ्मनः
प्राणापानाभ्यां स्थित्यर्थं। ऋगादि वेदत्रयं वाङ्मनः प्राणश्चक्षुःश्रोत्राणि शरणं यामीति वाक्यार्थः। ॐ यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे
तद्दधातु शन्नो भवतु भुवनस्य यस्पतिः २ दध्यङ्ङाथर्वण ऋषिर्बृहस्पतिर्देवता पङ्क्तिश्छन्दो महावीरादावन्तयोः शान्तिकरणे विनियोगः। अस्यार्थः मे मम चक्षु
षः अच्छिद्रमन्यूनं तथा हृदयस्य बुद्धेरच्छिद्रमिति पूर्वेणैव संबन्धः तथा मनसः वा सम्बन्धे मनसश्च यदतितृण्णमतिहिंसितम् परहिंसादिचिन्तादीनाम् न्यून-
मित्यर्थः। तत्सर्वं मे मम बृहस्पतिर्देवाचार्यो दधातु संपूर्णं करोत्वित्यर्थः॥ तथा स निभुवनस्य त्रैलोक्यस्य यः पतिः प्रभुर्बृहस्पतिः स नोऽस्माकं शं भवतु सुखकारी भ ४७
वतु मम चक्षुर्बुद्धिमनसां यन्न्यूनं तद्बृहस्पतिः संपूर्णं करोतु यस्मिंश्च संपूर्णे जाते अस्माकं सुखकारी भवत्विति आशंसा वाक्यार्थः २ ॐ भूर्भुवः स्वः तत्सवितुर्व

रेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ३ तिसृणां महाव्याहृतीनां प्रजापतिर्ऋषिरग्निवायुसूर्या देवता गायत्र्युष्णिगनुष्टुप्छन्दांसि गायत्र्या विश्वामित्र
ऋषिर्गायत्री छन्दः सविता देवता महावीराद्यं तयोः शान्तिकरणे विनियोगः। अस्यार्थः भूः पृथिवी भुवः आकाशं स्वः स्वर्ग एतान् लोकान् इति विभक्तिं विप
रिणमय्य धीमहि इति क्रियापदं योज्यं तथा तस्य सवितुरादित्यस्य भर्गः वीर्यं तेजो वा धीमहि ध्यायेम चिन्तयाम इति यावत् किंभूतं वरेण्यं सर्वभूतवरे-
ण्यम् सर्वभूतेभ्यः श्रेष्ठम्। किंभूतस्य देवस्य देवतादिगुणयुक्तस्य पुनः किंभूतः यः सविता नोऽस्माकं धियः बुद्धीः प्रचोदयात् प्रेरयतु सकलपुरुषार्थेषु प्रव-
र्तयत्वित्यर्थः ३ ॐ कया नश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता ४ वामदेव ऋषिर्गायत्री छन्दः इन्द्रो देवता पूर्वोक्ते विनियोगः अस्यार्थः
चित्रे चयनकर्म्मणि प्रयोजक इन्द्रः कया नाम ऊती ऊत्या केन तर्प्पणेन नोऽस्माकं सदावृधः सर्वदा वृद्धिकारी भुवत् भूयात् आभुवादित्यत्र पठित आकारो-
ऽत्र तदनेन संबध्यते। कया नाम आवृता आवर्तनक्रियान्वितः सः सखा मित्रं भुवत् भूयात् किंभूतया आवृता शचिष्ठया शचिरिति कर्म्मणो नाम इति नि
घण्टुः तत्र श्रेष्ठा अतिशयकर्मवतीत्यर्थः। केन तर्प्पणेन कया वा कर्म्मक्रियया इन्द्रोऽस्माकं वृद्धिकारी सखा च भूयादिति प्रश्नो वाक्यार्थः। त्वया कथि
तेऽवयं तत्स्तुतिष्ठा मया सुइन् भवति। ऊती। इति अवरक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिं
सादानभागवृद्धिषु। अस्माद्धातो रूतियूतिसातिहेतिकीर्तयश्चेति निपातनात् क्तिन् प्रत्यये ज्वरत्वरस्रिव्यविमवामुपधायाश्चेति उपधया सह वका
रस्य ऊकारः ऊ इति ऊति शब्दस्य छान्दसत्वात् तृतीयैकवचने छन्दसि इयाजियाजीकरणामुपसंख्यानं कर्तव्यमित्यकारस्येकारः।४। ॐ कस्त्वा सत्यो म
दानां मंहिष्ठो मत्सदन्धसः। दृढा चिदारुजे वसु ।५। वामदेव ऋषिर्गायत्री छन्द इन्द्रो देवता पूर्ववद्विनियोगः। अस्यार्थः। हे इन्द्र कः कोरसः त्वा त्वाम-
मत्तं करोति कस्य रसः अन्धसः सोमस्य सोमलतायाः इत्यर्थः। किंभूतः स रसः सोमयागे क्रियमाणे अवश्यंभावी पुनः किंभूतः मदानां मध्ये मंहिष्ठो

ऋ॰सं॰ तिशयेन मदजनकः येन मदेन मत्तस्त्वं वसुवसूनि धनान्यारुजे आरुजसि भञ्जयसि किंभूतानि दृढानि चिदृढान्यपीत्यर्थः। दृढान्यपि स्वर्णादीनि धनानि यागक
४८ र्तृभ्यो दातुं भंजयसीत्यर्थः। हे इन्द्र केन मदेन मत्तस्त्वं सुवर्णादीनि ददासीति प्रश्नो वाक्यार्थः। त्वया कथिते वयमस्तु निश्चम इत्याशयः। तत्र मंहिष्ठ इ
ति महिद्धातोः चितुमिकृते मंहि इत्येतस्मा तिशयविवक्षायामिष्ठन्सीति इष्ठन्तु रिष्ठे मेयस्त्विति तचो लोपः मत्सदितिसरधातोर्लिटि तिप् इतस्य-
लोपः परस्मैपदेष्विति इकारलोपः सिब्बहुलंलेटीति सिप्प्रत्ययः लेटोडाटावित्यडागमः। आगमशास्त्रस्यानित्यत्वादिड्न भवति। दृढानीत्यत्र दृणाग
मो वर्णविपर्ययश्चेति णिलोपः। आरुजे इति मध्यमपुरुषे उत्तमपुरुषः। ५। ॐ अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतिभिः। ६। वामदे
वऋषिर्गायत्रीछन्दः इन्द्रो देवता पूर्ववद्विनियोगः। अस्यार्थः। हे इन्द्र नोऽस्माकं तथा सखीनां मित्राणां तथा जरितॄणां स्तोतॄणामविता पालयिता भवासि
भव केन प्रकारेण अभि अभिमुख्येन तथा सुः सुष्ठु यथा भवति किंभूतः सन् शतधा बहुधा भूतेत्यर्थः कैरविता भव ऊतिभिर्बहुभिः प्रकारैः रक्षणैः हे इन्द्र इ-
त्थं बहुमूर्तिर्भूत्वा अस्माकमस्मत्सखीनां स्तोतॄणां च बहुप्रकारं पालयिता भवेत्याशंसा वाक्यार्थः। अभीषुण इति अभी सु नः पदत्रये स्थिते इकः सुञीति दीर्घ
त्वं सुञः मूर्धन्यादेशः नश्च धातुस्थोरुषुभ्य इति णत्वम्। जरितॄणामिति धातूनामनेकार्थत्वात्स्तोतॄणामिति बोद्धव्यम्। भवासि इति लेट् मध्यमपुरुषैक
वचनम्। ६। ॐ कया त्वं न ऊत्याभि प्र मन्दसे वृषन्। कया स्तोतृभ्य आ भर। ७। वामदेवऋषिर्गायत्रीछन्दः इन्द्रो देवता पूर्ववद्विनियोगः। अस्यार्थः। हे वृषन्
इन्द्र कया नाम ऊत्या नो अस्मान् अभि प्र मन्दसे अभि सर्वतोभावेन प्रमोदयसि तथा कया नाम ऊत्या आभर आहरसि अर्जयसि अर्थाद्धनपुत्रादिकमिति। कि-
मर्थम् स्तोतृभ्यः स्तवकारिणां प्रयोजनेनेत्यर्थः हे इन्द्र कथमस्मान्प्रमोदयसि कथञ्च स्तवकारिणामन्नेन धनपुत्रादिकमर्जयसीति प्रश्नोऽसौ वाक्यार्थः ४८
त्वया कथिते वयं तथानुतिष्ठाम इत्याशयः। अत्राभि प्र मन्दस इति मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु इत्यस्माद्धातो रूपम्। आभरेति आहरेति भासे हृग्र

होभिः च्छन्दसीतिहकारस्यमकारः लङर्थेलोट्। ॐ इन्द्रोविश्वस्यराजति शंनोअस्तुद्विपदेशंचतुष्पदे।७। इध्मवाहः थर्वणऋषिर्द्विपदाविराट्छ
न्दइन्द्रोदेवताशुर्वेवह्निनियोगः। अयमर्थः। इन्द्रोविश्वस्यसर्वस्यजगतः राजतेदीप्यतेतस्यप्रसादेननोस्माकंद्विपदोमनुष्यस्यभार्यापुत्रादिकस्य
सुखमस्तुतथाचतुष्पदेगवादिकंस्यशमस्त्विति पूर्ववदेवसंबंधः। विश्वप्रभोरिन्द्रस्यप्रसादेनास्माकंभार्याभृत्यगवादीनांसुखंभवत्विति सा शंसाव
कार्थः। द्विपदेचतुष्पदेइतिषष्ठीसप्तम्यो ७। ॐ शन्नोमित्रः शंवरुणः शंनोभवत्वर्यमा। शंनइन्द्रोबृहस्पतिः शंनोविष्णुरुरुक्रमः। ८। इध्मवाहःथर्वण
ऋषिरनुष्टुप्छन्दइन्द्रोदेवताशुर्वेवह्निनियोगः। अयमर्थः। अनेनशान्तिकर्मणानोस्माकंमित्रः सूर्यः शंभवतुसुखायभवतुतथावरुणः शंभवतुअर्य
मासूर्यश्चनः शंभवतुतथाइन्द्रोबृहस्पतिश्चनःशंभवतुतथाविष्णुःनः शंभवतुकिंभूतोविष्णुःउरुक्रमः उरुर्वहुः क्रमोयस्यसउरुक्रमः त्रिविक्रमइ-
त्यर्थः भवत्विति क्रियापदमेकत्रपठितंसर्वत्रैवसंबंध्यते। मित्रवरुणार्यमेन्द्रबृहस्पतिविष्णवोस्माकंसुखायभवन्त्विति सा शंसावाक्यार्थः। ८। शन्नोवा
तःपवतांशंनस्तपतुसूर्यः। शंनःकनिक्रदद्देवः पर्जन्योअभिवर्षतु। इध्मवाहथर्वणऋषिरनुष्टुप्छन्दोवायुसूर्यपर्जन्यादेवताशुर्वेवह्निनियोगः। अयमर्थः
।वातोनः शंसुखायपवतांवहतुसूर्योनः शंसुखायतपतुअरादृकोभूत्वित्यर्थः पर्जन्योदेवोमेघः नः शंसुखायाभिवर्षतु किंभूतःकनिक्रदत्आक्रन्द
मानःगर्जन्निपिसुखायभवत्वित्यर्थः। वातसूर्यपर्जन्याः। अस्माकंसुखायभवन्त्विति, शंसावाक्यार्थः। ९। अहानिशंभवन्तुनः शंरात्रीः प्रतिधीयता-
म्। शंनइन्द्राग्नीभवतामहोभिः। शंनइन्द्रावरुणौरातहव्या शंनइन्द्रापूषणावाजसातौ शमिन्द्रासोमासुवितायशंय्योः। १०। इध्मवाहथर्वणऋषिर-
हानिशान्द्विपदागायत्रीशंनइन्द्राग्नीत्रिष्टुप्छन्दइन्द्रोदेवताशुर्वेवह्निनियोगः। अयमर्थः अहानिदिवसानोस्माकंशंसुखायभवन्तुतथारात्रिः शंसुखा
यप्रतिधीयताम् प्रतिदधातुभवत्वितियावत्तथाइन्द्राग्नीनःसुखायभवतामकैः अहोभिः पालनैः तथाइन्द्रावरुणौशंसुखायभवताम् किंभूतौरात

शां॰ स॰ ४९ हृद्यो। तथा इन्द्रापूषणौ नः शं सुखाय भवताम्। किमर्थं सुविताय साधुगमनाय उत्तमगतिप्राप्तये न केवलं शं य्योश्च कल्याणयोगाय च। १०। ॐ शंनो दे-
वीरभिष्टय आपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः। दध्यङ्ङाथर्वण ऋषिर्गायत्री छन्द आपो देवता पूर्ववद्विनियोगः। ११। अस्य व्याख्यानं मध्यान्हस्ना-
ने लिखितम्। ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः। १२। मेधातिथिर्ऋषिर्गायत्री छन्दः। पृथिवी देवता पूर्ववद्विनियो-
गः। अयमर्थः। हे पृथिवि त्वं नोऽस्माकं स्योना सुखदा भव अतः अनृक्षरा भव नृक्षराः कण्टकः सास्यां नास्तीत्यनृक्षरा निष्कण्टका इत्यर्थः तथा निवेशनी भव
निवेशोऽवस्थानं तद्योग्या एवंविधा च भूत्वा नोऽस्माकं शर्म सुखं यच्छ देहि किंभूता सती सप्रथा सविस्तरा अतिविस्तरेत्यर्थः। हे पृथिवी अस्माकं सुख-
रूपा अकण्टका अवस्थानार्हा च भूत्वा सुखं देहीति मंत्रवाक्यार्थः सप्रथा इति। प्रथ प्रख्याने इत्यस्मात् असुन्प्रत्ययान्तस्य प्रथमैकवचनम्। १२। ॐ आपो
हिष्ठेति। यो वः शिवेत्यादि। तस्मा अरङ्ग इत्यादि। त्रयाणां सिन्धुद्वीप ऋषिर्गायत्री छन्द आपो देवता पूर्ववद्विनियोगः एतन्मन्त्रत्रयस्य व्याख्यानं प्रा-
तःस्नाने तु संधेयम्। १५। ॐ द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शा-
न्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि। १६। दध्यङ्ङाथर्वण ऋषिरिन्द्रो देवता यजुषां छन्दो नास्ति पूर्ववद्विनियोगः। अयमर्थः। द्यौः स्वर्गः।
शान्तिः सर्वविघ्नोपशमोऽस्तु अस्माकमित्यध्याहार्यम्। तथान्तरिक्षं पृथिवी च शान्तिरस्तु आपः शान्तिः शान्तय ओषधयो व्रीह्यादयः शान्तिः शान्तयः सं-
तु वनस्पतयो वृक्षाः शान्तयः सन्तु एवं या शान्तिः कृता सैव शान्तिरस्तु अत्र सर्वत्रैव द्यौः प्रभृति शान्तिरित्यन्तैः पदैः तत्स्वर्गाधिष्ठात्र्यो देवता अस्माकं वि-
घ्नोपशमपूर्वकमभीष्टसम्पादनाय भवन्त्वित्याशंसा वाक्यार्थः। आपः शान्तिरित्यादिषु सुपां सुपो भवंतीति बहुवचने एकवचनम्। १६। ॐ दृते दृंह मा ४९
मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्। मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे। १७। दध्यङ्ङाथर्वण ऋषिरि-

द्रोदेवतायजुषांछन्दोनास्तिपूर्ववद्विनियोगः।अयमर्थः।हेइन्द्रअनेनशांतिकर्मणाममधृतेदृंहदृंहंकुरुअत्रयतेममयादृढंपरिगृहीतंशरीरभार्यापु
त्रादिधनंपरिगृहीतम्।तत्तत्मादृंहमखण्डितमकुर्वित्यर्थः।।किंचमामांसर्वाणिभूतानिसर्वेप्राणिनःसमीक्षन्ताम् पश्यन्तुकिंनमित्रस्यचक्षुषेहिंसकं
भवतिमित्रस्यचक्षुर्यादृगहिंसकंतादृशेनचक्षुषासर्वेप्राणिनोमांशुभदृष्ट्यापश्यन्त्वित्यर्थः।एवंसतिसर्वेप्राणिनोहञ्चमित्रस्यचक्षुषाअन्योन्यंस
मीक्षामहेहेइन्द्रमांशरीरभार्यापुत्रादिभिःसंपूर्णंकुरुसर्वप्राणिनोमांमित्रवत्पश्यन्तुअहमपितान्मित्रवत्पश्यामीतिप्रार्थनावाक्यार्थः।१७।ॐ
धृतेदृंहमाज्योक्संदृशिजीव्यासम्।१८।दध्यङ्ङाथर्वणऋषिरिन्द्रोदेवतायजुषांछन्दोनास्तिपूर्ववद्विनियोगः।हेइन्द्रधृतेदृंहमाउक्तपूर्वकण्डिका
यामेवंव्याख्यातंपुनर्वचनमादरार्थंकिंचतेतवसंदृशिसन्दर्शनेसतिज्योक्चिरञ्जीव्यासमअहंजीवेयम्।अत्रापिपुनर्वचनमादरार्थम्।त्वयादृष्टो
हञ्चिरञ्जीवेयमित्याशंसावाक्यार्थः।१८।ॐ नमस्तेहरसेशोचिषेनमस्तेअस्त्वर्चिषेअन्यांस्तेअस्मत्तपन्तुहेतयः।पावकोअस्मभ्यंशिवोभव।१९।ऋ
षिपुत्रीलोपामुद्राऋषिरग्निर्देवताबृहतीछन्दःपूर्ववद्विनियोगः।अयमर्थः।हेअग्नेतेतुभ्यंनमोस्तिसुतरामवस्थितमत्रापियोज्यम्।किंभूतायतुभ्य
म्हरसेहरतस्यहर्त्रेकिंभूतायशोचिषेदीप्तिकारिणेतथाअर्चिषेअर्चिःस्वरूपायतेतुभ्यंनमोस्तुकिमर्थम्तेतवहेतयोज्वालाअस्मदन्यान्विरुद्धान्तपन्तु
दहन्तुनकेवलमेवत्वंपावकःसन्नस्मभ्यंशिवःकल्याणोभवएतदर्थंत्वंनमस्कृतोग्निरस्माकंविरुद्धान्दहत्वस्माकंकल्याणोभवत्वित्याशंसावाक्या
र्थः।अत्रहरसेइतिहृञ्हरणेइत्यस्यसर्वधातुभ्योसुन्नितिसुन्प्रत्ययः।१९।नमस्तेअस्तुविद्युतेनमस्तेस्तनयित्नवे।नमस्तेभगवन्नस्तुयतःस्वःसमीह
से।२०।दध्यङ्ङाथर्वणऋषिरनुष्टुप्छन्दइन्द्रोदेवतापूर्ववद्विनियोगः।हेइन्द्रतेतुभ्यंनमोस्तुकिंभूतायविद्युतेविद्युद्रूपायतथास्तनयित्नवेमेघरूपा
यतेतुभ्यंनमः तथाहेभगवन्सकलैश्वर्यशालिन्तेतुभ्यंनमोस्तुकेनकारणेनत्वंनमस्क्रियसेयतःकारणात्त्वःस्वर्गंदातुंसमीहसेचेष्टसेदातुमि

ग्रा·स त्यथ्याहार्य्यम्।हेइन्द्रत्वंयत्स्वर्गार्थिनांस्वर्गंददासिअतस्तुभ्यंविद्युद्रूपायमेघरूपायनमोस्त्वित्याशंसावाक्यार्थः॥२०॥ॐयतोयतःसमीहसेततोनो
५० अभयंकुरु।शन्नःकुरुप्रजाभ्योभयंनःपशुभ्यः२१।दध्याङ्ङाथर्वणऋषिरनुष्टुप्छन्दइन्द्रोदेवतापूर्ववद्विनियोगः अयमर्थः।हेइन्द्रत्वंयतोयतःयस्माद्य
स्मादस्मत्कृताद्दुरुपचारादस्माकंभयंकर्तुंसमीहसेचेष्टसेततस्तस्मान्नोस्माकमभयंकुरु।किंचनोस्माकंप्रजाभ्यःपुत्रादिभ्यःशंसुखंकुरुतथानःप
शुभ्योगवादिभ्योऽभयंकुरुइतिपूर्वेणसंबध्यतेअस्माकंत्वद्दुरुपचारंप्राप्यास्माकंभयायचेष्टसेतस्मादस्माकमस्मत्पुत्रादीनामभयंसुखञ्चकुर्वितिप्रा
र्थनावाक्यार्थः।२१।ॐसुमित्रियानआपओषधयःसन्तुदुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयंद्विष्मः।२२ दध्यङ्ङाथर्वणऋषिरापोदेवतायजुषं
छन्दोनास्तिपूर्ववद्विनियोगः।अयमर्थः।आपःओषधयःव्रीह्यादयःनोस्माकंसुमित्रियाःसन्तुसाधुमित्रत्वेनावस्थिताभवन्तुयाडर्म्मित्रियाःदुष्टमित्र
त्वेनावस्थितास्तास्तस्मैसन्तुतस्मैकस्मैयोस्मान्द्वेष्टिअस्माकन्द्वेषंकरोतियञ्चवयन्द्विष्मःयस्मिन्वयद्वेषंकुर्म्मः।आपोव्रीह्यादयश्चास्माकंसाधुमित्र
वदभीष्टकारिण्योभवन्तुअस्मच्छत्रूणाञ्चदुष्टमित्रवद्विरोधिन्योभवन्त्वित्याशंसावाक्यार्थः।२२।ॐतच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत्।पश्येमशरदः
शतञ्जीवेमशरदःशतंशृणुयामशरदःशतम्।भवामशरदःशतमदीनाःस्यामशरदःशतंभूयश्चशरदःशतात्।२३।दध्यङ्ङाथर्वणऋषिःसूर्योदेव
तापुरउष्णिक्छन्दःपूर्ववद्विनियोगः।अस्यार्थः।तत्पश्येमकिंतत्चक्षुःरिवन्नेलोकप्रकाशकत्वादादित्यमण्डलमित्यर्थः।तत्किंभूतंदेवहितंदेवानांहि
तंपुनःकिंभूतम्पुरस्तात्उच्चरत्प्राच्यामुद्यत्पुनःकिंभूतम्शुक्रंशुक्लंनिर्मलमित्यावत्।अस्यादित्यस्यदर्शनाद्वयंशरदःशतंपश्येमजीवेमशरदःशतं
शृणुयामशरदःशतंयोयंसर्वेदमयश्चादित्यःमत्यहंप्राच्यामुदेतितस्यप्रसादेनवयमविकलेन्द्रियाःशतंवर्षाणिजीवेमेत्याशंसावाक्यार्थः॥२४॥ ५०
इतिशान्त्यध्यायः॥ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञंसमिमन्दधातुविश्वेदेवासइहमादयन्तामोम्प्रतिष्ठ।अस्यार्थः

आङ्गिरसोबृहस्पतिऋषिर्विश्वेदेवादेवतापज्जुष्टाच्छन्दोनास्तिसमिदन्तुमन्त्रणेविनियोगः।अस्यार्थः।मदीयंमनः।आज्यस्यमयाचाहूयमानस्यहवनीयद्रव्य
स्यफलञ्जुषतांसेवतांप्राप्नोत्वितियावत्।किंभूतंमनःज्योतिरिवप्रकाशकमित्यर्थः।बृहस्पतिरिमंप्रकृतंयज्ञन्तनोतुविस्तीर्णंकरोतु।किंचबृहस्पतिरिमंय-
ज्ञंसन्दधातुसंपूर्णंकरोतुकिंभूतमरिष्टमिष्टहीनम्तथाविश्वेदेवासःसर्वेदेवाःइहप्रकृतेकर्मणिमादयन्ताम्हृष्टाभवन्तु।एवंसतिहेयज्ञत्वंॐप्रतिष्ठ।
ॐकारोच्चारणार्थःरक्षितःसन्प्रतिष्ठितोभवेत्यर्थः।यत्किंचिद्विश्वेदेवादिकंकृतंतस्यफलंमदीयंमनःप्राप्नोतुतस्मिंश्चकर्मणिबृहस्पतिंविस्तारितेप्र
ष्ठितेचसर्वेदेवाहृष्टाभवन्तुतच्चकर्मणिप्रतिष्ठितंभूत्वामदीयाभ्युदयायसंपद्यतामित्याशंसावाक्यार्थः ॐयज्जाग्रतोदूरमुदैतिदैवन्तदुसुप्तस्यतथैवैति
दूरङ्गमञ्ज्योतिषांज्योतिरेकंतन्मेमनःशिवसंकल्पमस्तु।१।शिवसंकल्पऋषिकर्मणोदेवतात्रिष्टुप्छन्दःदिसोपस्थानेविनियोगः।अयमर्थः।यन्म
नःजाग्रतोनिद्राहीनस्यदूरमुदैतिगच्छतिकिंभूतंदैवंदेवस्यब्रह्मणोविज्ञानस्वरूपस्यप्रकाशकमपिचतन्मनःसुप्तस्यनिद्राणस्यतथैवदूरमेवएतिआ
गच्छतिआगमनेनदूरत्वाभिधानंसर्वेन्द्रोपसंहतत्वेनित्वस्थापनार्थम्।किंभूतंमनःज्योतिषांप्रकाशकानांचक्षुरादीन्द्रियाणांमध्येदूरङ्गमञ्ज्योति
दूरगामीन्द्रियंअन्यानिचक्षुरादीनिसन्निहितप्रकाशकानिमनस्तुव्यवहितप्रकाशकमित्यर्थः।पुनःकिंभूतंएकमुत्तमञ्चक्षुरादीनिस्थानप्रकाशका
निमनस्त्वसन्निहितसूक्ष्मप्रकाशकम्।अतश्चक्षुरादीनामुत्तमत्वंतन्मेममनःशिवसंकल्पमस्तुकल्याणाभिलाषिभवतु।मदीयंमनोनिकृष्टाभिला
षपूर्णकल्याणाभिलाषिभवत्वित्याशंसावाक्यार्थः।१।ॐधामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पतिःसचेतसोविश्वेदेवायज्ञंप्रावन्तुनःशुभे।१।मधुच्छ
दऋषिरनुष्टुप्छन्दोविश्वेदेवादेवादेवताचित्युपस्थानेविनियोगःअयमर्थः।अग्निरिन्द्रोब्रह्माबृहस्पतिरेतेयज्ञंप्रकृतंकर्मणःशुभेअस्माकमभ्युद
यार्थंप्रावन्तुअयान्तुकिंभूतोग्न्यादिगणःधामच्छत्धामआज्यन्छादयतिपूरयतीतिधामच्छत्न्यूनपूर्णेनातिरिक्ताशातनेनचयथावत्कारीसर्वे

वा·स पुनः किंभूतः देवः दानादिगुणयुक्तः एतत्त्रिविशेषणद्वयमग्न्यादिभिस्त्रिभिः सहसंबध्यते। किंच विश्वेदेवा नोस्माकं शुभे शुभनिमित्तं प्रावन्तु आयान्तु
५१ किंभूताः सचेतसः समानचेतसः एकमनस इति यावत् ये अग्न्यादयो देवाः आश्रयभूतं कर्म यथावत्कुर्वन्ति ते प्रकृतकर्मणः प्रकृतं कर्म्म यथावत्करणे
नास्माकं शुभे निर्वाहाय प्राप्यन्त्विसाशंसा वाक्यार्थः।२। ॐ त्वंयविष्ठदाशुषो नॄः पाहि शृणुधी गिरः रक्षा तोकमुत त्मना।२। उशना काव्यऋषिः अ
ग्निर्देवता गायत्री छन्दः अग्निउपस्थाने विनियोगः। अयमर्थः। हे यविष्ठ युवतम अग्ने त्वं नॄन् मनुष्यान् भार्यादिपरिजनानिति यावत्। पाहि रक्ष कस्मात् दाशु
षः दत्तवतः हवींषि दत्तवतो मम इत्यर्थः। किंच गिरः स्तुतिवचनानि शृणुधि शृणु श्रुत्वा च मम तोकमपत्यं रक्ष उत अपि च त्मना आत्मना अङ्गहैपत्यादि
त्वेनावस्थितं रक्षेति संबन्धः हे अग्ने त्वं मद्दत्तानि हवींषि गृहीत्वा स्तुतिवाक्यानि च श्रुत्वा मम भार्यादिपरिजनान् पुत्रान् गार्हपत्यादि अग्नींश्च रक्षेत्यभ्यर्थ
ना वाक्यार्थः। अत्र दाशुष इति दाशृ दाने इत्यस्मात् लिट् क्वसुश्च दाश्वान्साह्वान्मीढ्वांश्चेति अर्हि वचनमनिट्त्वञ्च निपात्यते दाश्वस् शब्दस्य षष्ठ्येक
वचने संप्रसारणे रूपम्। त्मना इति मन्त्रेष्वाङ्यादेरात्मन इत्याकारलोपः द्वितीयार्थे तृतीया॥२॥ ॐ एतत्ते रुद्रावसन्तेन परो मूजवतो तीहि। अवमतध
न्वा पिनाकावसः कृत्तिवासा अहिंसन्नः शिवो तीहि।१। प्रजापतिर्ऋषिर्विष्टारपङ्क्तिः छन्दो रुद्रो देवता त्र्यम्बकपुरोडाशाभ्यंजने विनियोगः। अस्या
र्थः। हे रुद्र अतीहि पाहि केनेतेन अवसेतेन अवसं वन्मार्गबलं एतेनोपस्थितेन पुरोडाशरूपेण शंबलेन किम्भूतः मूजवतः परः मूजवन्नाम सुमेरुश्च
ङ्गं भगवतो रुद्रस्य निवासः तस्य परः परस्तात् गामी पुनः किंभूतः अवततधन्वा आरोपितधनुः हिंसादीनामलंघ्य इत्यर्थः। पुनः किंभूतः पिनाकावसः
पिनाको रुद्राङ्कुशः स्तत्र कृतमवसं शम्बलं येन स पिनाकावसः तथा च कृत्तिवासाः कृत्तिश्चर्म वासः परिधानं यस्य एवंभूतस्त्वं नोस्मान हिंसन्नः शिवः ५१
परमेश्वरः शान्तः सौम्यः अतीहि पाहीति पुनर्वचनं पूजार्थम्। हे रुद्र मत्तः एवं पुरोडाशं शम्बलं रुद्राङ्कुशे कृत्वा धनुरारोप्यास्मान हिंसन्सौम्यो भू

लाम्बूलवन्तंसुस्थानंपाहीतिप्रेरणंवाक्यार्थः।ॐनमोब्रह्मणेनमोस्त्वग्नयेनमःपृथिव्यैनमःॐषधीभ्योनमोवाचेनमोवाचस्पतयेनमोविष्णवेमहते
करोमिइत्यापस्तम्बीयोमन्त्रः।अस्यार्थः।ॐकारोरक्षणार्थःमङ्गलार्थोवाइदंशान्तिकर्मरक्षितंभवत्वित्यर्थः।ब्रह्मणेनमोस्त्वग्नयेनमोस्तुपृथिव्यैनमोस्त्वो
षधीभ्योव्रीह्यादिभ्योनमोस्तुवाचस्पतयेनमोस्तुविष्णवेनमस्करोमिमहतेमहत्त्वायनमस्करोमिअनेनशान्तिकर्मणासमाभ्युदयसिद्धयेब्रह्मादीन्नम
स्करोमीतिवाक्यार्थः॥१॥ॐयेदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ।अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमञ्जुषध्वम्।मरुच्छ
दृक्ऋषिस्त्रिष्टुप्छन्दोविश्वेदेवादेवताआश्चर्यग्रहणेविनियोगः।अस्यार्थः।हेदेवासःदेवाःयेयूयंदिविस्वर्गेएकादशस्थएकादशकोटिसंख्यास्थपृथ
व्यापृथिव्यामधिपृथिव्युपरिएकादशस्थतथाअप्सुक्षितःअप्सुसेवंरूपःशब्दआकाशवाचीक्षितःस्थिताःआकाशस्थाइत्यर्थः।एकादशकोटिसं
ख्याःस्थ।केनस्थिताःमहिनामहिम्नामाहात्म्येनेत्यर्थः।हेदेवासःइमंयज्ञंशान्तिकरणरूपंयूयञ्जुषध्वंसेवध्वम्।स्वर्गाकाशपृथिवीस्थास्त्रयस्त्रि
शत्कोटिसंख्यादेवाइदंशान्तिकर्माधिष्ठायास्माकमभ्युदयंकुर्वन्त्वितिप्रार्थनावाक्यार्थः।इत्यावसथिकमहाधर्माधिकृतश्रीहलायुधविरचितेब्रा
ह्मणसर्वस्वेवैश्वदेवशान्त्यध्यायव्याख्या॥अथातिथिपूजा॥तत्रमनुः वैश्वदेवेतुनिर्वृत्तेयद्यन्योतिथिराव्रजेत्।तस्याप्यन्नंयथाशक्तिप्रदद्यान्नब
लिंहरेत्।शातातपपाराशरौ।प्रियोवायदिवाद्वेष्योमूर्खःपण्डितएववा।वैश्वदेवेतुसम्प्राप्तःसोतिथिःस्वर्गसङ्क्रमः।बलिदानानन्तरंविष्णुपुराणे।
ततोगोदोहमात्रंवैकालंतिष्ठेद्गृहाङ्गणे।अतिथिग्रहणार्थायतदूर्ध्वंवायथेच्छया।अतिथिंतत्रसम्प्राप्तंपूजयेत्स्वागतादिना।तथासनप्रदानेनपादप्रक्षा
लनेनच।श्रद्धयाचान्नदानेनप्रियप्रश्नोत्तरेणच।गच्छतश्चानुयानेनप्रीतिमुत्पादयेद्गृही।अज्ञातकुलनामानमन्यतःसमुपागतम्।पूजयेदतिथिंसम्य
गनैकग्रामनिवासिनम्।बलिदानानन्तरंशंखलिखितौ।आगोदोहनमात्रंकालमाकाङ्क्षेत।अतिथिंश्रोत्रियोदेवव्रतीयतिर्धर्म्मनैष्ठिकः।समानव्र

ब्रा॰ स॰ त्तिर्योन्योध्यापक आगच्छेत्तस्मिन्काले तमन्नं पित्वा श्रोत्रीयात्कषिद्त्तिर्थपिब्राह्मणो ह्यनश्नन्सुकृतमादत्ते। पर्य्यश्नन्नत्रः शुद्धां कृन्तति। वाग्दुरितेनेना-
५२ न्नयः शाम्यन्ति तस्मादाहिताग्निर्नानृतवादी न शूद्राशीनासूक्तवाक्याभिधायी भवेत्। एवमाह। अपि शाकं पचानस्य शिलोञ्छेनापि जीवतः। गृह्णान
स्याग्निहोत्रन्तु नातिथिर्विमना भवेत्। अग्नयोतिथिमिच्छन्ति सोतिथिः स्वर्गमिच्छति। स्वयमिच्छति दातारं सम्यक् सुकृतकारिणम्। प्रार्थयन्ते
यथा सर्वे निपानं मृगपक्षिणः। एवं गृहस्थं संपन्नं प्रार्थयन्ती हि साधवः। आतिथ्याधिकारे हारीतः। तस्यैष यदाह स्वागतमिति गृहदेवतास्तेन प्रीणा
ति। पसादसेचनं कुरुवे पितृस्तेन प्रीणातियदेनं ज्ञातिथिं पूजयति प्रजापतिं तेन प्रीणातियदेनं पान्तमनुयाति श्रेयस्सो व्रतस्य वर्षस्यन्ते नसर्वान्कामानवाप्नो
ति। मनुः। एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः। अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते। याज्ञवल्क्यः। अध्वनीनोतिथिर्ज्ञेयः श्रोत्रियो वेदपार
गः। मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः। पाराशरः। अचिन्तितमनाहूतं देशकालउपस्थितं। अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः। त-
थ्या क्षुधार्तस्तृषितः शान्तो दैवाद्ध्वानमागतः। तं पूजयेत्प्रयत्नेन सोतिथिः स्वर्गसंक्रमः। मनुः। नैकग्रामीणमतिथिं विप्रं सांगतिकं तथा। उपस्थितं गृहे वि
द्याद्भार्या यत्राग्नयोपि वा। शंखः। न यज्ञैर्दक्षिणावद्भिर्वह्निशुश्रूषया तथा। गृही स्वर्गमवाप्नोति यथा चातिथिपूजनात्। यमः। नाग्निहोत्रेण दानेन नोपवा
सफलेनेच। देवताः परितुष्यन्ति यथा चातिथिपूजनात्। उतनर्यमः। विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी। तावत्पुष्करपात्रेण पिबन्ति पितरो जलम्। यस्मा
द्धरिन्नाः पथिकाः गृहमायान्ति कर्षिताः पूज्यं तेषां तृणभूम्याद्यैः वित्तरत्नेन पुत्रिणः। बौधायनः। यदा बहूनां न शक्नुयादेकस्मै गुणवते दद्यात् यो वा प्रथम-
मागतः स्यात्। पैठीनसिः। सविशेषतो नमतिथये दद्यात्। पुत्रं जातमुदीक्षंते श्रोत्रियं भोजयिष्यतीति। वदन्ति पितरः पितामहाः प्रपितामहाश्च स्वागतेना- ५२
ग्निरासनेनेन्द्रः पितरः पाद्येनान्नाद्येन प्रजापतिः। स्वागतेनाग्नयः शीताश्चासनेन शतक्रतुः। पितरः पादशौचेन भोजनेन प्रजापतिः। मनुः। अप्रणोद्योति

थिःसायंसूर्योढो गृहमेधिनाम्। काले प्राप्ते ल काले वा नाश्नन्नं गृहे वसेत्। तथा शिलानप्युंच्छतो नित्यं पञ्चाग्नीनपि जुह्वतः। सर्वं सुकृतमादत्ते
ब्राह्मणोनर्चितो वसन्। तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता। एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन। विष्णुपुराणे। दिवातिथौ तु विमुखे
गते यत्पातकं नृणाम्। तदेवाष्टगुणं पुंसां सूर्योढे विमुखे गते। इत्यतिथिपूजाप्रकरणम्। लक्ष्मणसूनोः क्षितिपालस्य धर्माध्यक्षो हलायुधः। निखिल
श्राद्धमन्त्राणां व्याख्यां व्याख्यापितवानिमाम्। अथ श्राद्धमन्त्रव्याख्या। तत्र यद्यपि नित्याह्निकप्रसङ्गवशात्प्रथमतो नित्यश्राद्धव्याख्यैव कर्तुं युज्यते त
थापि सर्वेषामेवान्येषां सपिण्डीकरणनित्यश्राद्धैकोद्दिष्टश्राद्धादीनां प्रकृतिभूतं सर्वप्रधानं पार्वणश्राद्धविध्यन्तर्भावित्वेन पार्वणश्राद्धमन्त्र
व्याख्यानादेव सकलनित्यनैमित्तिककाम्यश्राद्धमन्त्रव्याख्यानस्य सिद्धिरतः पार्वणश्राद्धमन्त्रव्याख्यानमेव प्रथमतः क्रियते। ये तु सपिण्डीकर-
ण वृद्धिश्राद्धयोर्मन्त्रा अत्र न प्राप्यन्ते ते तस्यैव शेषे व्याख्यायन्ते। अथ पार्वणश्राद्धम्। तत्र कुशासनदानानन्तरं विश्वेदेवावाहनम्। आसनेषूद
र्भानास्तीर्य विश्वान्देवानहमावाहयिष्ये इति पृच्छति आवाहयेत्यनुज्ञातो विश्वेदेवास इत्यनया वा नवकीर्य्यार्थ भाजने सपवित्रके इति। याज्ञवल्क्यः
।आवाहयेत्यनुज्ञातो विश्वेदेवास आगत इत्यनया ऋचा वा ह्येति। कात्यायनः। तत्र गृत्समद ऋषिर्गायत्री छन्दो विश्वेदेवा देवता निष्टोभे वैश्वदेवग्रहणे
विनियोगः। मन्त्रो यथा। ॐ विश्वेदेवास आगत शृणुता म इमं हवम्। एदं बर्हिर्निषीदत ॥१॥ अस्यार्थः। हे विश्वेदेवासः यूयं मे मम इदं हवमाह्वा
नं शृणुत श्रुत्वा चागत आगच्छत आगत्य इदं बर्हिः कुश आनिषीदत आसनार्थमुपकल्पिते बर्हिषि निविष्टा भवतेत्यर्थः। अत्र विश्वेदेवास इति स
म्बोधने प्रथमाबहुवचने आज्जसेरसुगित्यसुगागमेन रूपम्। शृणुता इत्यत्र तस्य तादिति तकारस्य स्थाने तादेशः। आगतेति आगच्छत इत्यत्र व
र्णागमो वर्णविपर्ययश्चेति छकारलोपः। आनिषीदतेति छन्दसि परेऽपि व्यवहिताश्चेति पाणिनिस्मरणाद्व्यवहितेनाऽऽनिषीदतेत्यस्य संबन्धः। इ

श्रा०स० इदंबर्हिरितिआङ्कर्म्मप्रवचनीयइत्यनेनसप्तम्यर्थेद्वितीया।यवविकरणानन्तरंजपः।तथाचकात्यायनः।अवकीर्य्यविश्वेदेवाःशृणुतेममिति-
४३ जपेदिति।अत्रसुहोत्रऋषिस्त्रिष्टुपछन्दोविश्वेदेवादेवतासर्वमेधेवैश्वदेवग्रहणेविनियोगः।मन्त्रोयथा।ॐविश्वेदेवाःशृणुतेमꣳहवंमेयेअन्त
रिक्षेयउपद्यविष्ठ।येअग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वम्॥२॥अस्यार्थः।हेविश्वेदेवायूयंमेममइदंहवमाह्वानंशृणुत
किंभूतायूयंयेअन्तरिक्षेआकाशेस्थतिष्ठत।तथायेउपसमीपेद्यविद्यांद्युविस्वर्गेदिवयोःस्थइत्यनेनैवसंबन्धः।एतदुक्तंभवति।भूमावाकाशेस्व-
र्गेचयेस्थिताविश्वेदेवाः।कतेयेअग्निजिह्वाःअग्निजिह्वाहविर्भोजनसाधनंयेषांउतवाअपिवावायेयजत्राःयजन्तश्राद्धकारिणांत्रायन्तइतियजत्राः
शुरोखोमाद्रवप्रभतयः।तेयूयमस्मिन्सदनेबर्हिषिकुशेआसद्यउपविश्यमादयध्वम्मद्रोहर्षस्तद्युक्ताभवत।मादयध्वमितिस्वार्थेणिच्।श्राद्धे
चदेवारक्षितारइत्यत्रतेषामारक्षभूतत्वदेवंपूर्वयोजयेदितिमनुप्रमाणम्।एतज्जपानन्तरंपितृणामावाहनम्।यथाकात्यायनः।उशन्तस्त्वेत्यन
यावाह्येति।तत्रशंखऋषिरनुष्टुप्छन्दःपितरोदेवतासोधामअग्न्युपस्थानेविनियोगः।मन्त्रोयथा।ॐउशन्तस्त्वानिधीमह्युशन्तःसमिधीमहि।
उशन्नुशतआवहपितॄन्हविषेअत्तवे।अग्निर्देवतोमन्त्रः।तेनायमर्थः।हेअग्नेत्वांत्वांनिधीमहिआदधीमहिआधानंकुर्म्मइतियावत्वयमित्यध्या
हार्य्यम्।किंभूतावयम्।उशन्तस्त्वामिच्छन्तः।किंचउशन्तएवायत्त्वांसमिधीमहिज्वालयामः।त्वञ्चास्माभिराहितोज्वालितश्चपितॄनग्निष्वात्तादी
नावहआवाहयआनयेत्यर्थः।किंभूतस्त्वंउशन्पितॄनिच्छन्किंभूतान्पितॄनुशन्तइच्छन्तः।किमर्थमावाहनमित्यतआह।हविषेआस्मद्दत्तंहवि
षःअत्तवेअदनार्थम्।हेअग्नेअस्माभिराधानज्वालनाभ्यामाराधितस्त्वमस्माकंपितॄन्श्राद्धदेयस्यहविषोभक्षणायानयेत्यग्नेःप्रार्थनमवोक्त्या ४३
र्थः।पदसाधनञ्चवर्णराप्रस्तावएवकृतम्।आवाहनानन्तरञ्जपः।कात्यायनः।अवकीर्य्यायन्तुनइतिजपेत्।तत्रशंखऋषिस्त्रिष्टुप्छन्दःपितरोदे

वतासौत्रामण्युपस्थानेविनियोगः ।मन्त्रोयथा।। ॐ आयन्तुनः पितरःसोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः।अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुते
वन्त्वस्मान्।अस्यार्थः।नोअस्माकंपितरःआयन्तुआगच्छन्तुकेतेपितरःसोम्यासःसोम्याःसोमपाः इत्यर्थः।नकेवलंसोम्याःअग्निष्वात्ताश्चश्रौत-
स्मार्ताग्निभिश्चष्वात्ताः भक्षितास्तेषांश्रौतस्मार्ताग्निभिः संस्काराः कृताइत्यर्थः।कैरागच्छन्तुपथिभिर्वर्त्मभिः किंभूतैर्देवयानैर्देवानांयानंगम
नंयैर्वर्त्मभिस्तैरागत्यतेपितरोस्मिन्श्राद्धरूपेयज्ञेअस्मान्पितरअधिब्रुवंतुअधिकानब्रुवन्तुश्लाघयन्त्वित्यर्थः।किंभूताःमदन्तःतृप्यन्तःकया-
स्वधयापितृणामन्नेननकेवलमधिब्रुवन्तुअवन्तुचरक्षन्तुच।अस्मिन्श्राद्धेअस्माकंपितरःसोमपाःअग्निष्वात्ताःआगच्छन्तुआगत्यचस्वधयाहृष्ट
त्तान्नेनतृप्तानोस्मान्श्लाघयन्तुरक्षन्तुचेत्याशंसावाक्यार्थः।पदसाधनन्तुतर्पणप्रस्तावेकृतम्।ततःपात्रेषुजलदानेकात्यायनः।पवित्रवत्स्वेवमसे
षुपवित्रांतर्हितेषुएकैकस्मिन्नपआसिञ्चति शन्नोदेवीरिति।तत्रदध्यङ्डाथर्वणऋषिरापोदेवतागायत्रीछन्दोमहावीरानन्तयोः शांतिकरंगेविनियो
गः।मन्त्रोयथा।ॐ शन्नोदेवीरभिष्टयआपोभवन्तुपीतयेशंय्योरभिस्रवन्तुनः।अस्यार्थः।हेआपः नोस्माकंपितृणामितिशेषः।शंकल्याण्योभव-
न्तुकिंभूताः देवीः दिव्यस्तुत्यादिविषयाः किमर्थम् अभिष्टयेउपचयार्थंपीतयेपानायच। किंचनोस्माकंशंय्योः कल्याणयोगायाभिस्रवन्तुअभिमुख
मुच्छन्तु।अयंवाक्यार्थः।आपोस्माकमुपचयायपानायकल्याणयोगायचभवंत्वित्याशंसा।पदव्याकारश्चस्नानप्रस्तावेकृतः।ततोदेवपात्रेयवदान
म् तत्रप्रजापतिर्ऋषिर्यवोदेवतापङ्क्तिश्छन्दोनास्तिअग्निष्टोमेसुयवप्रक्षेपणेविनियोगः मन्त्रोयथा। ॐ यवोसियवयास्मद्द्वेषोयवयारातीः।अ
स्यार्थः।यवः असिपृथक्कारीभवसिअस्मद्द्वेषः अस्मदुपचारज्ञातशत्रून्यवयपृथक्कुरुपरस्परभिन्नान्संहतरहितान्कुर्वित्यर्थः नकेवलमरातीः स-
हजशत्रून्श्चयवयअसंहतान्कुरुयतस्त्वंपृथक्कारीअतोस्माकंशत्रून्भिन्नान्कुर्विति वाक्यार्थः।द्वेषइतिकृत्रिमशत्रुवाचीअरातिःसहजशत्रुः।अत्र

युमिश्रणइत्यस्यधातोः पचाद्यच्प्रत्ययेकृतेयवइतिकर्तरिरूपम्।यवयइतितस्यैवधातोर्ण्यन्ताद्विचि अप्प्रत्ययेनयवः तत्करोतितदाचष्टइतिणिच्प्र
त्ययेलोट्मध्यमपुरुषैकवचनेरूपम्।द्वेषंइतिद्विषइतिप्राप्तेछान्दसत्वादिकारस्थानेएकारः।अरातिशब्दः स्त्रीलिङ्गोपिवेदेदृश्यते।यथाउभस्मा-
अरात्याइतिप्रदेशान्तरेपठ्यते।ततःपितृपात्रेषुतिलप्रक्षेपंकात्यायनः।एकैकस्मिन्नेवतिलानावपतितिलोसीति।मन्त्रोयथा।ॐ तिलोसिसोम
देवत्योगोसवोदेवनिर्मितः।प्रत्नमद्भिः पृक्तःस्वधयापितॄन्लोकान्प्रीणाहिनःस्वाहा।अस्यार्थः।तिलस्त्वमसिभवसिकिंभूतःसोमदेवत्यःसोमोदेव
ताअस्येतिसोमदेवत्यःपुनःकिंभूतःगोसवःगांस्वर्गंसूतेइतिगोसवःतिलोहिदत्तःसन्दातुःपापक्षयंकुर्वाणःस्वर्गंजनयतिअपिकिंभूतःदेवनिर्मि
तःदेवेनविष्णुनानिर्मितउत्पादितः अपिकिंभूतःअद्भिःपृक्तःजलेनमिश्रितःयतस्त्वमेवंभूतः तस्मादस्माकंपितॄंल्लोकान्पितृपितामहप्रभृतीन्प्रत्न
स्चिरकालंस्वधयास्वधाकारेणप्रीणाहिप्रीतान्कुरुस्वाहाकारस्तिलप्रक्षेपार्थः।तिलोसीत्यादिस्वधयाइत्यन्तेनतिलंस्तुत्वाअस्माकंपितॄन्प्रीता
न्कुर्वितियाञ्चावाक्यार्थः।अत्रप्रीणाहीतिप्रीधातोर्लोट्सिप्वाछन्दसीतिविकल्पेनपित्वमतिङित्वाभावात्तन्निबन्धनइकारोनभवति।यद्यपिस्वाहा
देवहविर्दानइतिदर्शनादत्रपित्र्येकर्मणिस्वाहाकारोऽयुक्तस्तथापिकात्यायनेनमहर्षिणास्वाहान्तस्यैवमन्त्रस्यपाठादस्तुप्रपतिनोशंकनीया।एकैक-
स्यैकैकेनपिदधातियादिव्याइतिकात्यायनः।मन्त्रोयथा।ॐ यादिव्याआपःपयसासंबभूवुर्याअन्तरिक्षाउतपार्थिवीर्याः।हिरण्यवर्णायज्ञियास्तान-
आपःशिवाःशंस्योनाःसुहवाभवन्तु।अस्यार्थः।आपःपानीयानिपयसाक्षीरेणसंबभूवुःमाधुर्यशीतत्वादिनाएकीभूताइत्यर्थःकास्ताआपःया
दिव्याःदिविस्वर्गेभूताःउतअपियाअन्तरिक्षाःआकाशभूताःउतअपियाःपार्थिवीःपृथिव्यांभूताःउतशब्दउभाभ्यांसंबध्यतेकिंभूताःहिरण्यवर्णाः
हिरण्यंरजतंतत्समानवर्णाःशुभ्रवर्णाःपुनःकिंभूताःयज्ञियाःयज्ञार्हाःताःआपःनोअस्माकंशिवाःक्षेमाभवन्तुनकेवलंशिवाअपितुशंकल्याणदा

भवन्तु स्योनाः सुखदाश्च भवन्तु सुहुता ब्राह्मणहस्ते हुताः भवन्त्वित्यनेनैव संबन्धः। अत्र पार्थिवी इति प्रथमाबहुवचनस्थाने विभक्तिव्यत्ययेन द्वि
तीया बहुवचनम्। स्योना इति सुखस्य नाम निरुक्ते पठ्यते। वाक्यार्थस्तु या दिव्या इत्यादि यज्ञिया इत्यन्तेनापस्तुत्वाताः अस्माकं सेमाः कल्याण्याः
सुखाः स्वर्गदाश्च भवन्त्वित्याशंसा। प्रथमपात्रे संस्रवान्समवनीय पात्रं न्युब्जीकरोतीति कात्यायनः। मन्त्रो यथा। पितृभ्यः स्थानमसि। अस्यार्थः।
हे पात्र पितृभ्यः पितॄणां स्थानमसि भवसि इत्यर्थः। अत्र पितृभ्य इति षष्ठ्यर्थे चतुर्थी यतः त्वं पितॄणां स्थानं भवसि अतस्त्वं पितॄणां भवस्थानाय न्यु
ब्जीकृतमित्यभिप्रायः। अत्र च पितरस्तिष्ठन्तीति स्मृतिः। आहृतास्तत्र तिष्ठन्ति पितरः श्राद्धदेवताः। उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति का
त्यायनः। तत्राग्नौकरणहोममन्त्रद्वयस्य प्रजापतिऋषिर्द्वे देवते यजुषी छन्दोऽग्नौकरणहोमे विनियोगः। मन्त्रो यथा। ॐ अग्नये कव्यवाहना
य स्वाहा। अस्यार्थः। अग्नये स्वाहा। किंभूताय कव्यवाहनाय कव्यं पितृणामन्नं तत् पितृभ्यो वहति प्रापयतीति कव्यवाहनस्तस्मै। ॐ सोमाय पितृम
ते स्वाहा। अस्यार्थः सोमाय स्वाहा। किंभूताय पितृमते पितरोऽस्य सन्तीति पितृमान् तस्मै। हुतशेषं दत्त्वा पात्रमालभ्य जपति। पृथिवी ते पात्रमिति
कात्यायनः। मन्त्रो यथा। ॐ पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि स्वाहा। अस्यार्थः। हे अग्नौकरणशेष ते तव पात्रमा
धारः पृथिवी विश्वस्याधारभूता पिधानं आवरणं द्यौः आकाशं त्वाममृतं हुतशेषं ब्राह्मणस्य मुखे जुहोमि। किंभूते अमृते अनष्टे अभक्ष्यभक्ष
णादिभिरदूषिते इत्यर्थः। अत्र ते इति युष्मच्छब्ददर्शनात् प्रकृतत्वाच्च हे अग्नौकरणशेष इति संबोधनमध्याहृतम्। अमृतमिति विशेषण
पददर्शनात्त्वामिति विशेष्यकर्मपदं कल्पितम्। पृथिवी ते पात्रमित्यनेन भोजनपात्रं स्तुतं द्यौः पिधानमित्यनेन चाहृतं हविर्येन केनापि दृश्यत
इति शङ्का निराकृता। ब्राह्मणस्य मुखे अग्निसदृशे त्वाममृतं जुहोमीति याच्ञा वाक्यार्थः। जुहोमीति होमप्रतिपादनात् स्वाहापदसमावेशः

ब्रा·स ब्राह्मणस्याग्निसदृशत्वे श्राद्धाधिकारे।आपस्तंबः।पितरोदेवताब्राह्मणास्त्वाहवनीयार्थे इति।वैष्णव्यमन्त्रापिजुषावानपनि अङ्गुष्ठमन्नेवगाह्य इ
५५ ति।कात्यायनः।तत्रमेधातिथिऋषिर्विष्णुर्देवतागायत्रीछन्दोग्निष्टोमे विनियोगः।मन्त्रोयथा।ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदं।समूढमस्य
पां॑सुरे।अस्यार्थः।विष्णुर्भगवान्इदंअन्नंविचक्रमेदिक्रान्तवान्आक्रान्तवानित्यर्थः।विष्णुरेवपदंनिदधेनिहितवान्अर्पितवान्कथंत्रेधा-
त्रिःप्रकारंपृथिव्यामाकाशेस्वर्गेचअस्यविष्णोःपदंपांसुरेधूलिकायांसमूढंपृथिव्यांसमूढंसम्यग्निविष्टम्।अयमत्रवाक्यार्थः।योविष्णुःपृ
थिव्यामाकाशेस्वर्गेचपदमर्पितवान्तस्यचपदंपृथिव्यांविशेषतःसम्यङ्‌निविष्टंसविष्णुरिदमन्नमाक्रान्तवानतोराक्षसाअपसरन्त्वित्य-
स्यार्थः।अपहताइतितिलान्विकीर्य्येतिकात्यायनः।तत्रप्रजापतिऋषिःसुरादेवतायजुष्टुप्छन्दोनास्तिपिण्डपितृयज्ञेरक्षाकरणेविनियोगः
मन्त्रोयथा:ॐअपहताअसुरारक्षां॑सिवेदिषदः।अस्यार्थः।असुराःअपहताःअपसारिताः किंभूताःवेदिषदःवेदिःश्राद्धार्थसंस्कृता
भूमिःतत्रसीदन्तितिष्ठन्तीतिवेदिषदःनकेवलमसुरारक्षांसिराक्षसाश्चापसारिताइत्यर्थः।अनेनविकीर्णतिलेनश्राद्धभूमिस्थिताःअसु-
राराक्षसाश्चनिराकृताइतिवाक्यार्थः।अन्नंमधुमयंकृत्वामधुवातेतिमंत्रितमितिकात्यायनः।तत्रगौतमऋषिर्विश्वेदेवादेवागायत्रीछन्दःप्र
नेकर्मस्यदधिमधुघृताभ्यंजनेविनियोगः।मन्त्रोयथा।ॐमधुवाताऋतायतेमधुक्षरन्तिसिन्धवः।माध्वीर्नःसन्त्वोषधीः।मधुनक्तमुतोषसोमधु
मत्पार्थिवंरजः।मधुद्यौरस्तुनःपिता।मधुमान्नोवनस्पतिर्म्मधुमां अस्तुसूर्यः।माध्वीर्गावोभवन्तुनः।अस्यार्थः।वाताःमधुऋतायतेवायवोमधु-
वहन्त्वित्यर्थः।सिन्धवोमधुक्षरन्तुनद्योमधुस्रवन्तुओषधीर्माध्वीःसन्तुओषधयोधान्यादयोमधुयुक्ताभवन्त्वित्यर्थः।नोस्माकमितिसर्वत्र ५५
योजनीयं।नक्तंमधुअस्तुरात्रिर्म्मधुमतीभवतुनकेवलमहः।रात्रिश्चउषसोपिमधुस्रवाःसन्तुइतिपूर्व्वेणैवसंबन्धः।उषःप्रभातंपार्थिवंरजःम

धुमदस्तु पृथिवी मधुमती भवत्वित्यर्थः । द्यौः स्वर्गः मध्वस्तु मधुमती भवतु किंभूता द्यौः । पिता प्रितेव सर्वेशस्यानुकूला अत्रापि नश्रुति सर्वत्रैवपान्व-
म् । वनस्पतिर्नः मधुमानस्तु वनस्पतिः सोमः सूर्यश्च मधुमानस्तु गावो नः माध्वीर्भवन्तु । अत्र ऋतायत इति निघण्टे माचणार्थः । ऋत धातोः लेट्प्रत्यये
कृते तिङां तिङो भवन्तीति वहुवचनस्थाने एकवचनेन ऋतायत इति रूपम् । तथा क्षरन्तीति आशंसायां लेट् । माध्वीरोषधीरिति च सुपां सुपो भवन्ती-
ति प्रथमा वहुवचनस्थाने द्वितीया वहुवचनम् । अस्य कण्डिकात्रयस्य वाय्वादि सर्वमेतदस्मत्पितॄणां मधुमयं भवत्विति आशंसा वाक्यार्थः । अपहता
इति व्याख्यातमेव । पिण्डदानानन्तरमत्र पितर इत्युक्त्वा उदङास्ते इति कात्यायनः । अत्र प्रजापतिर्ऋषिः पितरो देवता बृहती छन्दः पिण्डपितृयज्ञे जपे वि-
नियोगः । मन्त्रो यथा । ॐ अत्र पितरो मादयध्वं यथा भागमावृषायध्वम् । अस्यार्थः । हे पितरः अत्र मादयध्वं अत्र पिण्डेषु हृष्टयुक्ता भवत । किंच यथा भागम-
वृषायध्वं स्वं स्वं भागं प्राप्य वृषा इव वलिनो भवत । अत्र आङ्पूर्वाद् वृषशब्दात् कर्तुः क्यङ् सलोपश्चेति क्यङ्प्रत्ययः । स्वेच्छया पितॄणां पिण्डोपभोगार्थ-
मभ्यर्थना वाक्यार्थः । आवृत्यामीमदन्तेति जपतीति कात्यायनः । अत्र प्रजापतिर्ऋषिः पितरो देवता यजुष्ट्वाच्छन्दो नास्ति पिण्डपितृयज्ञे विनियोगः । म-
न्त्रो यथा । ॐ अमीमदन्त पितरो यथाभागमावृषायिषत । अस्यार्थः । पितरः अमीमदन्त मदं प्राप्तवन्तः महतेन पिण्डेन हर्षयुक्ता भूता इत्यर्थः । किंच य-
थाभागं आवृषायिषत स्वं स्वं भागं प्राप्य वृषा इव वलिनो भूताः । अमीमदन्तेति मदी हर्षग्लपनयोरित्यस्माद्धातोः स्वार्थिकणिजन्ताल्लुङि रूपम् । पू-
र्वमन्त्रकृतेऽभ्यर्थने सम्प्रति तूत्तरवाक्यार्थः । नीवीं विस्रस्य नमो व इत्यञ्जलीं करोतीति कात्यायनः । तत्र षण्णां मन्त्राणां प्रतिपत्तिर्ऋषिर्यथासंख्य-
ग्रीष्मशिशिरवर्षावसन्तहेमन्तशरदः षड्ऋतवो देवता यजुष्ट्वाच्छन्दो नास्ति पिण्डपितृयज्ञे षडञ्जलिकरणे विनियोगः । मन्त्रो यथा ॐ नमो वः पितरः शु-
ष्माय नमो वः पितरस्तपसे नमो वः पितरो जीवंनस्मै नमो वः पितरो रसाय नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः स्वधायै वः पितरो न

वा॰स॰ मः। एषां मन्त्राणामर्थः। हे पितरः वो युष्मभ्यं नमः शुष्माय च नमः शोषणकारिणे ग्रीष्मायेत्यर्थः। हे पितरः वो युष्मभ्यं नमः तपसे च तप इति माघमास
५६ स्य नामैतेन माघफाल्गुनात्मकः शिशिरऋतुरेकदेशतउद्भवेन तस्यैव नमस्कारः कृतः। हे पितरः वो युष्मभ्यं नमः यज्जीवं जलं तस्मै नमः अनेन वर्षा नम
स्कारः कृतः। हे पितरः वो युष्मभ्यं नमः रसाय च नमः रसः पुष्परसः तदुद्भवेन तत्कारणीभूतस्य वसन्तस्य नमस्कारः कृतः। हे पितरः वो युष्मभ्यं नमः घो
राय मन्यवे च नमः हेमन्तायेत्यर्थः। हेमन्तस्य शीतप्रचुरत्वात्प्राणिनां भयहेतुत्वेन घोरः मन्यवे क्रुद्धाय यथा क्रुद्धः कश्चिद्दुःखं जनयति तथायमपि शी
तं दुःखं जनयतीत्यर्थः। हे पितरः वो युष्मभ्यं नमः स्वधायै शरदे। यथा श्रुतिः स्वधैव शरत्स्वधायै पितॄणामन्नमिति। एभिः षड्भिर्नमस्कारैः पितरस्त
द्राभवन्ति ऋतवश्चेति तात्पर्यम्। षड्वा ऋतवः पितर इति श्रुतिप्रतिपादितेन ऋतुभिस्सह पितॄणामभेदेनाभय नमस्कारः कृत इति वाक्यार्थः। एतद्व इ
त्युपास्येति सूत्राणि प्रतिपिण्डमिति कात्यायनः। तत्र प्रजापतिऋषिः पितरो देवता यजुस्त्रिष्टुप्छन्दो नास्ति पिण्डपितृयज्ञसूत्रदाने विनियोगः। मन्त्रो य
था। ॐ एतद्वः पितरो वासः। अस्यार्थः पितरः वो युष्मभ्यमेतद्वासः आच्छादनम्। ऊर्जमित्यपो निषिञ्चतीति कात्यायनः। तत्र प्रजापतिऋषिरापो देव
ता विराट्छन्दः पिण्डपितृयज्ञे विनियोगः। मन्त्रो यथा। ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन्। अस्यार्थः। हे आ
पः यूयं स्वधास्थ पितॄणामन्नं भवथ स्वमात्मीयं धानं पोषणमनेनेति स्वधा। तथा च श्रुतिः स्वधा वै पितॄणामन्नमिति। ततश्च मे मम पितॄन्तर्पयत स्
वितृप्तान्कुरुत किंभूता यूयं ऊर्जं वहन्ती अन्नं वहन्त्यः प्रापयन्त्यः किंभूतमूर्जं अमृतं घृतमित्यादि परिस्रुतमित्यन्तमूर्जो विशेषणानि। अमृतं देवा
नामन्नमिति घृतं प्रसिद्धं पयो दुग्धं कीलालं पशु कीलं बन्धनमलं योग्यमस्येति कीलालः पशुः परिस्रुतं स्वधा। एतच्चामृतादि पञ्चकमूर्जः शब्दाभिधे ५६
यम्। ऊर्जं चान्नमेव। यथा च श्रुतिः यस्माद्यावन्मात्रं वा अन्नस्य रसः सर्वमेवान्नं भवतीति। यतो यूयं नानाविधमन्नं वहन्त्यः स्वधा भवथ तस्मान्मम

पितॄंस्तर्पयतेति वाक्यार्थः। वहन्तीति सुपां सुपो भवन्तीति प्रथमाबहुवचनस्थाने द्वितीयाबहुवचनम्॥ आधत्तेति मध्यमं पिण्डं प्राश्नाति पुत्रकामा इति कात्यायनः। अत्र प्रजापतिऋषिः पितरो देवता गायत्री छन्दः पिण्डपितृयज्ञे पत्न्या मध्यपिण्डप्राशने विनियोगः। मन्त्रो यथा। ॐ आधत्त पितरो गर्भं कुमारं पुष्करस्रजं यथेह पुरुषोऽसत्। अस्यार्थः। हे पितरः गर्भमाधत्त किंभूतं कुमारं पुत्रन्तमपि किंभूतं पुष्करस्रजं पुष्करस्य पद्मस्य स्रक् माला अनयोरिति पुष्करस्रजावश्विनौ कुमारौ तौ इव पुष्करस्रजं दीर्घायुषं नीरुजं सुरूपञ्चेत्यर्थः। यथा इह पुरुषोऽसत् येन प्रकारेण इहैव कृतौ पुरुषो देवपितृमनुष्याणामभीष्टपूरयिता भूयात्। तथा गर्भमाधत्त इत्यभिप्रायः। असदिति अस भुवीत्यस्माद्धातोर्लिङ् प्रथमपुरुषैकवचनं शप् तस्य बहुलं छन्दसीति लुग्भवति। आगमानुशासनस्यानित्यत्वाद्यासुडागमो न भवति। वाजेवाज इति विसृजेदिति कात्यायनः। तत्र वसिष्ठऋषिस्त्रिष्टुप्छन्दः अश्वा देवता वाजपेये बार्हस्पत्ययज्ञे विनियोगः। मन्त्रो यथा। ॐ वाजेवाजेवत वाजिनो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः। अस्यार्थः। हे वाजिनः पितरः वाजोऽन्नमस्यास्तीति वाजी तच्च श्राद्धे दत्तं पितॄणामस्तीति पितर एव वाजिनो अवत रक्षत कुत्र नोऽस्माकं वाजेवाजे अन्नेअन्ने यद्दैवास्माकं कृतमकृतं ज्ञानं श्राद्धार्थमुपस्थापितं तत्र सर्वत्र न केवलं तत्र धनेषु च अन्नातिरिक्तेषु श्राद्धीयद्रव्येषु च किंभूता यूयं विप्राः विप्रमूर्तयो विप्रदेहस्था इति यावत् अपि किंभूताः अमृताः अमरणधर्माणः पुनः किंभूताः ऋतज्ञाः सत्यज्ञानशालिनः रक्षित्वा च अस्य मध्वः पिबत एतदन्नसम्बन्धिनो मध्वः रसस्य पिबत पीत्वा च मादयध्वं तृप्यध्वं तृप्ताः सन्तः पथिभिर्यात वर्त्मभिर्गच्छत किंभूतैर्देवयानैः यैर्वर्त्मभिर्देवा यान्ति तैरित्यर्थः। अथ वाक्यार्थः। हे पितरो विप्रदेहा अस्माकं श्राद्धे दत्तमन्नं रक्षत रक्षित्वा च तस्य रसं पीत्वा तृप्ताः सन्तो देवसेवितैर्वर्त्मभिः स्वर्गं गच्छतेति वि। मध्व इति मधुशब्दस्य षष्ठ्येकवचने रूपं आगमानुशासनानित्यत्वान्नुम् न भवति सञ्ज्ञापूर्वकविधेरनित्यत्वाद्गुणश्च न भवतीति। आमावाजस्येत्य

श्रा॰सं॰ तुवत्सप्रदक्षिणीकृत्य प्रविशेदिति कात्यायनः। तत्र बृहस्पतीन्द्रावृषी त्रिष्टुप्छन्दः प्रजापतिर्देवता वाजपेययजमानस्य तेनैव पथागमने विनियोगः
५७ मन्त्रो यथा। ॐ आमा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे। आमा गन्तां पितरा मातरा युवामा सोमो अमृतत्वाय गम्यात्। अस्यार्थः। वाज
स्यान्नस्य प्रसवः फलं मामाजगम्यात् पुनः। पुनरागच्छतु अस्मिन् श्राद्धे कृतस्यान्नदानस्य फलं मां प्रत्यागच्छत्वित्यर्थः। किंच इमे द्यावापृथिवी मामा
जगम्यातां पुनरागच्छतां किंभूते द्यावापृथिवी विश्वरूपे विश्वं सर्वं रूपं ययोस्ते विश्वरूपे एतेन पृथिवीसंबन्धिकल्याणं स्वर्गसंबन्धि च मामागच्छतु इ
ति आशंसा वाक्यार्थः। किंच हे पितरा मातरा युवयुवां मा मा मागन्त आगच्छन्त यदा यदाहं श्राद्धं करोमि तदा तदा मम मातापितारौ आगच्छन्तामि
त्यर्थः। किंच सोमः पितृणां राजा मामा मामागम्यात् आगच्छतु किमर्थम् अमृतत्वाय मोक्षाय श्राद्धं कृत्वा विसर्जितेषु पितृष्वनुव्रजने क्रियमाणे
श्राद्धस्य फलं मम भवतु पार्थिवं सुखं मम भवतु स्वर्गं मम भवतु श्राद्धसमये मम मातापितरौ आगच्छतां मोक्षश्च भवत्वित्याशंसा वाक्यार्थः। आज
गम्यादिति गम्लृ गतावित्यस्माद्धातोर्मन्त्रादिस्थितेन आ इत्यनेनोपसृष्टस्य पुङ् लुङि आशिषि लिङि कृते रूपम्। एतदेव वचनपरिणामेन द्विवचना
न्तं जगम्यादित्यस्य पूर्वपठितेन आ इत्यनेन संबन्धः द्यावापृथिवी इत्यत्रापि संबध्यते। आगन्तामित्यत्र व्यवहितेन आ इत्यनेन संबन्धः बहुलं छन्दसी
ति शपो लुक्। पितरा मातरा इति मातापितराविति प्राप्ते पितरा मातरा च छन्दसीति निपातः। युवमिति प्रथमायाश्च द्विवचने भाषायामिति भाषावि
षये आकारस्य विधानात्। अत्र छान्दसपदे आकारो न भवति शेषलोपश्च भवत्येव। आमा सोमो अमृतत्वाय गम्यादिति व्यवहितेन आ इत्यनेन गम्या-
दित्यस्य संबंधः। इति पार्वणश्राद्धम्॥ प्रेतपात्रं पितृपात्रेष्वासिंचति ये समाना इति द्वाभ्यामिति सपिण्डने कात्यायनः। तत्र प्रजापतिऋषिः पितरो देवता ५७
ऽनुष्टुप्छन्दः सौत्रामण्यां ग्रहहोमे विनियोगः। मन्त्रो यथा। ॐ ये समानाः समनसः पितरो यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्

अस्यार्थः पितरः पितामहप्रपितामहवृद्धप्रपितामहाः समानाः सपिण्डीकरणेन समानं लोकं पितृलोकं गता अत एव समनसः समानहृदयाः यमराज्ये
मम स्याधिकारे स्थितास्तेषां यो लोकः स्थानं स एव तस्मै प्रेताय पित्रे स्वधा भवतु किंच नमः नमस्कारः कृतो यज्ञः देवश्राद्धमिति यावत् । तेषु देवेषु कर
वो माङ्गवः प्रभृतिषु कल्पतां क्षमो भवतु अनेन सपिण्डनकर्मणा प्रेतस्य पितृलोकप्राप्तिः सदैव श्राद्धाधिकारश्च भवत्विति आशंसा वाक्यार्थः । प्रजापतिऋ
षिर्यजमानो देवता त्रिष्टुप्छन्दः सोमप्राशने गृह्यहोमे विनियोगः । मन्त्रो यथा । ॐ ये समानाः समनसो जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पताम
स्मिंल्लोके शतं समाः । अस्यार्थः । जीवेषु सूक्ष्मशरीराधिष्ठानेन कर्मणां भोक्तृषु मध्ये ये मामकाः मत्संबन्धिनो जीवाः सूक्ष्मशरीराधिष्ठानेन कर्मभो-
क्तारः किंभूताः समानाः समनसः एतद्द्वयं व्याख्यातमेव तेषां प्रसादेन स्वधा हार्य्यमयि श्रीर्लक्ष्मीः कल्पतां भवतु अस्मिंल्लोके इहैव जन्मनि कियंतं कालं
शतं समाः शतवर्षाणि । अनेन सपिण्डनकर्मणा पितृलोकप्राप्तानां पितृणां प्रसादेन वर्षशतं मम लक्ष्मीर्भवत्विति आशंसा वाक्यार्थः । अपरं चैव सर्वपा
र्वणतुल्यम् । इति सपिण्डीकरणश्राद्धमन्त्रव्याख्या । अथ वृद्धिश्राद्धम् । तत्रार्घपात्रेषु यवदानमन्त्रः । ॐ यवोसि सोमदेवत्यो गोसवो देवनिर्मितः प्रत्न
मद्भिः पृक्तः पुष्ट्या नांदीमुखान् पितॄँल्लोकान् प्रीणाहि नः स्वाहा । अस्यार्थः । अत्र च मन्त्रे यवैस्तिलार्थ इति कात्यायनवचनात्तिलस्थाने यवस्य पाठान्मंत्रेपि
यवोसीति यवस्यैवानुमन्त्रणीयत्वमाश्वलायनेन लिखितं न स्वधां प्रयुञ्जीतेति स्वधानिषेधात्स्वधेत्यस्य स्थाने पुष्ट्या इत्याश्वलायनेन पठितं तेन नोस्माकं
नांदीमुखान्पितॄँल्लोकान्पुष्ट्या प्रीणयेति संबन्धः । अपरं च सर्वं तिलोसीति मन्त्रेण समानं । अत्रान्ये मन्त्राः पार्वणवद्बोद्धव्याः । इति वृद्धिश्राद्धम् । इत्याव-
सथिकमहाधर्माधिकृतहलायुधकृतौ ब्राह्मणसर्वस्वे पार्वणश्राद्धमन्त्रव्याख्या ॥ अथ भोजनविधिः । तत्र विष्णुपुराणम् । स्नात्वा यथावत्कृत्वा च देव
र्षिपितृतर्पणम् । प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही ॥ कृतजप्यो हुताग्निश्च शुद्धवस्त्रधरो नृप । देवलः । स्नात्वा प्रक्षाल्य पादौ स्रग्गन्धालङ्कृतः

ब्रा॰स॰ शुचिः। एवं यज्ञावशिष्टं यो भुङ्क्ते सोऽमृताशनः। जाबालिः। अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम्। अहुत्वा च कृमिं भुङ्क्ते अदत्त्वा विषभोजनम्। भ-
५८ विष्यपुराणे। अकृत्वा वैश्वदेवं च ये भुञ्जन्त्यबुधा जनाः। तथा विना तु शास्त्रेण मृगयोनिं व्रजन्ति ते। तथा विना तु शास्त्रेणेति भोजनविधिविधायकशास्त्रा-
तिक्रमणे सत्यर्थः। मनुः। सायं प्रातर्द्विजातीनामशनं देवनिर्मितम्। नान्तराभोजनं कार्यमग्निष्टोमसमो विधिः। छन्दोगपरिशिष्टे कात्यायनः। मुनिभिर्द्विरशनं
प्रोक्तं विप्राणां मर्त्यवासिनाम्। नित्यमह्नि तमस्विन्यां सार्द्धप्रहरयामतः। आपस्तम्बः। यथैव तूलमैषीकमग्नौ प्रोतं प्रदीप्यते। तद्वत्सर्वाणि पापानि दह्यन्ते-
ऽन्नभोजिनः। तथा। गृहस्थो ब्रह्मचारी च योऽनश्नंस्तु तपश्चरेत्। प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः॥ अन्यत्र प्रायश्चित्तं न दैवं विधीयते। ब्रह्मपुरा-
णम्। विप्रो ज्ञो जनभूमिं च सुप्रक्षालितपाणिपात्। आसनस्थस्तु यो दृष्ट्वा सिङ्क्तिमध्ये उपस्पृशेत्। स सर्वेषां चैव यत्पापं तद्गृह्णाति नराधमः। तस्माद्ब-
हिरुपस्पृश्य आचान्तः प्रविशेद्गृहम्। उपलिप्ते समे स्थाने शुचौ शुक्लासनान्विते। चतुरस्रं त्रिकोणं च वर्तुलं चार्द्धचन्द्रिकम्। कर्तव्यमानुपूर्व्येण ब्राह्म-
णादिषु मण्डलम्। ब्रह्मरुद्रौ च चन्द्रार्कौ वसवो देवमण्डलान्तः। निःवेदितं नैरन्नं यस्माद्गृह्णन्ति संस्थिता। अकृत्वा मण्डलं ये तु भुञ्जन्तेऽधमयोनयः। तेषां
तु यक्षा रक्षांसि हरन्त्यन्नस्य यद्बलम्। शाङ्खः। चतुष्कोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु। मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम्। देवलः। उप-
लिप्ते शुचौ देशे पादौ प्रक्षाल्य वाग्यतः। प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः पीठमवस्थितः। ब्रह्मपुराणम्। अन्नं स्पृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः।
अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत्। अन्नं विष्णुः स्वयं प्राह नित्यमेव जनार्दनः। यो मां ददाति प्राणाय भुञ्जानः शास्त्रवद्द्विजः। प्राणार्थं मां सदा
ध्यायेत्स मां संश्नुते सदा। वामेन पाणिना पात्रं गृहीत्वा भुवि संस्थितः। तेजोऽसीति जपंस्त्वन्नं प्रणमेदमृतं च यत्। मनुः। पूजयेदशनं नित्यमद्याच्चैतद- ५८
कुत्सयन्। दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः। पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति। अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम्। बौधायनः। प्र-

क्षालितपाणिपादः अथ आचम्य संहृते देशे अन्नमुपसंगृह्य कामक्रोधलोभमोहानपरित्यज्य सर्वाभिरङ्गुलिभिः शब्दमकुर्वन् प्राश्नीयात्। आप-
स्तम्बः। सोन्तराच्छादन एव च यज्ञोपवीती भुञ्जीत कृत्स्नं ग्रासं ग्रसेत्। साङ्गुष्ठं न च शब्दं न कुर्यात्। बौधायनः। सर्वावश्यकावसाने संमृष्टोपलिप्ते दे-
शे प्राङ्मुख उपविश्याद्दत्तमामन्त्र्य क्रियमाणं भूर्भुवः स्वरोमित्युपस्थाय वाचं यच्छेत्। न्यस्तं महाव्याहृतिभिः प्रदक्षिणमन्नमुदकं परिषिच्य सव्येन
पाणिना अविमुञ्चन् अमृतोपस्तरणमसीति पुरस्तादपः पीत्वा पञ्चान्नेन प्राणाहुतीर्जुहोति। हारीतः। तेजोसीत्यन्नमादाय क्रियमाणमभिमन्त्रये-
त्। द्यौस्त्वा ददात्विति दीयमानं भूस्त्वा प्रतिगृह्णात्विति प्रतिगृह्य अग्निरस्मि जन्मना जातवेदा घृतम्मे चक्षुरमृतं म आसन्। अर्कस्त्रिधा रजसो-
धियमाणोऽजस्रो घर्मो हविरस्मि नाम। यमः। प्राङ्मुखोन्नानि भुञ्जीत पञ्चार्द्रो दीर्घमायुषतः शुचिः। आर्द्रपादस्तु भुञ्जानः शतं वर्षाणि जीवति। आयुष्यं
प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः। श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः। उच्छिष्टिकाधिकारे आपस्तम्बः। दक्षिणाभिमुखो भुञ्जीत अन्ना-
युष्यं ह्येवं मुखस्य भोजनं मायुरुपदिशति। विष्णुपुराणम्। विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः। अन्नं प्रशस्तं पथ्यं च प्रोक्षितं प्रोक्षणोदकैः।
ब्रह्मपुराणम्। अप्येकपङ्क्त्या नाश्नीयात्संयुक्तः स्वजनैरपि। को हि जानाति किं कस्य प्रच्छन्नं पातकं महत्। भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिं च भेदयेत्। ब्र-
ह्मपुराणे। पात्रेष्वन्नानुरूपेषु पुत्रभृत्यानुजैः सह। भूमौ पात्रं प्रतिष्ठाप्य मौनेनान्नं तु भक्षयेत्। पवित्रपाणिः पुण्यञ्च लभेत चाघमर्षणम्॥ पराशरः।
यदि च्छेत्सर्वपापानि हन्तुं निरवशेषतः। मौनेनान्नं समश्नीयादागस्त्यशिरसास्वयन्। मनुः। न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते। पैठीनसिः। ताम्रर-
जतसुवर्णशङ्खमुक्ताश्मस्फाटिके। नाभिन्नमभिन्नेमिति न दोषः। विष्णुपुराणम्। न चासंनिहिते पात्रे नादेशे च नरेश्वर। नाकाशेनातिसंकीर्णे दत्त्वाग्रं च
नरो ग्रसेत्। नाशेषं पुरुषोऽश्नीयादन्यत्र जगतीपते। मध्वम्बुदधिसर्पिर्भ्यः सक्तुभ्यश्च विवेकवान्। दत्त्वाग्रमिति। पितृदेवप्रभृतिभ्योऽग्रभक्तं दत्त्वा भुञ्जीते-

त्यर्थः। व्यासः। भूम्यां पात्रं प्रतिष्ठाप्य यो भुङ्क्ते वाग्यतः शुचिः। भोजने भोजने चैव त्रिरात्रफलमश्नुते। देवलः। न भुञ्जीत तथा यस्तं नित्यं गृहस्थो भोजनं स्वयम्।
पवित्रमुष्णं हृद्यञ्च सर्पिराढ्यं घृतप्रदम्। वसिष्ठः। हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च। दातारं नोपतिष्ठन्ति भोक्ता भुङ्क्ते च किल्विषम्। तस्माद् अन्तरितं
देयं पात्रेणैव तृणेन वा। प्रदद्यान्न तु हस्तेन नायसेन कदाचन। ब्रह्मपुराणम्। एकेन पाणिना दत्तं शूद्रादत्तं न भक्षयेत्। घृतं तैलञ्च लवणं पानीयं पायसं त-
था। भविष्यपुराणे। आयसेन तु पात्रेण यदन्नमुपदीयते। भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत्। ब्रह्मपुराणम्। आपोशानञ्च गृह्णीयात् सर्वतीर्थमयञ्च त
त्। अमृतोपस्तरणमसि विश्वोऽन्नमयस्य च। हस्तेन लङ्घयेनान्नं सोदकेन कदाचन। हस्ताद्यो लङ्घयेद्‌ रक्तं तेनान्नं हि हतं भवेत्। हतञ्चान्नमभक्ष्यत्वं तस्य
नित्यात्मनः। पञ्च ग्रासांस्तु भुक्त्वा दौ तु विद्वेष्म निसर्गदे। पात्रे नं घृतशेषन्तु भक्षयेच्छाङ्ग‍रादयात् पित्र्येकर्मणि। भुञ्जानो भूमौ पात्रं न चालयेत्। तथा। प्रा
णेभ्यस्त्वथ पञ्चभ्यः स्वाहा प्रणवसंयुताः। पञ्चाहुतीस्तु जुहुयात् प्राणाग्निनिमेषु च। विष्णुपुराणम्। पञ्च ग्रासान् महामौनं प्राणाद्याप्यायनाय तत्। आ
यस्तम्वः अष्टौ ग्रासान् मुनेर्भुक्तं वानप्रस्थस्य षोडश॥ द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणाम्। विष्णुपुराणम्। अश्नीयात् तन्मना भूत्वा पूर्वन्तु मधुरं र
सम्। लवणाम्लौ तथा मध्ये कटुतिक्तादिकं ततः। प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनम्। अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति। ब्रह्मपुराणे। यस्तु
पाणितले भुङ्क्ते यस्तु फूत्कारसंयुतम्। प्रसृताङ्गुलीभिर्यश्च तस्य गोमांसवच्च तत्। नाजीर्णे भोजनं कुर्यात् स्यान्न चातिबुभुक्षितः। हस्त्यश्वरथयानोष्ट्रप्रासाद
स्थो न भक्षयेत्। श्मशानाभ्यन्तरस्थो वा देवालयगतोऽपि वा। शयानस्थो न भुञ्जीत न पाणिस्थं न चासने। न सन्ध्यायां न मध्याह्ने नार्द्धरात्रे कथञ्चन। नार्द्रवासा
नार्द्रशिरा न च यज्ञोपवीतवान्। नोत्थितो नो व्रजन् खट्वासंस्थितो न कदाचन। न यन्त्रारूढगात्रस्तु न वसार्द्रेत्तु भार्यया। न प्रसारितपादस्तु पादारोपितपाणि राम
मान्। नावसक्थिकसंस्थस्तु न च पर्य्यङ्कमास्थितः। न वेष्टितशिराश्चापि नोत्सङ्गे कृतभाजनः। नैकवस्त्रो दुष्टमध्ये सोपानत्कः सपादुकः। न चर्म्मोपरि सं ५६

स्थश्वचर्मवेष्टितपार्श्ववान्। अन्नस्य जन्मकालुष्यं दृष्ट्वान्नं न भोजयेत्। ग्रासशेषं तु नाश्नीयात्पीतशेषं पिबेन्न तु। शाकमूलफलेक्षूणि दन्तच्छेदेन
भक्षयेत्। संत्यजेन्नानुमन्येत न विशिष्टं पात्रसंस्थितम्। बहूनां भुञ्जतां मध्ये नाश्नीयात्त्वरयान्वितः। वृथा न विकिरेदन्नं नोच्छिष्टः कुत्रचिद्व्रजेत्। न स्पृशेन्न
स्वशिरो विप्रः सोच्छिष्टेनैव पाणिना। तिलकल्कं जलं क्षीरं दधि क्षौद्रं घृतानि च। न त्यजेदर्द्धजग्धानि सक्तूंश्चाथ कदाचन। बृहस्पतिः। न स्पृशेद्वामहस्तेन
भुञ्जानोऽथ कदाचन। न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत्। ब्रह्मपुराणम्। सव्याहृतिभिरश्नीयात्पान्नावं भूतेनत्करं कृत्वा नित्। कुर्यात्क्षीरान्तमाहा-
रं न च पश्चात्पिबेद्दधि। जठरं पूरयेदर्धमन्नैर्भागं जलेन च। वायोः संचरणार्थाय चतुर्थमवशेषयेत्। बौधायनः। भुञ्जानेष्वपि विप्रेषु यस्तु पात्रं परित्यजेत्। भो-
जने विघ्नकर्त्तासौ ब्रह्महेति तथोच्यते। उद्धृत्य वामहस्तेन यस्तोयं पिबति द्विजः। सुरापानेन तत्तुल्यं मनुराह प्रजापतिः। अग्निपुराणम्। उपलिप्ते समे स्था-
ने शुचिः शुद्धासनान्वितः। पात्रेषु यथा॰ कल्प्येषु पुत्रदारादिभिर्वृतः। सुसंस्कृतं हितं मिष्टं भुञ्जीतापद्दतः शपन् यवगोधूमशाल्यन्नं मांसशाकादिभिर्यु-
तम्। तीक्ष्णोष्णलवणैः क्वाथैर्व्यञ्जनैश्च सुगन्धिभिः। भक्ष्यप्रकारान्विविधान्कन्दमूलफलानि च पात्रं भूमौ प्रतिष्ठाप्य यो भुङ्क्ते वाग्यतः शुचिः। भो-
जने भोजने चैव त्रिरात्रफलमश्नुते। यत्नेन धारयेद्विप्रः पवित्रं दक्षिणे करे। भुञ्जानस्तु विशेषेण अन्नदोषैर्न लिप्यते। शातातपः। हस्तं प्रक्षाल्य गण्डू-
षं यः पिबेदविचक्षणः। स देवांश्च पितॄंश्चैव आत्मानञ्चैव घातयेत्। विष्णुपुराणम्। भुक्त्वामृतपिधानार्थं पिबेत्तोयं सकृत्सकृत्। येनान्नेन भवेद्व
मृजीवभूतं जगत्त्रयं एवं भुञ्जन्सदा विप्रो जातिप्राधान्यमाप्नुयात्। अथ भोजनस्य मन्त्रव्याख्या। तत्रानीयमानमन्नमभिमन्त्रयेदनेन ॐ तेजोऽसि म-
होऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि। विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः। अस्यार्थः। हे अन्न त्वं तेजः वीर्यं असि भवसि महः उत्स-
माहः असि बलं सामर्थ्यं असि तथा भ्राजः दीप्तिरसि तथा देवानां इन्द्रादीनां धाम नाम तेजः शब्दवाच्यम्। असि किं त्वां विविच्य उच्यते विश्वं चराचरं

असितथाविश्वायुः विश्वस्यजीवनमसिसर्वमसिसर्वायुरसीतिपुनरभिधानमादरातिशयदर्शनार्थः।तथाअतिभूः सर्वेषामदनीयानां अतिभूःश्रे
ष्ठतयात्वमसिभावकंभवसीत्यर्थः।अन्नस्तुतिवाक्यार्थः।इतिजोसीतिमन्त्रव्याख्या।ॐ भूर्भुवःस्वरोमित्यनेनवाहिपमाणान्याभिमन्त्रणंकरणी
यम्।ततोदीयमानमन्नमभिमन्त्रयेदनेन।ॐ द्यौस्त्वाददातु अन्नद्यौः आकाशन्त्वात्वांददातुआकाशमेवसर्वेषांभूतानामादिभूतइतिदा-
तृत्वेनउपन्यासः इतिद्यौस्त्वामन्त्रव्याख्या॥ततस्तदन्नंपात्रेकृत्वाअभिमन्त्रयेदनेन ॐ अन्नपात्रअन्नसीरस्यधेह्यनपात्रस्य शुष्मिणःप्रप्रदाता
रंतारिषऊर्जनोधेहिद्विपदेशंचतुष्पदे अस्यार्थः।हेअन्नपात्रअन्नस्यभागंनोऽस्मभ्यन्धेहिदेहि किंभूतस्यअनसीरस्यअसीरोव्याधिःसोऽस्मिन्ना
स्तीति।अनसीरः।अनसीरस्यअव्याधिकारिणः इत्यर्थः।पुनःकिम्भूतस्यशुष्मिणः शुष्मंबलंतदस्मिन्नस्तिबलयुक्तस्येत्यर्थः।तथाहेअन्नपात्र
प्रप्रदातारंतारिषअन्नस्यप्रकर्षेणदातारन्तारयवर्जयप्रप्रइतिद्वितीयः प्रशब्दोदानस्यातिशयख्यापनार्थः तथाहेअन्नपात्रनोऽस्माकंद्विपदे
भार्यापुत्रादिपरिजनायचतुःष्पदेगवादिपशवेचऊर्जंअन्नंधेहिदेहि आत्मीयभार्य्यापुत्रादिपरिजनायगवादिपशवेचआरोग्यकारित्वकारिच।
अन्नंदेहिअन्नंदातारञ्चवर्धयेतियावद्वाक्यार्थः।नत्रकिंदेहिइतिकर्म्मपदस्याश्रवणात्।अन्नस्येतिषष्ठीमात्रश्रवणाच्च भागमितिकर्म्मप
दमध्याहार्य्यम्।इतिअन्नपात्रमन्त्रव्याख्या।ततःपश्चिमादिपात्रासवादिषुनजलदानपूर्वकंबलित्रयंदद्यादनेनमन्त्रेण ॐ भूपतयेनमः ॐ भु
वनपतयेनमः ॐ भूतानांपतयेनमः अस्यार्थः।भूःपतयेभुवः पृथिव्याःपतिःभूःपतिरग्निस्तस्मैनमः तथाभुवनपतयेभुवनस्यचराचरस्यजग
तःपतयेअग्नयेनमः तथाभूतानांपृथिव्यादीनांपतयेअग्नयेनमःएतद्ददातु इति सर्वत्रबोद्धव्यम्।भूपतयेइत्यादिमन्त्रव्याख्या।एतद्बलित्रयंपात्रस्व
निषुभोजनपात्रस्थमन्नंजलेनदक्षिणावर्त्तेनपर्युक्षयेदनेनमन्त्रेण ॐ भूर्भुवःस्वः भूः पृथिवी भुवराकाशंस्वःस्वर्गः एतत्त्रयमन्त्रात्मकमेवे-

स्वभिप्रायः ततोगण्डूषम् गृह्णीयादनेन ॐ अमृतोपस्तरणमसिस्वाहा। अस्यार्थः। हेजल अमृतोपस्तरणमसि अमृतस्य पञ्च महायज्ञावशिष्टस्यान्नस्य उपस्त
रणम्। आस्तरणमसि भवसि इत्यमृतोपस्तरणमसिमन्त्रव्याख्या। ततः पञ्चग्रासान्कुर्य्यात्। तत्रमन्त्रो यथा। ॐ प्राणायस्वाहा १ ॐ अपानायस्वाहा २ ॐ समानाय
स्वाहा ३ ॐ उदानायस्वाहा। ४ ॐ व्यानायस्वाहा। ५ ततोभोजनान्तेअप्रक्षालितयाणिनागण्डूषं गृह्णीयादनेन। ॐ। ॐ अमृतापिधानमसिस्वाहा। अस्यार्थः। हे-
जलअमृतापिधानमसिअमृतस्य पञ्चमहायज्ञावशिष्टस्यभुक्तान्नस्य पिधानं आच्छादनं असि भवसि। ब्रह्मपुराणम्। विप्रस्त्वपउपस्पृश्यपादाङ्गुष्ठे दक्षिणे। ह
स्ताभ्यां मन्त्रवद्दद्याद्विधिवद्बाह्वावनेजलं तथासमार्ज्यवाकुर्याद्गोप्रदानफलंलभेत्। ततं आचम्यदक्षिणपादाङ्गुष्ठेपाणिद्वयं निःसारयेदनेनमन्त्रेण। ॐ अङ्गुष्ठमा
त्रः पुरुषो अंगुष्ठंच समाश्रितः। ईशः सर्वस्यजगतः प्रभुः प्रीणातु विश्वभुक्। अस्यार्थः॥ पुरुषः प्रीणातु पुरि देहे शेते इति पुरुषः परमात्मा उच्यते प्रीणातु प्रीताभ
वतु किंभूतः अङ्गुष्ठमात्रः अङ्गुष्ठपरिमाणसूक्ष्मत्वाभिप्रायमेतत्। पुनः किंभूतः अङ्गुष्ठंसमाश्रितः चकारोप्यर्थः शिरः प्रभृतीनवयवान्समाश्रितोऽङ्गुष्ठमपिस
माश्रित इत्यनेन सकलदेहव्यापकत्वदर्शितं पुनः किंभूतः प्रभुः देहस्यात्माधिष्ठितएवदेहः सर्वकार्येषु प्रवर्त्तते यतः पुनः किंभूतः सर्वस्य जगतः ईशः ईश्वरः सर्वस्यै
वजगतः आत्माअधिकारित्वात् पुनः किंभूतः विश्वभुक् विश्वस्य भोक्ता भोक्तृत्वञ्च पालकत्वं संहारकत्वं वा अयमेव स्वरूपः पुरुषो देहमभिव्याप्य स्थितः अनेनह
स्तनिःस्रावणजलेन प्रीणात्वित्याशंसा वाक्यार्थः॥ विष्णुपुराणम्॥ अद्भिः प्राणान्समालभ्य नाभिं पाणितलेन वा॥ भुक्त्वा सम्यग्यथाचम्य प्राङ्मुखोदङ्मुखोपि-
वा॥ आचान्तः पुनराचामेत्पाणिं प्रक्षाल्य मूलतः। स्वस्थः प्रसन्नचित्तस्तु कृत्वासनपरिग्रहः। अभीष्टदेवतानान्तु कुर्वीत स्मरणं ततः॥ अग्निराप्याययतात्तेव-
रुणोपादसांपतिः दत्वादवकाशेन भक्तंजवयस्तुमेसुखम्॥ अन्नंबलायमेभूमेरपोमध्येनिलस्यच। भवत्वेतत्परिणतो ममास्त्वव्याहतं सुखम्॥ प्राणापान
समानानामुदानव्यानयोस्तथा। अन्नंपुष्टिकरं चास्तु ममास्त्वव्याहतं सुखम्॥ अगस्तिरग्निर्वडवानलश्च भुक्तं मयान्नं पचयत्वशेषम्। सुखंममैतत्परिण

मसंभवं पञ्चत्वरोगं मम चास्तु देहे। विष्णुः समस्तेन्द्रियदेहदेहे प्रधानभूतो भगवान्यथैकः असत्येन तेनान्नमशेषमेतद् आरोग्यदं मे परिणाममस्तु। विष्णुर्वातो यथै
वान्नपरिणामस्य वै यथा। सत्येनानेन वै भुक्तं जीर्यत्वन्नमिदं तथा इत्युच्चार्य स्वहस्तेन परिमृज्यत थोदरम्। अनायासप्रदायीनि कुर्यात् कर्माण्यतन्द्रितः। दक्षः। भु
क्त्वा च सुखमास्थाय तदन्नं परिणामयेत्। इतिहासपुराणाद्यैः षष्ठः सप्तमकौ नयेत्। इति ब्राह्मणसर्वस्वे भोजनमन्त्रव्याख्या॥ अथ सायंसन्ध्या। तत्र देवलः।
सायं प्रातः सदा सन्ध्यामुपासीत शुचिर्विहिः। योगी सायं प्रातस्तु यः सन्ध्यां सर्वदा पर्युपासते। कृत्वैव पावनीं देवीं सावित्रीं वेदमातरम्। सतया पावितो देव्या ब्रा
ह्मणो गतकल्मषः। न सीदेत् प्रतिगृह्णानः पृथिवीं च ससागराम्। यमः। अनागतां तु ये पूर्वामतीतां ये तु पश्चिमाम्। विप्राः सन्ध्यां न तिष्ठन्ति वृषलास्तु उदाहृताः
। अत्रिः। कर्मणा मनसा वाचा यदन्हा कुरुते त्वदाम्। आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु शुध्यति। तदेवं सति सायंसन्ध्यामन्त्रव्याख्याने कर्तव्ये प्रातः साय
सन्ध्ययोर्मन्त्राणां तुल्यत्वाद्व्याख्यानं प्रातः सन्ध्यायामनुसन्धेयम्॥ आचमनमन्त्रे तु विशेषः। अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो
रक्षन्तां यदन्हा पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किंच दुरितं मयि इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि
स्वाहा। अस्यार्थः। मा मां रक्षन्तां के अग्निश्च मन्युश्च मन्युपतयश्च मन्युर्यज्ञस्तस्य पतय इन्द्रादयः कुतो रक्षन्तां पापेभ्यः किंभूतेभ्यः मन्युकृतेभ्यः। क्रोधजनिते-
भ्यः किंच अहं यत्पापं कृतं अन्हा दिवसेन अकार्षं कृतवान् अस्मिकेन मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना शिश्नेन तत्पापं अहः अवलुम्पतु नाशयतु त
था मदाश्रितं यत्। किंचिद्दुरितं पाव देव पापन्न दिदमापः जलरूपं पापं अहं ज्योतिषि अग्निस्वरूपे परमात्मनि जुहोमि। किम्भूते ज्योतिषि सत्ये तत्स्वाहा हुतं भवतु इ
त्यर्थः। पदसाधनादिकं च प्रातःसन्ध्यायां सूर्यश्च मा मन्युश्चेति मन्त्रव्याख्यायामेव कृतं तत्रैवानुसन्धेयम्॥ तत्र गायत्रीजपे विशेषमाह। याज्ञवल्क्यः। ज
पन्नासीत सावित्रीं प्रत्यगातारकोदयात्। प्रागुक्तानौ करौ कृत्वा सायं च्चाधोमुखौ तु तौ। मध्ये ऊर्ध्वकराभ्यां तु जप एवमुदाहृतः। इति ब्राह्मणसर्वस्वे सायंसं

ध्यामेवं व्याख्या॥ सायवैश्वदेवः। तत्र छन्दोगपरिशिष्टे। सायंप्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च। अनश्नतापि सततमन्यथा किल्विषी भवेत्। विष्णुपुराण
म्॥ पुनः पाकमुपादाय सायमप्यवनीपते। वैश्वदेवनिमित्तं वै पत्न्या सह बलिं हरेत्। वैश्वदेवं हि नामैतत्सायंप्रातर्विधीयते॥ मध्याह्नबलिदानानन्तरं गोभिलः
स्त्रीच सायंप्रातःपुमानिति सायवैश्वदेवः। अथ सायंभोजनम्। तत्र मनुः। सायंप्रातर्द्विजातीनामशनं देवनिर्मितम्। नान्तराभोजनं कार्यमग्निहोत्रसमो वि-
धिः॥ छन्दोगपरिशिष्टम्। ऋषिभिर्द्विरशनं प्रोक्तं मानवाणां मर्त्यवासिनाम्। नियमन्हिनितमस्विन्यां सार्द्धप्रहरयामातः। भोजनाधिकारे आपस्तम्बः। स्व
मेवाहरहः सायंप्रातर्जुहुयात्। अद्भिर्वा सायं तथा आपाणिग्रहणाद्वा गृह्ये मेधिनोव्रतं तत्त्व कालयोर्भोजनं अहरघ्नं स्यान्नस्येति॥ सायंभोजनविधिः। अथ
स्वपनविधिः॥ तत्र विष्णुधर्मोत्तरे द्वितीयकाण्डे। शून्यालये श्मशाने च वने च वह्नसे चतुष्पथे। महादेवगृहे वापि मातृवेश्मनि न स्वपेत्। नयसदेवायतने स्कन्दस्य
पतने तथा। कुलच्छायासु च तथा शर्करालोष्टपांसुषु। प्रस्वपन्न तथा दर्भे विना दीर्घां कथञ्चन। धान्यगोदेवविप्राणां गुरूणां च तथोपरि। शङ्खलिखितौ च
वल्मीकमहाह्रदसंच्छायासु पर्वतशिरसि। नतत्सानौ वा पर्वेसु परागसमये वा नह्वषलमध्ये नाविमध्ये। विष्णुपुराणम्। कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृ-
ही। गच्छेच्छय्यामस्फुटितामेकदारुमयीं नृप। नाविशालां न वा भग्नां नासमां मलिनां न च। न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम्। विष्णुः। न पलाशशय
नेन पञ्चदारुकृतेन गजविद्युद्दग्निकृते। भिन्नेनाग्निप्लुष्टेन घटसिक्तद्रुमजेन। शङ्खलिखितौ। न च शीर्णखट्वायां नान्यवर्णोपि ना पितामनभ्युक्ष्य। हारीतः।
न शयने अन्यपूर्वे नाश्मनि नोपधाने तथा नाद्यनेन भाग्। विष्णुः। नार्द्रपादः स्वप्यं तेनोत्तराष्कतशिराः। शङ्खलिखितौ। न सन्ध्यायां शयीत न अशुचिर्न निम्नः
मार्कण्डेयपुराणम्। नोदक्शिराः स्वपेज्जातु न च प्रत्यक्शिरा न च॥ शिरस्त्वागस्त्यामाधाय शयीनाथ पुरन्दरीम्॥ विष्णुपुराणम्। प्राच्यां दिशि शिरः कृत्वा-
ध्यापामथवा नृप। सदैव स्वपतः पुंसो विपरीतं तु रोगदम्॥ पराशरः। यदीच्छेत्सर्वपापानि हन्तुं निरविशेषतः। मौनेनान्नं समश्नीयादगस्त्यशिरमास्वपेत्

ग्रा॰सं तथानैकाकीस्वपेत्।स्वयंसुप्त्वावस्यमाणश्लोकान्पठेत्।स्कन्दपुराणम्।नमोनन्दीश्वरायेतियःप्रोक्तास्वपेत्नरः।तस्यकुष्मांडराजभ्योनभविष्यतिवैभ-
६२ यम्।महाभारते॥योजरत्कारुणाजातोजरत्कारौमहायशाः आस्तिकःसर्पसत्रेवपन्नगान्योभ्यरक्षयत्।तंस्मरन्तंमहाभागानमांहिंसितुमर्हथ।अस्ति
तस्वातिमित्यस्य हनिशंवापियःस्मरेत्।दिवावायदिवारात्रौनास्यसर्पभयंक्वचित्।तथा।सर्पापसर्पभद्रन्तेगच्छसर्पविनान्तरम्।जन्मेजयस्ययज्ञान्तेआ-
स्तीकवचनंस्मर।आस्तीकवचनंस्मृत्वायःसर्पोननिवर्त्तते।सतधाभिद्यतेमूर्द्धाशिरीषस्यफलंयथा।ततोवैदिकमन्त्रेणरक्षांकुर्यात्।विवस्वानृषिः।परमा-
त्मादेवता।जगतीछन्दः।शयनेरक्षाकरणेविनियोगः।मन्त्रोयथा।सप्तर्षयःप्रतिहिताःशरीरेसप्तरक्षन्तिसदाऽप्रमादम्।सप्तापःस्वपतोलोकमीयुस्तत्रजागृ-
तोस्वप्नजौसत्रसदौचदेवौ॥अस्यार्थः।सप्तऋषयः।प्राणिनांशरीरेदेहेप्रतिहिताअवस्थिताइत्यर्थः।केतेसप्तऋषयः।स्वपतःपुरुषस्यलोकंहृदयस्थानंईयुःग-
च्छन्तिरक्षन्ति।अर्थवशाच्छरीरमेवनकेवलंसप्तऋषयएवेतिरक्षन्तिअपितुआपश्चसप्तरक्षन्ति।केतेसप्तआपः शुक्रशोणितरसामज्जाश्लेष्माश्रुमूत्राणि।किं-
चतस्यस्वपतःपुरुषस्यतस्यामवस्थायांदेवौप्राणापानौजाग्रतःजागरंकुरुतः।स्वपतःपुरुषस्यपुरुषार्थरक्षार्थमितिभावः।किंभूतौदेवौसत्रसदौ।सत्रंदेहः।अ-
स्थायिनौपुनः।किंभूतौअस्वप्नजौस्वप्नजंतयोर्नविद्यतेइत्यर्थः।इतिशयनेमन्त्रव्याख्या।ततआपस्तंबः।सदानिशायांदारान्प्रत्यालिङ्गनचरितेविष्णुपुराणम्
स्नातःसुगन्धिधृग्धूपेनधूपितोऽस्तुधितोपिवा।सकलःसानुरागश्चव्यवायंपुरुषोव्रजेत्।नास्नातान्तुस्त्रियंगच्छेन्नातुरांनरजस्वलाम्।नारिष्टांनप्रकुपितांनाप्रशा-
स्तांनगुर्विणीं।नादक्षिणांनान्यकामांनाकामांनान्ययोषितम्॥क्षुत्क्षामामतिभुक्तांवास्वयञ्चैभिर्गुणैर्युतः।स्त्रियमुपेयादि।स्वधिकारेविष्णुः।नश्राद्धंकृ-
त्वानोपभुङ्क्त्वापमन्त्रितः।आद्रीव्रतीनदीसितःनवोद्भ्यायतनंसंस्कारशून्यानयेषुनक्षत्रसम्मूलेनदिवानसन्ध्ययोः।अमलिनान्नाभ्यक्तान्नाभ्यक्तोनवागातीं राम
र्नेहिनाङ्गीनाधिकाङ्गींतथैवचावयोधिकांवानोपेयाद्धभिगांनारींदीर्घमायुर्जिजीविषुः।तथाअभिगमरत्यधिकारेष्वविरोगाभावः॥स्कन्दपुराणम्।तथा। ६२

चतुर्दश्यष्टमीचैवअमावास्याथपूर्णिमा।पर्वाण्येतानिराजेन्द्ररविसंक्रान्तिरेवच।स्त्रीतैलमांससंभोगीपर्वस्वेतेषुवैपुमान्।विण्मूत्रभोजनंनामप्रया-
तिनरकंमृतः।मनुः।नोपगच्छेत्प्रमत्तोऽपिस्त्रियमार्तवदर्शने।समानशयनेचैवनशयीततयासह।वसिष्ठः।यस्तुपाणिगृहीताया आस्येकुर्वीतमैथुनं
भवन्तिपितरस्तस्यतन्मासंरेतसोभुजः।कठशाखायाम्।नोऽस्माकंपापमजातीयस्ताःस्त्रियोविजनिष्यमाणाःपतिभिःसहशयीरन्नितिस्त्रीभिःप्रार्थि
तेनतथास्त्वितिइन्द्रेणस्त्रीणांवरोदत्तः।एतेनस्त्रीणांकामलालसत्वंप्रतिपादितम्।तद्यदिअनृतौस्त्रीनोपगम्यतेतदातासांनित्यंरतिलालसतया
व्यभिचारोऽपिसंभाव्यते।तस्मात्स्त्रीणांरक्षणार्थमनृतावप्युपगमंकुर्यादित्यभिप्रायः।तथाचविष्णुपुराणम्।इतिमत्वास्वदारेषुऋतुमत्सुपुरुषोव्र
जेत्।यथोक्तदोषहीनेषुसमयेष्वनृतावपि॥इतिब्राह्मणसर्वस्वेशयनमन्त्रव्याख्या॥अथगर्भाधानादिदशविधसंस्कारमन्त्राणांधर्माध्य
क्षहलायुधविरचितांव्याख्यांशृणु।तत्रकानितानिदशकर्माणिइत्यपेक्षायांयाज्ञवल्क्यः।गर्भाधानमृतौपुंसःसवनंस्पन्दनात्पुरा।षष्ठेऽष्ट
मेवासीमन्तोमास्येतेजातकर्मच।अहन्येकादशेनामचतुर्थेमासिनिष्क्रमः।षष्ठेऽन्नप्राशनंमासिचूडाकार्यायथाकुलम्।गर्भाष्टमेऽष्टमेवाब्दे
ब्राह्मणस्योपनायनम्।राज्ञामेकादशेसैकेविशामेकेयथाकुलम्।अविप्लुतब्रह्मचर्योलक्षण्यांस्त्रियमुद्वहेत्।एवंसंस्कारानभिधायतेषां
मन्त्रवत्त्वमाह।ब्रह्मक्षत्रियविट्शूद्रावर्णास्त्वाद्यास्त्रयोद्विजाः।निषेकाद्याःश्मशानान्तास्तेषांवैमन्त्रतःक्रियाः।तथामनुः।वैदिकैःक-
र्मभिःपुण्यैर्निषेकादिर्द्विजन्मनाम्।कार्यःशरीरसंस्कारःपावनःप्रेत्यचेहच।तथागर्भाधानादीनांफलमाह।याज्ञवल्क्यः।एवमेनःशमंया-
तिबीजगर्भसमुद्भवम्।तथामनुः।गर्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।गार्भिकंबैजिकञ्चैनोद्विजानामपमृज्यते।स्वाध्यायेनव्रतैर्होमै
स्त्रैविद्येनेज्ययासुतैः।महायज्ञैश्चब्राह्मीयंक्रियतेतनुः।इत्थंसामान्येनसंस्काराणांफलवत्त्वेऽवधारिते।गर्भाधानेबौधायनः।ऋतावुत्पाद

ब्रा॰स॰ येदौषधमन्त्रसंयोगेन। तथा गर्भाधानस्य विशेषफले हारीतः। गर्भाधानयुतो ब्रह्मगर्भं सन्दधाति। अस्यार्थः। स्वगृह्योक्तगर्भाधानयुक्तः सन् स्त्रि-
६३ यमुपगतो ब्रह्ममयं गर्भमादधाति। तथा गर्भाधानादिचूडाकरणान्तानां संस्काराणां प्रत्येकं फलमभिधाय हारीतः। एतैरष्टभिः संस्कारैर्गर्भो-
पघाताद् मुक्तो भवति। तथा ऋतुकालविवेके मनुः। ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः। चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः। ता-
सामाद्याश्चतस्रस्तु निन्दितैकादशी च या। त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः। तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्। पुमान् पुंसोऽ-
धिके शुक्रे स्त्री भवत्यधिके स्त्रियाः। समे पुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः। याज्ञवल्क्यः। युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु। षोड-
शर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत्। ब्रह्मचर्येण पर्वण्याद्याश्चतस्रश्च वर्जयेत्। एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्। सुस्थ इन्दौ
सकृत् पुत्रं लक्षण्यं जनयेत् पुमान्। तथा विष्णुपुराणम्। ऋतावुपगमः शस्तः स्वपत्न्यामवनीपते। पुंनामर्क्षे शुभे काले तासु युग्मासु रात्रिषु। तथा ग-
र्भाधानकर्माणि। पारस्करः। दक्षिणांसमधि हृदयमालभेत। यत्ते सुसीमे इत्यादि। तदेवं स्थिते ऋतुनिशायां निषेकपूर्वसमये पत्न्या दक्षिणस्कन्धो-
परि नीतेन हस्तेन हृदयं स्पृष्ट्वा इमं मन्त्रं जपति। ओं यातुसुसीमे हृदयं दिवि चन्द्रमसि स्थितं वेदाहं तन्मां विद्यते पश्येम शरदः शतं जीवेम शरदः श-
तं शृणुयाम शरदः शतम्। अस्यार्थः। हे सुसीमे शोभना सीमा तावयवसन्धिर्यस्याः सुसीमा हे शोभनावयवसन्धे ते तव हृदयं वेद जानामि किं-
भूतं हृदयं दिवि आकाशे चन्द्रमसि स्थितम्। प्रथमतो हि स्त्रीणां चन्द्रः स्वामीति नियमः। पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिरिति। अतस्त-
दाहमन्ते चित्तमित्यभिप्रायः। इदानीं तद्धृदयं मां विद्यात् पतित्वेन जानातु किञ्च पश्येम शरदः शतं आवां शतं वर्षाणि पश्यावः। एवं जीवेम शरदः राम
शतं शृणुयाम शरदः शतम्। इयन्तं समयं चन्द्रस्तव पतिरासीत् देवतात्वत्तस्मिन्नार्पितम्। इदानीमहं तव पतिरिति तव हृदयं जानातु आ- ६

वामविकलेन्द्रियोशतंवर्षाणिजीवावइत्याशंसावाक्यार्थः पश्येमजीवेमश्रुणुयामइतितिङन्तितिङोभवन्तीतिउत्तमपुरुषद्विवचनेबहुवचनम्।पुनःपा
रस्करः।सायदिगर्भनदधातिनदाभिंसंह्याः श्वेतपुष्पायाउपोष्यपुष्येणमूलमुत्थाप्यचतुर्थीस्नातायांनिशायामुदपेषंपिष्ट्वादक्षिणस्यांनासिकाया
मासिञ्चति इयमोषधीत्यादि।यदिनिषेकेसत्यपिगर्भोनभवतितदापुनर्वसुनक्षत्रेदिवसेउपवासंकृत्वापुष्यनक्षत्रदिवसेश्वेतपुष्पकण्टकारिकामू-
लमुत्पाट्यस्थापयेदृतनकृतुस्नातायांनिशायांतन्मूलंजलेनपिष्ट्वातेनपत्न्यानस्यंदद्यात्पतिपठितेनमन्त्रेण।ॐ इयमोषधीत्रायमाणासहमा-
मासरस्वती।अस्यांबृहत्यांपुत्रः पितुरिवनामजयभत्।अस्यार्थः।इयंबृहतीओषधीव्याधिनाशकरीकिंभूतात्रायमाणारक्षाकरीपुनःकिंभूतासह
मानाउत्पन्नंदोषमाकर्षणकरीपुनःकिंभूतासरस्वतीवाक्प्रसादहेतुःअस्यांबृहत्याकण्टकारिकायांपुत्रःनामजयभत्प्रकाशत्वंगच्छतु।किंभू
तंनामपितुरिवपितृसदृशमित्यर्थः।अत्रपूर्वार्द्धेनबृहतीस्तुतिःउत्तरार्द्धेनअस्यांपुत्रःप्रकाशत्वंलभतामित्याशंसावाक्यार्थः।जयभदितिनिग्रहउपादा
नइत्यस्माद्धातोर्हग्रहोर्भश्छन्दसीतिहकारस्यभकारः॥इतिगर्भाधानम्॥अथपुंसवनम्।तत्रहारीतः।पुंसवनात्पुंसाकरोतिइतिफलम्।तथा
गर्भाधानाद्यष्टौसंस्कारान्अभिधायपुनःसएवाह।एतैरष्टभिर्गर्भसंस्कारैर्गर्भोपघातात्पूतोभवति।तत्रपुंसवनेपारस्करः।अथपुंसवनंपुरा
स्पंन्दइतिनाममासेद्वितीयेतृतीयेवायदहःपुंसानक्षत्रेणचन्द्रमायुज्यतेतदहरुपवास्याप्लाव्याहतेवाससीपरिधायन्यग्रोधावरोहंशुङ्गांश्च
निशायामुदपेषंपिष्ट्वापूर्ववदासेचनम्।ॐ हिरण्यगर्भोद्भ्य इत्येताभ्यांकुशकण्टकंसोमांशुचैकेतद्वेसतियथोक्तसमयेवटावरोहशुङ्गंकु
शाकण्टकञ्चशिशिरजलेनपिष्ट्वानववस्त्रद्वयपरिधानायाःपत्न्यानस्यंदद्यात्पतिरेताभ्यांमन्त्राभ्याम्।हिरण्यगर्भऋषिःप्रजापतिर्देवतात्रिष्टु
प्छन्दःस्नपनेहिरण्यपुरुषार्पणेविनियोगः।मन्त्रोयथा।ॐ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकआसीत्।सदाधारपृथिवींद्यामु

तेमांकस्मैदेवाय हविषाविधेम। अस्यार्थः। हिरण्यगर्भः हिरण्यगर्भाख्यः पुरुषः समवर्त्तत समभवत् अग्रेप्रथमं यो हिरण्यगर्भोजातोजातमात्रोभू
तस्यप्राणिजातस्यएकोऽद्वितीयः पतिरासीत्स्वामीवभूवेत्यर्थः एवंभूतः स पृथिवीं दाधार धृतवान् नकेवलं पृथिवीं उत इमां द्यां अन्तरीक्षं एवंभूताय
कस्मैकाय प्रजापतये देवाय हविषा हविर्विधेम दद्मः अत्र सदाधार इति दधार इति प्राप्ते आकारश्छान्दसः काय इति प्राप्ते स्मायादेशश्छान्दसः हवि-
षेति द्वितीयास्थाने तृतीया अयंवाक्यार्थः। यो हिरण्यगर्भ एक एव प्राणिजातस्य प्रभुः पृथिवीमन्तरीक्षञ्च धारयति तस्मै प्रजापतिमूर्त्तये हविरपिदी-
यते इति प्रजापतेः स्तुतिः। नारायणऋषिर्जगद्बीजपुरुषोदेवता अनुष्टुप्छन्दः पुरुषमेधे आदित्योपस्थाने विनियोगः। मन्त्रो यथा। ॐ अद्भ्यः संभृ
तः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे। तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे। अस्यार्थः। यो विष्णुः अग्रे प्रथमं अद्भ्यः जला
त् पृथिव्यै च पृथिव्याः अपि चकारो भिन्नक्रमः। संभृतः समवर्त्तत उत्पन्नोऽभवत् जलपृथिव्योरुपादानं पञ्चभूतोपलक्षणार्थं कुतो निमित्तकारणात् र
सात् कामात् सिसृक्षारूपात् विश्वकर्म्मणः विश्वं सर्वं कर्म्म यस्य विष्णोरूपं मूर्त्तिं विदधत् धारयत् त्वष्टा आदित्यः अग्रे पुरतः सर्वेषामपरोक्षं इत्यर्थः
। एति आगच्छति तद्रूपं मर्त्यस्य मनुष्यस्य देवत्वेनैव भवति किंभूतं अजानं यावज्जीवम्। विष्णुः सृष्ट्यादौ पञ्चमहाभूतेभ्य उपादानकारणेभ्यः सिसृ
क्षायां निमित्तकारणं प्राप्य उत्पद्यत तदनु आदित्यः तस्य विष्णोर्यद्रूपं धारयन् गच्छतीति सर्वेषां प्रत्यक्षं तद्रूपं मनुष्यस्य देवत्वेन भवतीति वाक्या
र्थः। तत्र पृथिव्यै इति पञ्चम्यर्थे चतुर्थी देवत्वमिति तृतीयायां द्वितीया इत्थंभूत प्रजापतिरस्मिन्गर्भे सन्निधानं करोत्वित्यभिप्रेताभ्यां मन्त्राभ्यां-
पुंसवनेन स्पंदी पते। पुनः पारस्करः। कूर्म्मपृष्ठरोमहे कृत्वा सपदिकामयेद्वीर्यवान्स्यादिति विकृनमभिमन्त्रयेत्। सुपर्णोसीत्यादिपस्तुपस्थसन्नि
धौ पानीयमुपस्थाप्य अभिमन्त्रयेदनेन। प्रजापतिर्ऋषिर्गरुडो देवता आकृतिश्छन्दः ष्वयनस्थाना भिमन्त्रणे विनियोगः। मन्त्रो यथा। ॐ सु

र्णोसि गरुत्मांस्त्रिवृत्ते शिरो। गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ स्तोम आत्मा छन्दाꣳस्यङ्गानि यजूꣳषि नाम साम ते तनुर्वामदेव्यं यज्ञायज्ञियं पुच्छं धि-
ष्ण्याः शफाः। सुपर्णोसि गरुत्मान् दिवं गच्छ स्वः पत। अस्यार्थः सुपर्णः। शोभनपर्णः शोभनपक्षः गरुत्मान् दूरगत्वादिगुणयोगेन प्रशस्तपक्षवा-
न् त्रिवृत् ॐकारः तेन तव शिरो मस्तकं गायत्रं साम ते चक्षुः बृहद्रथन्तरे सामनी ते पक्षौ स्तोमः स्तोमाख्यः पञ्चविंशति साम नि ते आत्मा स्वरूपं छन्दां-
सि अनुष्टुबादीनि ते अङ्गानि यजूंषि यजुर्वेदः ते नाम संज्ञा साम ते तनुः शरीरं कतमं वामदेव्यं यज्ञयज्ञियं साम ते पुच्छं लाङ्गूलं धिष्ण्या अग्नयः ते शफाः
नखाः। पतस्त्वं सुपर्णोसि गरुत्मांश्च अतः दिवं आकाशं गच्छ यामि स्वः स्वर्गलोकं पत तया हि अयं वाक्यार्थः सुवर्णत्वादिगरुडधर्म्ममारोप्य त्वेदमाप-
स्त्वमिति अग्निः स्तूयते पुंसवने अग्निजलयोः कार्यकारणभेदाभ्युपगमेनाग्निस्तुत्या जलमेव स्तुतं गर्भवीर्यवत्त्वं करोति॥ इति पुंसवनम्। अथ सीमन्तो-
न्नयनम्। तत्र हारीतः। उन्नयनान्मातापितृजं पापं व्यपोहति। तथा गर्भाधानाद्यष्टसंस्काराणां प्रत्येकं फलमभिधाय हारीत एव पुनराह। एतैरष्टभि-
र्गर्भसंस्कारैर्गर्भोपघातात् पूतो भवति। पुंसवनवत् प्रथमगर्भमासे षष्ठेऽष्टमे वा। अत्र पुंसवनवदिति पुंनक्षत्रयोगेन पत्नी स्नाता आहतवस्त्रद्वयपरि-
धानाऽऽदिष्टा प्रथमगर्भ इति च द्वितीयादिगर्भेषु सीमन्तोन्नयनसंस्कारनिषेधार्थः। यथा हारीतः। सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः। यं यं
गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत्। पुनः पारस्करः। तिलमुद्गमिश्रं स्थालीपाकं श्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ उपविष्टाया युग्मेन स-
टलुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जूलैस्त्र्येण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण सीमन्तमूर्द्ध्वं विनयति भूर्भुवः स्वरिति प्रतिमहाव्याहृतिभिर्वा
अत्र मन्त्रपाठो मङ्गलपाठः। युग्मेनेत्यादि युग्मसंख्यापक्वौदुम्बरफलस्तवकेन साग्रप्रादेशमात्रगर्भशून्यकुशपत्रद्वयं पिञ्जूलम्। यथाह छन्दोपरि-
शिष्टं अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव चेत्यभिधाय एतदेव हि पिंजूललक्षणं समुदाहृतमिति। त्र्येण्या शलल्या इति त्रिश्वेतशल्लकीकण्टके

नवीरतरशङ्कुनाकारारेणपूर्णचान्द्रेणसूत्रपूरितंकुर्य्यात्।पुनःपारस्करः।त्रिवृत्तमाबध्नात्ययमूर्ज्जावितइत्यादि।अत्रत्रिवृत्तंवेणी।पुनःपारस्करः
तथा हरीणांगाथिनौराजानंसङ्गायेतांयोवाप्यन्योवीरतरइतिनियुक्तामप्येकेगाथामुपोदाहरन्ति।सोमएवेत्यादि।यांनदीमुपवसिताःकोभव
न्तिवस्यानाम।अत्रनियुक्तामितिपूर्वाचार्य्यैर्विहितांगाथामपिपठेदित्यर्थः।पुनःपारस्करः।ततोब्राह्मणभोजनम्।एवंसतियथोक्तेसमयेभा
र्य्यापत्नीसमेतःपतिरग्निस्थापनपूर्वकंचरुश्रपणादिकंकृत्वाआज्येनवाज्यभागौहुत्वाचरुहोमंस्विष्टकृद्धोमञ्चकृत्वापञ्चवारानजुहुयादेभि
र्मन्त्रैः।अग्निसरस्वतीन्द्राऋषयोऽग्नीवरुणौदेवतेत्रिष्टुप्छन्दःसौत्रामण्यांअवभृतेष्टौविनियोगः।मन्त्रोयथा।ॐत्वंनोऽग्नेवरुणस्यविद्वा
न्देवस्यहेलोअवयासिसीष्ठाःयजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत्॥अस्यार्थः।हेअग्नेत्वंवरुणदेवस्यहेलःक्रोधंअ
स्मिन्कर्म्मणिवैगुण्यंजनितंअवयासिसीष्ठाःअपनयकिंभूतंत्वंनोऽस्मान्विद्वान्त्वमेवास्माकंकर्म्मसाक्षित्वेनअस्मान्जानासीत्यर्थः।नकेवलं
वरुणस्यक्रोधमपनयअस्मान्ःअस्मतःद्वेषांसिदौर्भाग्यानिचप्रमुमुग्धिप्रमोचयकिंभूतानिविश्वाविश्वानिसर्वाणिकिंभूतःयजिष्ठःयागेसा
तिशयउत्तमःपुनःकिंभूतःवह्नितमःहविषांवहनेप्रापणेसातिशयःपुनःकिंभूतःशोशुचानःउत्तरोत्तरंदीप्यमानःहेअग्नेत्वंअस्मान्जानासि-
भवतोऽस्माकमस्मिन्कर्म्मणिप्रमादाद्वैगुण्यकृतंवरुणक्रोधमपनयनोऽस्माकंदौर्भाग्यानिप्रमोचयइतिप्रार्थनावाक्यार्थः।हेलइतिहेलम्अना
दरस्तस्यप्रयोगेद्वितीयैकवचनेप्रथमैकवचनम्।शोशुचानइतिलिटःकानजितिकानचारुपम्।अग्निसरस्वतीन्द्राऋषयोऽग्नीवरुणौदेवता-
त्रिष्टुप्छन्दःसौत्रामण्यांअवभृथेष्टौविनियोगः।ॐसत्वंनोऽग्नेवमोभवोतीनेदिष्ठोऽअस्याउषसोव्युष्टौ।अवयक्ष्वनोवरुणंरराणोवीहिमृडीकंसुह
[illegible]।हेअग्नेत्वंअस्माकंअवमोभवअवितृतपापालयितृतमोभवसकःयस्त्वंऊतीनेदिष्टःनितरांअन्तिकत्वेनसन्निहितइत्यर्थः।[illegible]

[illegible]ो मनसा ध्यायमाना : । अस्मिन्प्रभातस्य [illegible] समयरत्नय : । [illegible]
[illegible] वरुणं अवयस्व ह्टजयकिं कुर्वन्नोऽस्माकं मृडीकः रराणः अस्मत्सुखकृत् हविर्हदानः पुनश्चीहीस्त्वं देवमस्यप्रे अग्ने [illegible]
पालनेन नित्यसन्निहितः सत्वमद्यास्माकं पालको भव अस्मान्प्रति आगत्य च अस्मदीयं हविर्हदानः वरुणं हनुपत्नयमपि भक्षयेति प्रार्थना वाक्या-
र्थः । अवयम अवरस्व रणोरित्यस्य अवतमतमस्य तकारलोपश्छान्दसः ऊतीति अवरस्व रणोरित्यस्य ऊती पूतीति सिद्धं अत्र तृतीयैकवचने सुपां सुलुगिति
वाकोन पूर्वसवर्णादि शे कृते ऊतीति रूपम् । रराणइति राला दाने इत्यस्य यङ्लुकि शपि रूपम् । मृडीकं मृडसुखने इत्यस्मात् उणादिक इकन् प्रत्ययः । अ
याश्चाग्ने इत्यादि मन्त्रस्य प्रजापतिर्ऋषिः गायत्री छन्दोऽग्निर्देवता प्रायश्चित्तहोमे विनियोगः ॐ अयाश्चाग्नेस्यनभिशस्तिश्च सत्यमित्त्वमया
असि । अयानो यज्ञं वहास्ययानो धेहि भेषजम् ॥ अस्यार्थः ॥ हे अग्ने त्वं अयाश्च असि प्राणिनां शुभावहो विधिरूप्यसि अपरं अनभिशस्तिश्च अ
सि अविद्यमाना अभिशस्तिर्यत्रिज्ञा यस्य पुरुषस्य सोऽनभिशस्तिः तमपि पापिरससि इति अनभिशस्तिश्च त्वं अयमर्थः ॥ यस्त्वां रक्षणार्थं
नयाचते तस्यापि त्वं माहात्म्यात् रक्षको भवसीति नित्यं भूतस्त्वा अयाः आगच्छ आगत्य नोऽस्माकं यज्ञं वहस्व हविरेतत् हुतं नद्देवान् प्रापय कि-
ञ्च त्वं सत्यमित् सत्यमेव अया असि ताता असि जगत्संसारात् निस्तारोपायं जानासीत्यर्थः ॥ अतः कारणादपि त्वं अयाः आगच्छ आगत्य च नो
ऽस्माकं भेषजं धेहि अस्माकं निस्तारोपायमौषधं परिकल्पय । यद्यपि प्रभाववाची अयशब्दोऽकारान्तस्तथापि छान्दसः सकारान्तः । सत्यमि-
दिति इत्शब्दोऽयमव्ययमवधारणार्थः । अयानो यज्ञं वहासि अयानो धेहि भेषजमित्यत्र अया अया इति क्रियापदद्वयमत्यन्ताधिकत्वद्योतनार्थम
त्रायाइति इणगतौ इत्यस्माल्लिङ् मध्यमपुरुषैकवचने सिप् इत्तिश्चलोपः परस्मैपदेष्विति इकारलोपः धातोर्गुणः लेटोऽडाटाविति आडागमः । आ

उ·४१ः तस्माकारेणस्कारादेशोसतिवर्णव्यत्ययाद् ह्रस्वत्वंअपाइतिसर्वेगत्यर्थाज्ञानार्थाइतिकृत्वाएतिजानातीतिअसुनप्रत्ययेनरूपम्।

येतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितता महान्तस्तेभिर्नोअघसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काः॥अस्यार्थः।हेवरुणतेतवयेशतंपा-
शाःविततविस्तीर्णाअपिचयेसहस्रंशतसहस्रयोरुपादानंअतिबहुत्वोपलक्षणार्थम्। किंभूतायज्ञियायज्ञेषुतथाभूतानुष्ठानजनिताःअपिच
किंभूतामहान्तः सर्वलोकव्यापकभूताःतैःपाशैःनोऽस्मानअद्यइदानींसविताकेवलसविताउतविष्णुःविश्वेविश्वेदेवामरुतःवायवःस्वर्काःसु
ष्टुअर्काःआदित्याःमुंचन्तुमुक्तान्कुर्वन्तुअयंवाक्यार्थः।अस्मिन्यज्ञकर्म्माणियानिकानिचित्प्रमादादिकृतानितथानुष्ठानजनितानिपापानिदुः
खहेतुगुणयोगीपाशशब्दाभिधेयानितैःपाशैःसवित्रादयोदेवताअनयाआहुत्यातोषिताअस्मानमुक्तान्कुर्वन्तु।तेभिरितितृतीयाबहुवचनेबहुलं
छन्दसीतिऐसादेशनिषेधेबहुवचनेझल्येदित्येत्वम्।शुनःशेपऋषिर्वरुणोदेवतात्रिष्टुप्छन्दःस्वयज्ञशिरस्कपाशरुद्र·मो·चनेविनियोगः॥म
न्त्रोयथा॥उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय।अथावयमादित्यव्रतेतवानागसोऽदितयेस्याम॥अस्यार्थः॥हेवरुणपाशंउदुत्त
मंअस्मत्अस्मत्तःउच्छ्रथायउद्गृह्यशिथिलंकृत्वानयअधमंपाशंअवश्रथयअर्वाचीनंश्रथयेतिपूर्ववत्तद्वमध्यमंउत्तमाधमयोऽन्यत्।विश्रथ
यस्वस्थानेस्वविशेषेणश्रथयअथकृतेसतिहेआदित्यअदितिपुत्रवरुणतवव्रतेकर्म्मणिवर्त्तमानावयंअनागसःअनपराधाःसन्तःअदितये
आदीनतायैस्यामअदीनाभवामइत्यर्थः।हेवरुणउत्तमाधममध्यमपाशत्रयशिथिलीकरणमभ्यर्थ्यवारुणव्रताचरणेनवयमदीनाभवामइत्या-
शंसावाक्यार्थः।अवश्रथायेतिवलयोरेकत्वस्मरणात् नकारस्यरेफः अथायअथावयंइत्यत्रयेऽपिआकारस्यसंहितायांच्छान्दसः अदितयेइत्यत्रा
दीनत्वम्[illegible]स्यादितोःक्तिनप्रत्ययेकृतेदितिरितिरूपंनदितिरदितिर्वादर्थ्येचतुर्थ्यदितयेइत्यर्थः होमंसमाप्यपत्न्याःसीमन्तःशलल्यैकः

[illegible] लनेनमन्त्रेण ॐ भूर्विनयामिभूर्लोकंविनयामिदृश्यकरोमि । ॐ भुवोविनयामिभुवोलोकंअन्तरिक्षंविनयामिदृश्यकरोमि ॐ
[illegible] यामि [illegible] लोकंदृश्यकरोमि । उसवनेहिरण्यगर्भोदिन्हयमन्त्रेणानस्यन्दत्वात्रैलोक्यपतिः त्रैलोक्याधारः पुरुषोत्तमोगर्भेआहितः एवंस्त्रिभिः
[illegible] णीत्रैलोक्यामपीवर्तते । तथासतिभूरादिलोकत्रयमसंकीर्णःभवत्वेभिःत्रिभिःमन्त्रैः । केशानांदृश्यकरणंक्रियतेसीमन्तोन्नयनेशुष्क
करूतैः केशैर्वेणींबध्नात्यनेनमन्त्रेण ॥ ॐ आयमूर्जावतोवृक्षऊर्जीवफलिनीभव । अस्यार्थः हेगर्भिणि अयंवृक्षः ऊर्जावतः ऊर्जावलंतद्वान्
तयोगात ऊर्जीवतहवावउदुम्बीवयथा । फलिनीफलयुक्तातथात्वमपिफलिनीपुत्रिणीभवअत्रप्रथमपदेनउक्तवस्तुतिः द्वितीयपदेनगर्भिण्यः
पुत्रिणीत्वम् । आस्यतेऊर्जीवतइतिसुपांसुलुकोभवन्तीतिविभक्तिव्यत्ययेनप्रथमवचनस्थानेद्वितीयाबहुवचनम् । वीणाकाराभ्यांवाजनिर्गाय-
मानेयजमानःअयमेताङ्गायति । ॐ सोमएवनोराजेवमानुषीःप्रजाः अविमुक्तचक्राआसीरंस्तीरेतुभ्यमसौअमुकनदितुभ्यंतवतीरेप्र-
जाः आसीरन्तिष्ठन्तिकिंभूताःप्रजाःमानुषीःमानुष्यः पुनःकिंभूताःअविमुक्तचक्राः अविमुक्तंअविरक्तंचक्रंमण्डलंयाभिःअविमुक्तचक्राः ।
इमाःप्रजानांराजाइवराजायथारक्षकःपोष्टाचएवंनोस्माकंसोमश्चन्द्रोरक्षकःपोष्टाभवत्विस्याशासावाक्यार्थः । एतेनेवमानुषीरितिसुपांसुलुगि-
तिप्रथमबहुवचनेद्वितीयाबहुवचनंतुभ्यमितिषष्ठ्यर्थेचतुर्थीअसावितिसंबोधनान्तस्थितनदीनामोपलक्षणम् ॥ इतिसीमन्तोन्नयनम् । अथ-
सोष्यन्तीकर्म । तत्रपारस्करः । सोष्यन्तीमद्भिरभ्युक्षत्येजतुदशमास्यइति अत्रप्रायप्रसूलवेदनांगर्भिणींसुखप्रसवार्थम् जलेनाभ्युक्षयत्यनेनमन्त्रे-
ण । ॐ एजतुदशमास्योगर्भोजरायुणासहयथायंवायुरेजतियथासमुद्रएजत्एवायंदशमास्योअस्रज्जरायुणासह । अस्यार्थः । दशमास्यः दशमासा-
[illegible] नः संपूर्णप्रसवकालीनइतियावत्गर्भःप्रसिद्धार्थः । एजतुकम्पतांनकेवलंगर्भःजरायुणासहजरायुर्गर्भवेष्टनंआवरणादीतियस्यप्रसि-

द्भिः यथा वायुरेजति कम्पते यथा समुद्र एजति कम्पते एवं यथायं गर्भः दशमास्यः संपूर्णकालीनः जरायुणा सह अस्रत् अधःपाती भवतु अत्र अस्रदि
ति स्रंसु अधः पतने अस्माद्धातो राशं सायां लिङ् प्रथम पुरुषैकवचनं छन्दस्यपि दृश्यत इत्सउ आगमः आगमशासनस्यानित्यत्वाद्वा यासुडागमो न भवति
किदाशिषीति लिङ् कित्वादिति दिता मिति सूत्रेणानुनासिकलोपः स्कोः संयोगाद्योरन्ते चेति सकारलोपः इति सोष्यन्तीकर्म ॥ पारस्करः । अथ वाप
तनं अवैतु पृश्निरित्यादि । अपत्यप्रसवे भूते अथवा पतनार्थं इमं मन्त्रं जपति ॥ अवैतु पृश्निः शेवलं शुने जरायु चत्तवे नेव मांसेन पीवरं कस्मिंश्चनाय
तनमवजरायु पद्यतां अस्यार्थः जरायु अवैतु किमिव पृश्निः शेवलं एतयोः कृषादानं दृष्टान्तार्थम् । एतेनैतदुक्तं भवति यथा पृश्निः पङ्क्तिः शेवलं प्रसिद्धामे
व मन्ये न क्वचिदपि असंलग्नं जलोपरि स्थितं सद् दुःखभावादिभेरणो नाप्ययं गच्छति । यथा जरायुः सुखेनापगच्छतु कथंकारं न शुने अनुवेसुनोदनाय
शानभवतीत्यर्थः । किंभूतं जरायु मांसेन पीवरी उष्टं किंच जरायु कस्मिंश्च पद्यतां कुत्राप्य दवावयवे अपस्त्रं विलग्नं न भवतु किंभूतं आमन्नमहत् उदरे अ
संलग्नं जरायु सुखेन पतत्विति वाक्यार्थः । अत्र शुन इति षष्ठ्यर्थे चतुर्थी च तवे इति अस्भ स्याणे इत्यत्र तुमर्थे शेसेसे नित्यादिना सूत्रेण तवेड् प्रत्ययः कृते
रूपम् । पीवरीति लिङ् व्यत्ययेन स्त्रीत्वम् । इत्यपवातनम् । अथ जातकर्म · तत्र हारीतः वोतावतन गर्भोण्यातः पञ्चगुणः जातकर्मणा प्रथमं मयो हति
तथा गर्भाधानाद्यष्टसंस्काराणां प्रत्येकं क्रमलमभिधाय हारीत एवं उन सह एतैरष्टभिर्गर्भसंस्कारैर्गर्भोणघातात्पूतो भवति तथा जातकर्मणि पार
स्करः जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननार्थमस्य करोति तथानामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा भूरस्त्वयि दधामि भु 
त्यादि । तत्र कुमारस्य मेधाजननार्थं मधुघृतं प्राशयतीति चतुर्भिर्मन्त्रैः ॐ भूयस्त्वयि दधामि भूर्लोकं त्वयि । दधामि ॐ भुवस्त्वयि दधामि भुवर्लोकं अ 
न्तरिक्षं त्वयि । दधामि अर्चयामि ॐ स्वस्त्वयि दधामि स्वर्लोकं तेदधामि ॐ भूर्भुवः स्वः सर्वं त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि एवं लोकत्रयोपलक्षित

मेतद्वाग्निर्तत्सर्वप्रमेयजातंन्त्वयिदधामि दधामीतिसर्वत्रैवसमानम् त्रैलोक्यगतप्रमेयजातधारणंतवमेधाभवत्विति वाक्यार्थः। पुनःपारस्करः दर्शि
तकर्णजपति आयुषा नित्यादि आयुषमिति कुमारस्यदीर्घायुष्ट्वार्थमेतन्मन्त्रद्वयम् ॐ अग्निरायुष्मान्स वनस्पतीभिरायुष्मान्स्तेन त्वा आयुषा आयुष्म
न्तंकरोमि सोम आयुष्मान्सोषधीभिरायुष्मान् तेन त्वा आयुषा आयुष्मन्तंकरोमि ब्रह्म आयुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वायुषा आयुष्मन्तं करोमि दे-
वा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वा आयुषा आयुष्मन्तं करोमि ओषधय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वा आयुषा आयुष्मन्तं करोमि पितर आ
युष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वा आयुषा आयुष्मन्तं करोमि यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मान्स्तेन त्वा आयुषा आयुष्मन्तं करोमि यज्ञमायु
ष्मान्स दक्षिणाभिरायुष्मान्स्तेन त्वा आयुषा आयुष्मन्तं करोमि समुद्र आयुष्मान्स स्रवन्तीभिरायुष्मान्तेन त्वा आयुषा आयुष्मन्तं करोमि अस्यार्थः
योयमग्निरायुष्मान् चिरस्थायी स वनस्पतीति वृक्षैस्पर्द्धितया आश्रयत्वमुपगते वायुष्मान् तेनाग्निसंबन्धिना आयुषा त्वा त्वा आयुष्मन्तं करोमि-
सोमश्चन्द्रः ओषधीति ब्रह्मादिभि अमावास्यायाः क्षीणश्चन्द्रमा ओषधीषुप्रविष्टो भवति ततः शुक्लपक्षे ताभिराप्याय्यमानक्रमेण वृद्धिमासादयन्
आयुष्मान्भवति ब्रह्मदेवः ब्राह्मणैः प्रसिद्धैः ब्राह्मणैर्हि शिष्योपाध्यायक्रमेण धार्यमाणो वेद आयुष्मान्भवति देवा अमृतेरिति च प्रसिद्धार्थं देवाः
नांहि अमृतं प्राप्यामरत्वं ऋषयो मरीच्यादयः व्रतैश्चान्द्रायणप्रभृतिभिः ऋषीणां हि तापसैव दीर्घायुष्ट्वं पितरः अग्निष्वात्तादयः स्वधाभिः पितृणाम
न्नैः यज्ञैः सदक्षिणाभिरिति च प्रसिद्धार्थं समुद्रः प्रसिद्धः स्रवन्तीभिर्नदीभिः अपरञ्च सर्वं समानमेव वनस्पतीति अन्येषामपि दृश्यते इति दीर्घत्वम्
॥कश्यपस्य त्र्यायुषमिति अस्यार्थः। त्रीणि आयूंषि समाहृतानि आयुषं आयुःशब्दश्चावस्थावचनः। बाल्ययौवनवार्द्धकात्मकमवस्थात्रयमित्यर्थः
कश्यपऋषेस्त्र्यायुषं यज्जमदग्नेः यत् त्र्यायुषं देवानां ब्रह्मादीनां यत् आयुषं मे ममास्तु भवतु। अत्र यद्यपि कर्णगोचरा आशीः सा पक्ष्यते तथापि कुमारगो

चैरैरेवबृहत्या पया श्रुतिः यांवैकं वितयृत्तकस्त्विज आ शिषमाशासते यजमानस्यैवसेति। पुनः। पारस्करः सपदिकामयेत्सर्वमायुरियात्। वासोमाल्लन
मभिमृशेद्दिवस्परीत्येतस्यानुवाकास्योत्तमम्‌चंपरिशिनष्टि तत्रकुमारस्यसंस्पर्शयेयुः आमिकामनयाकुमारस्यहृदयंस्पृष्ट्वा एतान्एकादशमन्त्रान्
जपति एवैषाच्चरतस्यप्रिपकृषिरग्निर्देवता त्रिष्टुप्छन्दः चपनेऽस्युपस्थाने विनियोगः मन्त्रोपथा ॐ दिवस्परिप्रथमंजज्ञेअग्निरस्माद्द्वितीयंपरि-
जातवेदाः तृतीयमप्सुनृमणाअजस्रमिंद्धानःएनज्जातेस्वाधीः अस्यार्थः। अग्निर्दिवस्परि आकाशमधिकृत्यजन्नजातवान् जातवेदाअग्निरेवअस्म
त्परि अस्मत्सरणंपुरुषरूपंविष्णुमधिकृत्यद्वितीयंजज्ञेअप्सुजलेषुतृतीयंजज्ञेनृमनाः नृषुमनुष्येषुमनोत्स्येतिनृमनाः प्रजापतिः एवंअग्निरिंधानंदीपय
न्अजस्रंपुनःपुनःजरान्जरयति किंभूतःप्रजापतिःस्वाधीः सुशोभनंआहितं। धीर्बुद्धिर्यस्यसस्वाधीःप्रजापतिः ॐ विद्यातेअग्नेत्रेधात्रयाणिविद्याते-
धामविभृतापुरुत्रा विद्यातेनामपरमंगुहायद्विद्यातेमुतस्संयतउआजगत्थ। अस्यार्थः। हेअग्नितेतवत्रेधात्रिःप्रकारंत्रयाणिअग्निवायुःसूर्याख्या
निविद्मः जानीमः। किंचतेधामस्थानानिआहवनीयगार्हपत्यदक्षिणाग्निरूपाणिविद्मः किंभूतानिविभृतानिविशेषेणभृतानिआधारभृतानिअपिकिं
भृतानिअपिकिंभूतानिपुरुत्रापुरुतानिपुरुतत्र पवेइतिपुरुत्रन्तानिपुरुवाणिजगद्रूपाकारकाणिइत्यर्थः इतिचेतेनामविद्मः किंभूतंपरमंउत्तमंत
केवलमुत्तममपियद्गुहायास्तवस्थितंगुह्यमिति। अपिचअतःसकाशात्आजगन्थआगतोसित्वणउत्संप्रयकजन्नविद्मः अत्रविद्मानइतिआकार
पदेनधामइतिबहुवचनेएकवचनविभृतानिपुरुत्राणिइत्यत्रनिलोपः छन्दसः गुहाइतिसप्तम्यांप्रथमाआजगन्थनिगमोल्लगतावितस्माद्वातोः लिट्
मध्यमपुरुषैकवचनेलटुपदेशात् तथाइतिइट्निषेधः हेअग्नेतवरूपस्थाननामउतपंकारकाणिवयंजानीमइतिवाक्यार्थः। ॐ समुद्रेत्वानृमणाअ
प्स्वन्तर्नृचक्षाईधेदिवोअग्निर्ईधन्तृतीयेउरजसातिसमयातस्थिवांसं ह्रिषाअवर्धयन्। अस्यार्थः। हेअग्नेत्वात्वानृमनाप्रजापतिः ईधेदीपयत्

काम् किंभूतन्त्वां समुद्रे अप्सु जलेषु अन्तर्मध्ये वा उर्वाग्निरूपेणावस्थितं नृमणः किंभूतः नृचक्षाः नृषु मनुष्येषु चक्षुः रस्येति नृचक्षाः किंभूतन्त्वां दिवः
स्वर्गस्य ऊधन् ऊधसि आपीनस्थानीये स्थाने आदित्येन स्थितं आदित्यो हि पृथिवीगतं रसं रश्मिभिरादाय पुनर्वर्षासु सृजति एतावता अत्र
स्वर्गप्रदेशे आदित्यस्थितिः इति तत्स्थानं स्वर्गस्य ऊधः ऊधः शब्देनाभिहितं एवं तृतीये रजसि भूमिराकाशं स्वर्ग इति गणनाक्रमेण तृतीयः स्वर्गो
भवति तृतीयलोके अपाम् उपस्थे जलानां उपस्थे उत्सङ्गे तस्थिवांसं स्थितं त्वां महिषाः प्राणा वा अवर्णयन् वर्णयांचक्रुः अत्र ऊधन् इति ऊधः
शब्दात् सप्तम्येकवचनं तस्य सुपां सुलुगिति लुग्व्यत्ययो बहुलमितीकारस्य नकारः महिषाः प्राणा वै महिषा इति श्रुतिप्रमाणं समुद्रे वा उर्वाग्नित
या स्वर्गे आदित्यतया स्थितं त्वाम् अग्निं वायवो वर्णयन्तीति अग्निस्तुतिर्वाक्यार्थः ॥ ॐ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्ज-
न् सद्यो जज्ञानो वि हि ईमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ अस्यार्थः ॥ अग्निः अक्रन्दत् शब्दं करोति किंच क्षामा क्षमां पृथिवीं वीरुधः लेढि
आस्वादयतीत्यर्थः । रलयोरैकत्वस्मरणात् लकारस्य स्थाने रेफः पठ्यते । किं कुर्वन् वीरुधः ओषधीः समञ्जन् आप्नुवन् अपि च ईदृशः स्तनयन् स
न् अयस्तनयित्वा पतति किंभूतः सद्यो जज्ञानः तात्कालिकजातः जायमानः हि शब्दः हृस्वदीपदे पूरणार्थो । किंचेद्धः दीप्तः द्यावापृथिव्यौ अन्तर्म
ध्ये द्यावापृथिव्योर्मध्ये इत्यर्थः । भानुना रश्मिना आभाति करस्य द्यौरिव अत्र मन्त्रे चः को पन्ती निवत् द्यौ शब्देन मेघ उच्यते एवमुक्तं भवति य
था मेघः स्तनयन् शब्दं कुर्वन् पृथिवीं वृष्ट्युदकेन लिहति ओषधीः व्याप्नोति भानुना विद्युद्रूपेण प्रकाशयति । ॐ श्रीणामुदारो धरुणो रयीणां मनी-
षाणां प्रार्पणः सोमगोपाः वसुः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः अस्यार्थः । वसुरग्निर्विभाति प्रकाशते उषसां उषसि प्रत्यूषस
मये अग्रे प्रथमं ईधानः दीप्यमानः प्रत्यूषसमये हि अग्नीनामारोहणं क्रियते पुनः किंभूतः अग्निः श्रीणां लक्ष्मीणामुदारः आधाता रयीणां

ऋ॰ भा॰ वनानांन्धस्त्र्याधारयितामनीयाणांमनोभिलषितानांप्रापंणः प्रापयितापनमिच्छेदुताशनादित्यभिप्रायमेतत् सोमोगोपीः सोमं चन्द्रंगोपा
६९ यतिरक्षतिगुपरक्षणेइत्यस्मात् गोमोपपदात् सर्वधातुभ्योऽसुनइत्यसुन् इत्यसुन् प्रत्ययः सहसः बलस्यसत्रुः पुत्रः बलवतामध्यमानस्त्वेइत्यर्थ
तेअप्सुजलेषुराजावरुणःसर्वमेवर्श्मीणामुदारः इत्या। देवशुरित्यस्यविशेषणम्॥ ॐ विश्वस्यकेतुर्भुवनस्यगर्भआरोदसीअपृणाज्जायमानः
वीडुंचिदद्रिमभिनत्परायन् जनायदग्निमयजन्तपञ्च। अस्यार्थः। यत् पञ्च अग्निं पञ्च चत्वारोब्राह्मणादयः निषादाश्चसङ्कीर्णजातिश्च-
तिपञ्चजनामनुष्याः अयजन्तपूजितवन्तः सोग्निर्विश्वस्यसर्वेषाणिजातस्यकेतुःज्ञातासर्वज्ञइत्यर्थः। भुवनस्यभुवनवर्त्तिनोभूतजातस्यगर्भअन्त
र्वर्तीप्राणात्मिनाऽधुवतयाआइतिउपसर्गोऽपृणादित्यनेनसंबध्यतेकिंभूतौअग्निरोदसीआपृणात्द्यावापृथिव्योपूरितवानित्यर्थः। आदित्यत-
यानाजायमानस्त्वोत्पद्यमानः किंचअद्रिंपर्वतअभिनत्विदारितवान् किंच भूतंवीडुंचित शब्दोप्यर्थेचितमपीत्यर्थः। कुर्वन्परायन्परागच्छन्
तत्रपर्वतेअपतत्विदितयावत् एतेनाग्निरेवइन्द्रइत्युक्तम्भवति॰ केतुरितिकितज्ञानेइत्यस्माद्धातोरौणादिकतुप्रत्ययः॥ ॐ उशिक्पावकोअरतिः
सुमेधामर्त्येष्वग्निरमृतोनिधायि। इयर्त्तिधूमरुषंभरिभ्रदुच्छुक्रेणशोचिषाद्यामिनक्षन्। अस्यार्थः। अग्निर्मर्त्येषुमनुष्येषुनिधायिनिहितः किंभू
तः उशिक्कांतःमनोहरःपावकःपवित्रताकारीःअरतिःअलंमतिःपर्याप्तेरित्यर्थः। सुमेधाःसाधुप्रज्ञःअमृतःअमरणधर्म्मायतएवंभूतोऽग्निः
सधूममण्डलइयर्त्तिउर्द्ध्वंगमयतिउदितिमवहितमत्रसम्बन्धः किंभूतःधूमरूषंअरोचनंरूपवदित्यर्थः। किंकुर्वन्अग्निःभरिभ्रत्जगद्धारयन्अ
पिशोचिषारश्मिनाद्यांआकाशंइनक्षन्व्याप्नुवन् किंभूतेनशोचिषाशुक्रेणशुक्लवर्णेनअत्रउशिकइतिवशकान्तावित्यस्माद्धातोरौणादिकं राम
ऽप्रत्ययः अरतिअलंमतिरित्यस्यव्यत्ययोबहुलमितिवचनात् अत्रअलमकारस्यलोपः वलयोरैक्यस्मरणात् भरिभ्रदितिडुभृञ्धारणेइत्यस्य ६९

सम्यादिसवेण निपातनाद्रूपम् ॥ ॐ दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः ॥ श्रियेरुचानोऽग्निरमृतोऽभवद्वयोभिर्यदेनंद्यौरजनयत्सुरेताः ॥ अ
स्यार्थः । अग्निर्व्यद्यौत् विद्योतनेनकपाउर्व्या महतादीप्त्या इत्यर्थः । किंभूतः दृशानः प्रत्यक्षतो दृश्यमानः रुक्मरोचनरूपत्वा दित्यर्थः नकेवलं विद्योत
ते । किंच यस्य अग्नेः आयुः जीवनं दुर्मर्षं दुःखेन मृष्यते खण्डयितुं शक्यते इति यावत् सोऽग्निरमृतोऽमरणधर्माभवत् भूतः किंकुर्वन् रुचानः हर्षय
न् किमर्थं श्रियेलक्ष्म्यै । लक्ष्मींदातुमिच्छन्नित्यर्थः । किंच यदेनं अपरोक्ष निर्देशो आदित्यं द्यौः प्रकाश अजनयत् जनितवती किंभूता सुरेताः शोभ
नंरेतो यस्याः शोभनत्वंचरेतसः एतदेवयत्त्वेन विश्वस्य द्योतनकारी आदित्यो जनितः कैरजनयत् वयोभिः अन्नैः पशुपुरोडाशप्रभृतिभिः यद्वा द
सोहि अग्नौ हुता आदित्यादय भावं भजन्त इभिप्रायः ईशान इति इशिधातोः कर्म्मणि लिट् शानच् छन्दस्युभयथेति शानच आर्धधातुकत्वात्सुक्न भ
वति व्यद्यौदिति द्युतधातोर्विपूर्वात् विदिम्भतीति क्विप छन्दस्यपि दृश्यते इत्यडागमः अदिव शब्दात्प्रथमैकवचने भवत्वादित्विकारस्यैकारः ॥ ॐ
यस्तेऽद्य कृणवद्भद्रशोचेऽपूपंदेव घृतवन्तमग्ने । प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥ अस्यार्थः हे भद्रशोचे कल्याणरश्मे देव देवना
दियुक्त अग्ने यो यो यजमानः तेन व अद्य इदानीं अपूपं पुरोडाशवत करोति । किंभूतं घृतवन्तं घृतेनोपस्तीर्णाभिघारितं तं यजमानं वस्यः वसीयसितं स्थानं
प्रणय प्रणय सि सिलोपः छान्दसः किंभूतं वस्यं प्रतरं प्रकर्षेण तीर्य गम्यते प्रतरं प्रकर्षार्थश्च अग्निप्रसादेन प्राप्यतं अपि किंभूतं अच्छ अच्छं निर्मलत्व
च्छं निर्मलं निष्पापमित्यर्थः । किंच हे यविष्ठ युवतम तं यजमानं सुम्नं सुखं नय सुखाभिमुखं प्रापयेत्यर्थः । किंभूतं सुखं देवभक्तं देवैः फजितम् । हे अग्ने
यजमानः तव पुरोडाशाउकरोति तं यजमानं देवोपभाग्यं सुखाभिमुखं कृत्वदीपप्रसादप्राप्यं सुखं स्वर्गं प्रापयेति प्रार्थना वाक्यार्थः । अकृणवदिति कृवि-
हिंसाकरणयोरित्यस्य धातोरिकारलोपः तु लि तुंग्वट् स्तिपइत् श्वलोपः परस्मैपदे ष्विति इकारलोपः धिन्वि कृण्व्योरचेति मध्ये उकारप्रत्ययः धातोर्वकार

स्वचारः त्सेटोऽडाविस आगमः उकारस्य गुणः अवादेशः वस्य इति वस धातो रूपम् आवस्य दन्यस्स्यामितिव्यवस्थि न विभाषया केवलस्यापि धातोर्वस्य वा
रूपं विभक्तिव्यत्ययेन द्वितीयैकवचने प्रथमैकवचनं अनुस्वारलोपः छान्दसः ॥ ॐ आतम्भज सौश्रवसेष्वग्न उक्थ उक्थ आ भज शस्यमाने। प्रियः सूर्ये
प्रियोऽग्ना भवात्युज्जातेन भिनददुज्जनित्वैः अस्यार्थः। हे अग्ने तं यजमानं आ भजनस्य सन्निहितो भव त्वयि सन्निहिते किं स्यादित्यपेक्षायामाह यस्य
यजमानस्य उक्थ उक्थ स्तोत्रे स्तोत्रे शस्यमाने सौश्रवसेषु सुष्ठु साधु श्रवणीयेषु भजसि आसेवने सहितो भवसीत्यर्थः। असौ यजमानः सूर्ये सूर्य-
स्य प्रियः उद्भवाति उत्पद्यते अग्नाः आग्नः प्रिय उद्भवाति न केवलं अपि सुजातेन पुत्रेण जनित्वैः जनिष्यमाणैः पुत्रपौत्रादिभिः उदभिनदुत्ऽद्भिन
त्ति धर्मार्थिकामान् यस्य पुत्रादयोऽपि धर्मकामयुक्ता भवन्तीत्यभिप्रायः अत्र सूर्ये इति सुपां सुपो भवन्तीति षष्ठ्येकवचने सप्तम्येकवचनं अग्ना इति
षष्ठ्येकवचने सुलुगादिवाक्येन विभक्तिलोपः वर्णव्यत्ययेन इकारस्याकारः उद्भिनददिति भिदिर विदारणे लेट् इतश्च लोपः लेटोऽडा विसा आगमः
जनित्वैरिति जनी प्रादुर्भावे इत्यस्मात् कृत्यार्थे तवैन केन्य त्वन इति त्वन प्रत्ययः इति तृतीया बहुवचनम् ॥ ॐ त्वामग्ने यजमाना अनु द्युन् विश्वा वसु दधिरे
वार्याणि त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुः। अस्यार्थः। हे अग्ने त्वां यजमानाः विश्वा विश्वानि सर्वाणि गोभूहिरण्यवस्त्रा
दीनि सुवसूनि धनानि दधिरे दध्यादीनि किम्भूतानि वार्याणि वरणीयानि प्रार्थनीयानि कथं यजमानाः अनु द्युन् अन्वादिवसान् प्रत्यहमित्यर्थः किं
किञ्च त्वया सहयुक्ताः समग्रं द्रविणं यज्ञफलं मोक्षरूपं इच्छमानाः कामयमानाः व्रजं वर्त्म व्रज्यते अनेनेति व्रजं ॥ किम्भूतं गोमन्तं रश्मिमन्तं आदित्य
मित्यर्थः। किम्भूता यजमानाः उशिजः मेधाविनः ज्ञानिनः तेनैतदुक्तम्भवति त्वां यजमानाः यदा धानादिकमिच्छन्ति तदा ज्ञानिनो भूत्वा ज्ञानकर्मसमु
च्चयेनादित्यलोकं मोक्षं प्राप्नुवन्तीति। पुनः पारस्करः प्रतिदिनं पञ्च ब्राह्मणान् अवस्थाप्य बृप्यादि ममनु प्राशितमिति ततः कुमारस्य अनुप्रा-

शानांपूर्वादिचतुर्दिक्षुमध्येचपञ्चब्राह्मणान्स्थापयित्वातेषांप्रेषणाक्रियतेअनेनमन्त्रेणइममनुप्राशितंअत्राहविप्राइत्यध्याहार्य इममकु-
मारंअनुप्राशितमित्यर्थः।पुनः।पारस्करः पूर्वोब्रूयात्ब्राह्मणः प्राणव्यानेतिदक्षिणोअपानेतिउत्तरोउदानेतिउपविष्टात् देयेसमानेब्रूयात्से-
मानेति ततश्चते पञ्चब्राह्मणाः कुमारस्यानुप्राशनंकुर्वन्तिएभिः पञ्चभिर्मन्त्रैः प्राणव्यान अपानउदानसमान एतानिपञ्चसंबोधनानिप-
दानिपदानिअनेनसम्बोधनेनप्राणापञ्चवायवः आस्मभूताः अस्मिन्सम्बोधने स्थिरतरोभवेदित्यभिप्रायः।पुनः पारस्करः समये स्मिन्दे-
शेपतानुनाभिमन्त्रयतेदेवतेइत्यादि।अमावस्यजन्मस्थानमभिमन्त्रयतेअनेना ॐ वेदस्तेहृदयंदिविचन्द्रमसिश्रितम्।वेदाहंतन्मांविद्यात्
पश्येमशरदःशतंजीवेमशरदः शतंशृणुयामशरदःशतम्।अस्यार्थः।हेभूमितेतवहृदयंवेदजानामिकिम्भूतंचन्द्रमसिश्रितं।सम्ब-
न्धंकुत्रदिविआकाशेहृदयंअहंवेदतन्मांविद्यात् मामपितज्जानातुइत्यर्थः।पश्येमशरदः शतमितिमन्त्रार्थव्याख्यातञ्चगर्भाधाने।पुनःपा-
रस्करः।अथैनमभिमुखयतिअश्माभवेत्यादिकुमारमभिमुख्यइममन्त्रंजपति ॐ अश्माभवपरशुर्भवहिरण्यमस्रुतंभव।आत्मावैपुत्रना-
मासिसजीवशरदःशतम्।अस्यार्थः।हेकुमारइतिसम्बोधनमध्याहार्य्यंत्वंअश्माभवप्रस्तरमिवदृढाङ्गोभवपरशुःकुठारइवविरोधिनांछे-
दकोभवकिञ्चहिरण्यंअस्रुतंयथासुवर्णंअसुवर्णंअश्रुतंअसारंतथात्वमभिभवकिञ्चत्वममआत्मासिकिम्भूतंपुत्रनामामदीयात्मनासह
तवपुत्रनामत्वमितिविशेषः।अपरञ्चसर्वंमयासहतवतुल्यमेवेत्यभिप्रायः।किञ्चशरदःशतंवर्षाणिजीववाक्यार्थः।स्फुटएव।ततःपार-
स्करः॥अथास्यदक्षिणंस्तनंप्रयच्छतिइमंस्तनमित्यादि।ततःकुमारंमातुर्दक्षिणंस्तनंपाययेदनेनमन्त्रेण।तत्रपरामर्शीऋषिर-
ग्निर्देवतात्रिष्टुप्छन्दःयजनेयजमानवाचनेविनियोगः।ॐ इमंस्तनमूर्जस्वन्तंधयापांप्रपीनमग्नेःशरीरस्यमध्येउतसन्तुस्वमधु

ब्रां.स मन्तर्वाउँ समुद्रियं सदनमाविश्व । अस्यार्थः । हे अग्ने त्वं इमं अपरोक्षमिमं स्तनं धय पिव किम्भूतं मूर्जस्वन्तं प्राणहेतुभूतं अपां अप्शब्देन दुग्धमुच्यते
७२ सारवद्रस्यात् प्रपीनं प्रवृद्धं कुत्र इत्याकाङ्क्षायां शरीरस्य मध्ये अन्तसस्रवन्तं ईमं जूषस्व किम्भूतं मधुमन्तमर्वन्हे अश्वाभाग उत सर्वं देहगत समुद्रियं
समुद्रस्य सम्बोधनं सदनं आविश प्रविश प्रविश त्वं एतेनैतदुक्तं भवति । यथा समुद्रस्थो वाडवाग्निः सर्वाम्बु जरयति तथा भवानपि यथाशास्त महार्यज
रयति । पुनः पारस्करः । यस्ते स्तनमित्युत्तरमेताभ्यां तवो बालकुमाराय ददेत्यनेन तत्र ईमं स्तनमित्यादिभ्यामृग्भ्यां दीर्घतमा ऋषिर्गोतमाद्यः त्रिष्टुप्
छन्दः । पुनः पारस्करः ॥ उदपात्रं शिवस्वो निदधात्यापो देवेष्विसादि ॥ ततः सूतिकाशय्याशिरःस्थाने सूतिकारक्षार्थं जलकुम्भं स्थापयेदनेन ॥ ॐ
आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ एवमस्यां सूतिकायां सपुत्रिकायां जाग्रथ ॥ अस्यार्थः । हे आपः यूयं देवेषु जागृथ देवानां रक्षायां निद्रां मुञ्चथ
यथा यूयं देवेषु जागृथ एवं तथा अस्यां सूतिकायां जागृथ किम्भूतायां सपुत्रिकायां पुत्रसहितायाम् । हे आपः यूयं देवेषु जागृथेति । अपांस्वपस्
त्कले अस्याः सपुत्रायाः रक्षार्थं जागृथे निप्रार्थनावाक्यार्थः ॥ अथ सूतिकागारे होमः ॥ अत्र पारस्करः ॥ द्वारदेशे सूतिकाग्निमुपसमाधायोत्थान
संधिवेलयोः फलीकरणमिश्रान् सर्षपान् तस्मिन्नावपति । षण्डामर्का इत्यादि कुमाररक्षार्थं तण्डुलकरणमिश्रसर्षपाहुतिद्वयं जुहोत्यनेन मन्त्रद्व
येन । ॐ षण्डामर्का उपवीरः शौण्डिकेय उलूखलो मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा ॥ अस्यार्थः ॥ षण्डाषण्डाभिधानो दानवग्रहः इव
आहतेनैश्यतान् नष्टो भवतु एवं मर्कादयश्च्यवनान्ताः सप्तदानवग्रहाश्च षण्डादिक्रियापदम् । अष्टभिः लिङ्गसह प्रत्येकं संबध्यते । अनया आहुत्या षण्डा
दयो दानवग्रहान् नश्यन्त्विति वाक्यार्थः । ॐ आलिखन्ननिमिषन् किंवदन्त उपश्रुतिः हर्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणः । रा॥
श्यवनो नश्यतादितः स्वाहा ॥ अस्यार्थः ॥ तःसतम् । यत्ते देवा वरमदुः स त्वं कुमारमेव वा वृणीथाः ५ वच्चेक्कुस्सजनतापस्त्वे असुक्षीरे रोलपे आलिखन्वि ७२

[illegible]स्याबालग्रहाः अत्रापिनमस्यवादितिक्रियापदं [illegible] रश्मिभिरेवसवध्यतत् [illegible] तकाग [illegible] महत्या
नितिस्त्रीनीमभिलिख्यते ।तत्रपारस्करः ॥यदिकुमारमुपद्रवतितदजालेनोत्तरीयेणवाआच्छाद्यपिताअङ्के आधायजपति ।कूर्कुरइति ।इत्यादिना-
भन्तरेकुमारस्यबालग्रहोपद्रवंदृष्ट्वाकुमारंजालेनउत्तरीयेणवाआच्छाद्यक्रोडेकृत्वाइमंमन्त्रंजपति ॐ कूर्कुरः सुकूर्कुरः कूर्कुरोबालबन्धनश्चेच्चे-
च्छुनकसृजनमस्तेस्तुसीसरोलपेतापह्वर‍ः ॥अस्यार्थः कूर्कुरादीनित्रीणिनामानिबालंकुमारंबध्नाति ।बालबन्धनःकुमारग्रहः बालबन्धनइतिवि-
भिरेवकूर्कुरादिभिः सहप्रत्येकंसम्बध्यतेचेदितिवीप्सादर्शनात् तेनकूर्कुरश्चेद्बालबधनः एतेषांमध्येयदिकश्चिद्बालबन्धोस्तितदाहेशुनक
तेनवनमोस्तुतंसृजकुमारंत्यजेत्यर्थः ।हेशुनकइतिकूर्कुरादीनांत्रयाणामेवसाधारणमेकंसम्बोधनपदं किंचसीसरः तेषांपितालपेद्विति । किं
वदतिअपह्वरः । अपगतकौटिल्योभव ॥कूर्कुरादिनामेकबालग्रहमध्येयदितदगोस्तितदायंमदीयनमस्कारेणहृतिनः पितुःसीसरस्यवचसाएनंकु
मारंत्यजत्विति प्रार्थनावाक्यार्थः ।तत्सूचयतेदेवाइत्यादेरयमर्थः हेशुनकयत्तेदेवाब्राह्मणादयोवरप्रार्थितेअदः दत्तवन्तःसंपर्योकरूपः त्वंकुमारं
बालमेववरंवृणीथाः ।हतवानसितत्श्चेदितिवीप्सायांअत्रापियतेसरमानासीसरः पिताश्यामशवलौभ्रातरौचेच्चेच्छुनकसजनमस्तेअस्तुसीसरो
लपेतापह्वरेत्यभिमृशति ॥३॥ पितृदैवैर्वरदानंत्वयाचवरत्वेनकुमारस्यवरप्रार्थनंइत्युभयेनवतसत्यंइत्यस्यसम्बन्धोविवक्षितः यद्यपितदुभयंसत्यं
तथापितेनमोस्तुत्यजसीतियद्यपित्वयादेवेभ्यःकुमारस्त्वेनप्रार्थितः तैश्चदत्तः तथापिममनमस्कारेणतुष्टः पितृवाक्यनैनंत्यजेतिप्रार्थनावाक्यार्थः
तत्सत्यंयत्तेसमेत्यादि ।अयमर्थः ।हेशुनकयत्तेतयसरमाशुनीमानासीसराः पिताश्यामशवलौभ्रातरौतवश्चेत्सत्यंअत्रापिवीप्सायांप्रयोजनंतद्दे
वतथापिनमोस्तु ।सीसरोलपेतापह्वरेतिपूर्ववत्त्वदेवतवमातासरमासीसरः पिताभ्रातरौश्यामशवलौएतत्सत्यमेवतथापिममनमस्कारेणतमेनं

ब्रा॰स॰ कुमारस्त्वजेतिवाक्यार्थः। दुङ अपनयने इत्यस्य धातोरपपूर्वस्य ...रिरूपम्॥ ॐ ननामयतिनरुदतिनहृष्यतियत्रवयंवदामो यत्रचाभिमृषामसि॥ यत्रकुमारेवयंवदामः किंवदामः वस्यामीत्याकाउ...त्याच्चवोद्दव्यम्। यत्रचाभिमृषामसि अभिसर्वतोभावेनयस्यदर्शनंकुर्मः कुमारःनना
७२ मयतिअङ्गानामलङ्कारोनिकुञ्चादिर्निभवतीत्यर्थः। नरुदतिरोदनपीडाप्रकाशंभवतीनहृष्यतिकर्षपीडांयुक्तोनभवति। इतिबालग्रहोपद्रवशान्तिः
नामकर्मणिवैदिकमन्त्रैरनुष्ठानंपारस्करेणनोपदर्शितंअतोस्माभिरपितद्दीयव्याख्यानंकृतमितिसमासंजातकर्म। अथनिष्क्रमणं। तत्रनिष्क्रम
णे विशेषफलस्याश्रवणात्। याज्ञवल्क्योक्तवीजगर्भसमुत्पन्नपापक्षयएवफलंवोद्धव्यम्॥ अथगर्भाधानादिसंस्कारानभिधाययाज्ञवल्क्यः स्व
मेनःक्षयंयातिवीजगर्भसमुद्भवम्। तत्रकुमारंसूर्यंदर्शयत्यनेन। ॐ तच्चक्षुर्देवहितमिति। अस्यार्थः। इतोहृगङ्गुःकुमारस्तादित्यकाया: प्रकृतत्वा
तदित्यनेनादित्यविम्बंपरामृश्यते। ततआदित्यविम्बंचक्षुः। त्रैलोक्यस्यचक्षुर्भूतं यथाचक्षुषाविनावाचक्षुषंकिंचिन्नप्रकाश्यते तथाअनेनापिविनानप्र-
काशतेयतः किंभूतंदेवहितंअनुदितेअस्मिन्दैवंकर्मनक्रियतेयतः किंभूतंपुरस्तादुच्चरत् प्राच्यांदिशिऊर्ध्वंगच्छतअपिकिंभूतंशुक्रंशुक्लंनिष्पापंए
वमादित्यंस्तुत्वावयंपश्येमशरदःशतञ्जीवेमशरदःशरदः शतंशृणुयामशरदः शतंइत्यक्तार्थमेव। आदित्यंस्तुत्वावयमविकलेन्द्रियाः शतंवर्षा
णि जीवेमइत्याशंसावाक्यार्थः। ततःसूर्यार्घ्यंदद्यादनेन ॐ आकृष्णेनेति। अस्याव्याख्यादिकमादित्यसूक्तायामेवलिखितंअतस्तत्रैवानुसन्धेयमिति॥
समाप्तंनिष्क्रमणम्। अस्यापिमनुयाज्ञवल्क्योक्तवीजगर्भोद्भवपापक्षयएवफलम्॥ अथपरेतोरक्तगर्भोपघातपञ्चगुणःजातकर्मणाप्रथममपोहतिद्वित्य
तुतृतीयोहारीतः प्राशनेनतृतीयं तथागर्भाधानाद्यष्टसंस्काराणांप्रत्येकं। फलमभिधायहारीतएवपुनराह। एतैरष्टभिर्गर्भसंस्कारैगर्भोपघातात्पूतोभ राम
वति। तत्रान्नप्राशनेपारस्करः स्थालीपाकंश्रपयित्वाआज्यावाज्यभागौहुत्वाआज्याहुतीर्जुहोति। देवीवाचमित्यादिराजानोअम्येतिचद्वितीयामित्य ७२

न्तम्। मन्त्रो यथा। ॐ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु स्वाहा॥ अस्यार्थः दे-
वा इन्द्रादयः वाचं वाणीं अजनयन्त इत्यादितवन्तः किंभूतां देवीं कान्तिगुणयुक्तां तां वाचं पशवो वदन्ति के ते पशवः विश्वरूपाः विश्वं मानुषादि रूपं येषां
सा कासे धेनुर्भूत्वा अस्मानुपैतु उपगच्छतु उप इति व्यवहितं एत्वित्यनेन संबध्यते। सा कथं धेनुर्भवतीत्याकांक्षायां हेतुगर्भविशेषणमाह नोऽस्माकं ऊर्जं
सामर्थ्यं दुहाना पूरयन्ती यतः किंभूतं मन्द्रेषु मन्द्रः गभीरः अव्यक्त इति यावत तस्य इषु गमकं ज्ञापकमित्यर्थः। अव्यक्तः। परोक्षोऽप्यर्थो येनावगम्यते-
तत्सामर्थ्यं अस्माकं पूरयन्ती या वाणीत्यर्थः। किंपुनः किंभूता सुष्टुता सुष्टु स्तुता या वाक् प्रथमतो देवैर्जनिता ततो मानुषादिभिः सर्वैरेवोच्यते इति वा
चं स्तुत्वा अस्माकं सामर्थ्यं जनयन्ती अस्मानुपगच्छत्विति आशंसा वाक्यार्थः। द्वितीयाहुतिमन्त्रो यथा। ॐ राजानोऽद्य प्रसुराति दानं राज्ञो देवानृतुभिः
कल्पयति। राजो हि मा सर्ववीरं जजान विश्वा आशा राजपतिर्जयेयम्। अस्यार्थः राजोऽन्नं नोऽस्माकं अद्यानुप्राशनसमये दानं होमरूपं प्रसुराति
अभ्यनुजानातु नु पूर्वैः सुरतिरभ्यनुज्ञाने न वर्तते इति किंच राजः देवान् इन्द्रादीन् ऋतुभिः समयविशेषे कल्पयति याजयतु अस्मिन् कर्मणि तेनेनान्नेन
देवाश्चिरकालं वर्तन्त इत्यर्थः। राजः इयतः कारणात मामां सर्ववीरं सर्वत्र कार्ये वीरं क्रमजनान् न कारक्रमतवान अतः कारणात् राजपतिः अन्नस्येश्व-
रोऽहं सर्वा आशाः प्रत्याशा जयेयं अः वान्नमस्माकमन्नप्राशनहोमम् अभ्यनुजानातु अस्मिन् कर्मणि तु तेनान्नेन देवाश्चिरकालं वर्तन्ताम्। अनेन सर्वत्र
क्षमः कृतोऽहं अन्नेश्वरो भूत्वा सर्वाः प्रत्याशाः जयेयमित्याशंसा वाक्यार्थः। प्रसुराति कल्पयाती तिलेट्प्रत्ययनरूपे। ततः स्थालीपाकेनाहुतिचतुष्टयं
जुहोति। यथा पारस्करः। स्थालीपाकेन जुहोति प्राणेनान्ने। मशीयस्वाहा इत्यादि: तत्र मन्त्रो यथा। ॐ प्राणेनान्नमशीय स्वाहा ॐ अपानेन गन्धानशी
य स्वाहा। ॐ चक्षुषा रूपाण्यशीय स्वाहा। ॐ श्रोत्रेण यशोऽशीय स्वाहा। अस्यार्थः। प्राणेन प्राणवायुना अन्नं अदनीयं अशीयं भुञ्जे। अपानेनाघ्राण

ग्रा॰सू॰ वायुना गन्धान्नशीय। चक्षुषा चक्षुरिन्द्रियेण रूपाणि शुक्लादीनि अशीय श्रोत्रेण कर्णेन्द्रियेण यशः कीर्तिं अशीय। गन्धरूपयशांसि अहमनुपभोगेन

७३ अनुभवामीति यावत् अनेनाह्नि चतुष्टयेन चक्षुरादीन्द्रियोपभोग्यान् विषयान् अनुभवामीत्याशंसा वाक्यार्थः। अत्र चाशीर्यद्यप्युत्तमपुरुषप्रयोगात् क

र्तृगोचरा आशंसा प्रतीयते तथापि कुमारगोचरैव बोद्धव्या। यथा श्रुतिः जीवे कांचन यज्ञे यद्दिन आशिषमाशासते यजमानस्यैव सेति। इत्यन्नप्रा

शनम्॥ अथ चूडाकरणम्। अस्यापि मनुयाज्ञवल्क्योक्तबीजगर्भोद्भवपापक्षय एव फलम्॥ तथा रेतोरक्तगर्भोपघातः पञ्च गुणो जातकर्मणा प्रथम

मपाहरतीसन्नुक्तो हारीतः चूडाकरणे चतुर्थः। तथा गर्भाधानाद्युक्तसंस्काराणां प्रत्येकं फलमभिधाय हारीत एव तत्र तत्राह। एतैस्तु भिर्गर्भोपघातात्

पूतो भवति। अत्र चूडाकरणोपरि समूहनादित्रयस्य दक्षिणादानान्तं होमकर्म समाप्य शीतलजले उष्णजलं प्रक्षिपेत्। यथा पारस्करः। शीतास्तु उष्णा

मासिञ्चति उष्णेन वाय उदकेनेह्यदिति केशान्वप॥ अस्यार्थः हे वायो वायुसंबोधनमात्रे कार्ये कारणलोपचारान्नज्ञानं संबो-

धितम्। किंभूतं अदितीखण्डशीतल त्वं उष्णेन उदकेन एहि सङ्गतो भव सङ्गम्य च केशान् वप छिन्धि रोधनार्थं उष्णजलशीतलजलयोः सङ्गतिरिति वा-

क्यार्थः। अदिति इति देवस्वरूपेण इतिधातोः क्तिन्प्रत्यये नदितीरूपम्। न विद्यते दितिः खण्डनं यस्य इति अदितिः तेनोष्णजलमिश्रिते। जलेन दक्षिणशिरःपार्श्व

मनेन मन्त्रेण तुन्दयति। यथा पारस्करः अथास्य दक्षिणं गोदानमुनत्ति सवितेत्यादि॥ मन्त्रो यथा। ॐ सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनुं दीर्घायु-

त्वाय बलाय वर्चसे इति॥ अस्यार्थः॥ आपस्ते तव कुमारस्य तनुं देहावयवं उन्दन्तु किंभूताः सवित्रा आदित्येन प्रसूता जनिताः पुनः किंभूताः दैव्याः दिवि-

भवा शोभवन्त्याः किमर्थं उन्दन्तु दीर्घायुष्ट्वाय बलाय वर्चसे तेजसे। ततः केशेषु कुशान्मन्त्रेण योजयति॥ यथा पारस्करः। कुशं तरुण्यन्तर्दधात्योषधे त्राय रा॰

ति। ॐ ओषधे त्रायस्व॥ हे ओषधे त्रायस्वैनं स्व अत्र एनमिति मन्त्रस्य द्वितीयपदे श्रूयते तदेव कर्म्मनया बोद्धव्यम्। साकांक्षत्वात्पाम्पलात्। ॐ स्व ७३

धितेमैनं हिंसीः। हे स्वधिते वृहद् एनं कुमारं मा हिंसीः। अस्य कुमारस्य हिंसां मा कुरु इत्यर्थः। मिलितस्य मन्त्रस्य पक्षे कुशैः क्षुरस्वमेनं कुमारं कद्रू मा हिंन
स्वितिवाक्यार्थः ततस्ताम्रान्क्षुरग्रहणे पारस्करः॥ शिवो नामेति ताम्रक्षुरमादायइति। तत्र मन्त्रो यथा॥ ॐ शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा
हिंसीः॥ कर्म्मार्थं भुक्तस्य तंक्षुरमन्त्रसम्बोधनत्वेन वाद्व्यम। हे क्षुर शिवो नामासि। शिवं कल्याणमित्यभिधानमसि। शिव इति तव नामेत्यर्थः॥ किञ्च
ते तव स्वधितिर्वपिता वज्रात् उत्पन्नत्वात् इत्यर्थः। एवंभूताय ते तुभ्यं नमोऽस्तु मा मा हिंसिः तथा यत्त्वं कल्याणं नाम भवत्युत पक्षुरिति क्षुरं स्तुत्वा नमस्क्रि
तिं नमस्कृत्य मां अभयाय नियाच्य आवाक्यार्थः। अत्र पद्याणि मा मां हिंसीरिति कर्तृविषयणीयाच्छ्वाप्य पनेनया कुमारविषयिणी॥ पंचकाच्छ्वनयतर्थेद्रि
जआशिषमाशास्ते। यजमानस्यैव सेति ततस्तान्नात्क्षुरस्य केशेषु संलग्ने। पारस्करः निवर्तयामीति। निश्चवौर्व्वर्न्तिः संन मनेवर्त्तने उनिरतं आयुर्लिरिम्
तत्वात् एततत्किपापदं कर्तृसाकांक्षं कर्म्मसाकाङ्क्षं सञ्ज्ञनतत्वाह मिति कर्त्ता क्षुरमिति कर्म्मचवोत्तम्॥ किमर्थं क्षुरसंलग्नमित्याकांक्षायामाह आ
युषे जीवनाय अन्नाद्याय अन्नाद्यन्त्वनन आद्यं भक्ष्यं त्वितिअन्नाद्यं तदर्थम्। तथा प्रजननाय प्रजननं प्रसवशक्तिः तदर्थं च। रायस्पोषाय वा पोषनस्य पो
षाय पुष्यर्थं तथा सुप्रजास्त्वाय शोभनसन्ततिमत्वार्थं तथा सुवीर्याय उत्कृष्टवीर्यवत्वार्थं च अनेन क्षुरसंलग्नकर्म्मणा अस्य कुमारस्यान्तरीनिम
वन्त्विस्त्वाशंसावाक्यार्थः। सुप्रजास्त्वायेति वर्णागमो वर्णविपर्यय पञ्चेतिन्यायेनाकारस्यान्तस्थः ततस्तूष्णीं सोह क्षुरमादाय सकृत्तान कोणगान् छिन्द्या
त्। यथा पारस्करः। भवपतियतावपनस्य वितेति। मन्त्रो यथा॥ ॐ येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् तेन ब्रह्माणो वपतेदम्
अस्यायुष्यं जरदष्टिर्यथासत॥ अस्यार्थः। हे कुमार सविता आदित्यः येन क्षुरेण सोमस्य भवपत् मुण्डितवान् अर्थात् केशानिति॥ किंभूतस्य सोमस्य
राज्ञः सोमस्य वरुणस्य किंभूतः आदित्यः विद्वान् सर्ववित् तेन क्षुरेण तत्व ब्रह्मणाः ब्राह्मणा इदं मुण्डयन्ति यथा इदं वृत्तकर्म भस्य तत्व आयुष्यं भस

त्भूयात्किंभूतमायुष्यं जरदष्टिः जरत्वार्धकं अश्नुते व्याप्नोति जरदष्टिर्वार्द्धकपर्यन्तमस्यायुर्यथा स्यादित्यर्थः ॥ यच्चूडाकर्मणि आदित्येन वरुणेन सहसो
मवरुणयोः कर्त्तृत्वेन ब्रह्मा करोतीति चूडाकर्मस्तुत्वात् नव आयुष्यं भूयादिति वाक्यार्थः। वक्षणादिति प्रथमैकवचनास्थाने षष्ठ्येकवचनम्। जरदष्टि
रितिसजन्हन्लिङ्गमेव। ततः पार्श्वकेशान्छिन्द्यात्॥ यथा पारस्करः। अथ पश्चात्त्र्यायुषमिति। तत्र मन्त्रो यथा॥ ॐ कश्यपस्य त्र्यायुषं जमदग्नेस्त्र्यायुषं
देवानां त्र्यायुषं तन्मेऽस्तु त्र्यायुषम्। अस्यार्थः॥ त्र्यायुषं बाल्ययौवनवार्धकात्मकमवस्थात्रयमित्यर्थः। कश्यपस्य ऋषेर्यत्त्र्यायुषं जमदग्नेस्त्र्यायुषं देवानां च
स्यादीनां यत्त्र्यायुषं तत्त्र्यायुषं मे मास्तु। ततो रामपार्श्वकेशशातने पारस्करः अथोत्तरतो येन भूरिश्चरेति। तत्र मन्त्रो यथा। ॐ येन भूरिश्चरा दिवं ज्योक्च
पश्चाद्धि सूर्यं तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये। अस्यार्थः॥ येन क्षुरेण साधनभूतेन भूरिश्चन्द्रमाः किंभूतः श्चराः
भ्रमणशीलः दिवं ज्योक् स्वर्गं गतः सममवत् पश्चाद्धि सूर्यं सूर्यो ज्योक् च स एव चन्द्रमाः सूर्यसङ्गतोऽभूत् तेन क्षुरेण तेन वपामि त्वाङ् सौ
रयामि कस्मै फलाय तत्राकांक्षायामाह। ब्रह्मणा ब्रह्मणो वेदलाभार्थमिति यावत् न केवलं वेदलाभार्थं जीवातवे जीवनोपायलाभार्थं च जीवनोपायात्।
जीवनाय चिरंकालप्राप्त्यर्थं चेत्यर्थः। जीवनार्थं च सुश्लोकाय शोभनं श्लोकं यशस्तदीयलाभार्थं च स्वस्त्यय कल्याणार्थं च वराय इति चरणसर्थं इस्व
स्मात्। अस्तन स्वस्ताय इति सर्वे विषयश्छन्दसि विकल्पान्त इति विभक्तेर्लुक् ततो दक्षिणे तेन लोहक्षुरं शिरसि वारयन्नामयेत्। यथा पारस्करः। विक्षु
रेण शिरः प्रदक्षिणं परिहरति सुखं केशान्ते न वक्षुरेणमपतेति। मन्त्रो यथा॥ ॐ यत्क्षुरेण मर्चयता सुपेशसा वप्त्वा वा वपति केशाञ्छिन्धि शिरो मास्या
युः प्रमोषीः। अस्यार्थः। अस्य कुमारस्य यत् क्षुरेण वप्त्वा वा वपति वपसि एनस्य कुमारस्य च सौरं समाप्य पुनर्वारत्रयं क्षुरं भ्रामयति नतस्तेन पुनः क्षुरेणाप्य
स्य केशान् छिन्धि छेदय मा शिरः अस्य शिरश्छेदनं मा कुरु अस्य आयुषः मा प्रमोषीः आयुः खण्डनमस्य मा कुरु किंभूतेन क्षुरेण मर्जयता शोधयता।

शिरोभिः कलुषं कुर्वीतेति यावत् पुनः किंभूतेन सुपेशसा शोभनावयवेन वपति इति मध्यमपुरुषैकवचनस्थाने तिङां तिङो भवन्तीति प्रथमपुरुषैकव-
चनं प्रमोषीरिति मुषस्तेये लुङ् मध्यमपुरुषैकवचनम् ॥ मञ्जायसेति डुमस्जो शुद्धौ शत्रन्तात् तृतीयैकवचनं वस्त्रा वेति वा शब्दोऽत्र समुच्चयार्थः ॥ इति चू-
डाकरणमन्त्रव्याख्या ॥ अथोपनयनं ॥ तत्राचार्य्योऽग्निस्थापनादिकं कृत्वा माणवकं स्नातं अन्यतमं वस्त्रं परिधापयेत् तथा च पारस्करः । अथैनं वासः
परिधापयति येनेन्द्रायेति ॥ तत्र मन्त्रो यथा ॥ ॐ येनेन्द्राय बृहस्पतिर्वासः पर्य्यदधादमृतं तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्च्चसे ॥ अ-
स्यार्थः । बृहस्पतिर्देवानामाचार्य्यः येन विधिना अवधानेन इन्द्राय इन्द्रं वासः वस्त्रं पर्य्यदधात् परिधापितवान् । किंभूतं वासः अमृतं आहतं तेनावधाने-
न त्वां परिदधामि परिधापयामि वास इति पूर्वोक्तमेव योज्यं किमर्थम् आयुषे जीवनाय दीर्घायुत्वाय चिरजीवित्वाय बलाय सामर्थ्याय वर्च्चसे तेज-
से च वाक्यार्थः स्फुट एव । इन्द्रायेति द्वितीयार्थे चतुर्थी पर्य्यदधात् परिदधामीति द्वयं णिजन्तं तदनु मौञ्ज्यादन्यतमां मेखलां बध्नीयात् । तथा च पारस्क-
रः । मेखलां बध्नीत इयं दुरुक्तं परिबाधमानेति ॥ तत्र मन्त्रो यथा ॥ इयं दुरुक्तमित्यादि मेखलेयमित्यन्तः । ॐ इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुन-
ती म आगात् प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयं अस्यार्थः । इयं मेखला आगात् आगतवती किं कुर्वाणा मे मम दुरुक्तमपुप-
नीतं इति दुर्वचनदोषं परिबाधमाना सर्वतोभावेन खण्डयन्ती अत एव देवी स्तुत्यादिविषया किंच पवित्रमुत्कृष्टं वर्णं द्विजजातीं पुनती पावयन्ती ई-
दृशीयं मेखला स्वसा अस्तु भगिनीवन्नित्यमभ्युदयिनी भवतु अस्त्विति अध्याहार्य्यं किंभूता प्राणापानाभ्यां बलं सामर्थ्यमादधाना प्राणापानयोर्बल-
मर्पयन्ती पुनः किंभूता सुभगा अकर्कशा सुखस्पर्शेति यावत् ततो यज्ञोपवीतं त्रिकामेकां परिधापयेत् तत्र पारस्करोऽस्ति सदाचार एव प्रमाणं
तत्र मन्त्रो यथा ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । अस्यार्थः हे माणव-

ब्रा॰स॰ कयज्ञोपवीतंप्रतिमुञ्च धारय प्रतिष्ठ वा मुञ्च निर्द्धारणे वर्त्तते किंभूतं यज्ञोपवीतं आयुष्यमायुर्वृद्धिहेतुं अग्र्यं श्रेष्ठं शुभ्रं निर्मलं परमं पवित्रं पुनः किं
७५ भूतं पुरस्तात्पूर्वं वृहस्पतिः सहजं पूर्वं वृहस्पतिना सहैकसमये जातमित्यर्थः किमर्थमस्य धारणमित्याकाङ्क्षायामाह। वलं सामर्थ्यमस्तु तेजो
स्तु हे माणवक आयुर्वलतेजसां लाभाय यज्ञोपवीतं धारयेति वाक्यार्थः ।यज्ञोपवीतदानानन्तरं स्मृतिशास्त्रविहिततया अमन्त्रकमेव कृष्णाजिनं द
द्यात् ततो माणवकः।पालाशमन्यतमं दण्डं गृह्णीयात् तथाच पारस्करः ।दण्डं प्रयच्छति तं प्रतिगृह्णाति यो मे दण्डः परापतेतितत्र मन्त्रो यथा यो मे
दण्ड इत्यादिर्यो मे दण्डः परापतद्वैहायसोधिभूम्यां तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसायेति अस्यार्थः यो मे मम दण्डः अधिभूम्यां भूमेरुप
रि परापतत् पतितः पुनः किंभूतः वैहायसः विहाय आकाशं तत्र भूतः अतो दण्डं पुनरादद प्रतिगृह्णामि प्राक्तनजन्मन्यहं द्विज आसं एतावता स्मिन्नपि
जन्मनि दण्डं गृह्णामीत्यभिप्रायः किमर्थं गृह्णामीत्याकाङ्क्षायामाह। आयुषे जीवनार्थं ब्रह्मणे वेदार्थं ब्रह्मवर्चसाय ब्रह्मतेजः प्राप्त्यर्थं चेत्यर्थः ।तत्राचा
र्य्यः स्वयं जलाञ्जलिमादाय माणवकस्याञ्जलिं पूरयेत्। तथाच पारस्करः ।अथास्याञ्जलिं जलेनापूरयेत् आपो हिष्ठेति सृभिरिति मन्त्रो यथा आपो
हिष्ठेत्यादि त्रयं तस्याऽर्थं अस्य मंत्रस्य स्नानव्यादिकं प्रातःस्नानएवकृतमतस्तत्रैवानुसन्धेयं ततो माणवकस्तं जलाञ्जलिं दत्वा आदित्यमुपतिष्ठति
तथाच पारस्करः अथैनं सूर्य्यमुदीक्षयति तच्चक्षुरिति। मन्त्रो यथा । तच्चक्षुः देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतं शृ
णुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् अस्यार्थः तेदस्सहमारत्यादिषु काण्डिकं ऽप्रस्तुतत्वादादित्यनेनादित्य
विम्बं परामृश्यते तदादित्यविम्बं चक्षुः त्रैलोक्यचक्षुर्भूतं यथा चक्षुषा विना चाक्षुषं किंचिन्न प्रकाशते तथा अनेनापि विना न प्रकाशते यतः किंभूतं देवानां हि
तं प्रसिन्नुरिति देवकर्म्मकिं यते यतः पुनः किंभूतं पुरस्मात् प्राच्यां दिशि उच्चरत् ऊर्द्धं गच्छत् अपि च किंभूतं शुक्रं शुक्रं निष्पापं एवमादित्यं स्तुत्वा वर्य प- राम

श्रोमशरदः शतमित्यादिमन्त्रार्थमेव आदित्यं स्तुत्वा तत्प्रसादेन स्वयमविकलेन्द्रियाः शतं वर्षाणि जीवामेत्याशंसा वाक्यार्थः। ततश्चाचार्यो माणवक-
स्य दक्षिणस्कन्धे हस्तं दत्वा हृदयमालभेत् तथाच पारस्करः। अथास्य दक्षिणांसमधि हृदयमालभेत मम व्रते ते हृदयं दधामीति। तत्र मन्त्रो यथा। ॐ मम
व्रते ते हृदयं दधामि मम चित्तमनु चित्तन्ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यम्। अस्यार्थः। हे माणवक ते तव हृदयं मम व्रते द-
धामि तव हृदयं मदेकव्रतं स्थापयामि किं तन्मदेकव्रतत्वमित्याकांक्षायामाह। तव चित्तं मम चित्तमनुकूलमस्तु मदीयचित्तानुकूलं तव चित्तं भवत्वित्य-
र्थः। त्वमेकमना एकचित्तः सन्मम वाचं जुषस्व सेवस्व बृहस्पतिर्देवानामाचार्यस्त्वा त्वां मह्यं नियुनक्तु नियोजयतु अस्मिन्मदेकव्रतत्वे बृहस्पतिस्त्वं नि-
योजको भवत्वित्यर्थः। तत आचार्यो माणवकस्य कस्य ब्रह्मचार्यसीत्युक्तो माणवकेन भवत इत्युत्तरे दीयमाने मन्त्रं पठेत्। तथाच पारस्करः भवत इत्युच्यमान
इन्द्रस्य ब्रह्मचार्यसीति। तत्र मन्त्रो यथा। इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यः। अस्यार्थः। हे माणवक इन्द्रस्य त्रैलोक्यनाथस्य ब्रह्मचार्य-
सि भवसि तवाग्निराचार्यः सर्वेषामेव द्विजातीनां सामान्येनाग्नेर्गुरुत्वात्। यथा गुरुरग्निर्द्विजातीनामिति स्मृतिः इदानीं तु एतदुपनयनकर्मकर्तृत्वे।
नाहं तवाचार्यः। तत आचार्यो माणवकं भूतेभ्यो दद्यात्। तथाच पारस्करः। अथैनं भूतेभ्यः परिददाति प्रजापतये इत्यादिमन्त्रो यथा। अरिष्टावि-
सादिना ॐ प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवे-
भ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै। अस्यार्थः। हे माणवक त्वा त्वां प्रजापतये परिददामि समर्पयामि किंच सवित्रे सूर्याय परिददा-
मि किंभूताय देवाय दानादिगुणयुक्ताय तथा अद्भ्यः जलेभ्यः ओषधीभ्यः व्रीह्यादिभ्यः तथा द्यावापृथिवीभ्यामाकाशभूम्यां तथा विश्वेभ्यो देवेभ्यः सर्वेभ्य
इन्द्रप्रभृतिभ्यो देवेभ्यः तथा सर्वेभ्यो भूतेभ्यो रासंसारिभ्यः परिददामीति सर्वत्र तुल्यार्थः किमर्थं समर्पणमित्याकांक्षायामाह अरिष्ट्यै रिष्टिर्व्यत

तदुपशमनाय हे माणवक सर्वापच्छान्त्यर्थं प्रजापतिप्रतिभ्यस्त्वां समर्पयामीति वाक्यार्थः रिष हिंसायामित्यस्माद्धातोः क्तिन्प्रत्यये कृते रिष्टिः नरि
ष्टिररिष्टिः ततः शिष्यमनुशास्य तस्मै सावित्रीं दद्यात्तत्र पारस्करः अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाण
पसमीक्षिताय दक्षिणतस्तिष्ठत आसीनायवैके पच्छोऽर्द्धर्चशः सर्वां च तृतीये इति अस्या गायत्र्या आस्यादिकं तथा पादार्द्धर्चशः इत्यादि विवरणं चोपरि
गायत्र्याख्याकरप्रकरणे एव लिखितत्वादत्र न लिखितमिति तत्रैव तदनुसंधेयं ततः माणवकः समिधाधानार्थमग्निं प्रज्वालयेत् तथा च पारस्करः अत्र-
समिधादानं पाणिनाग्निं परिसमूहति अग्ने सुश्रव इति मन्त्रो यथा अग्ने सुश्रव इत्यादि ॐ अग्ने सुश्रव। सुश्रवसं मां कुरु यथा त्वमग्ने सुश्रवः सुश्रवा
असि एवं मां सुश्रवः सौश्रवसं कुरु यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि एवमहं मनुष्याणां वेदस्य निधिपो भूयासम्। अस्यार्थः हे अग्ने किंभूतः
सुश्रवः शोभनः श्रवो नाम यस्यासौ सुश्रवः मां सुश्रवसं कुरु सुष्ठु श्रवः कर्णेन्द्रिये तिसुश्रवाः सुश्रवसं वेदाध्ययने माम विकलकर्णेन्द्रियं कुरु इत्यर्थः
हे अग्ने त्वं यथा सुश्रवः सुश्रवा असि सुश्रवस्तदादौ सुश्रवाः शोभनकर्णो भवसि एवं यथा हे अग्ने मां सुश्रवः सौश्रवसं कुरु सुश्रवे यशासि एवं शो
भनश्रवणजनितज्ञानशालिनं कुरु हे अग्ने त्वं यथा देवानां यज्ञस्य निधिपो देवानामिन्द्रादीनां यज्ञस्य यज्ञसंबंधेन निधिपो निधिरक्षको भाण्डागारिको भ
वसि एवमहं मनुष्याणां वेदस्य निधिपो भाण्डागारिको भवामीत्यर्थः ततो माणवकोऽग्नौ समिधं दद्यात्। तथा च पारस्करः प्रदक्षिणमग्निं परिक्रम्यो
त्थाय समिधमादधात्यग्नये समिधमाहार्षमिति। मन्त्रो यथा। अग्नये समिधमित्यादि अग्नये समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा स-
मिध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी
ब्रह्मवर्चस्यन्नादो भूयासमग्नये स्वाहा। अस्यार्थः हे अग्ने समिधमाहार्षमाहृतवानस्मि कस्मै जातवेदसे अग्नये तुभ्यमेवेत्यर्थः किंभूताय बृहते

ज्वल्यमानाश्चहे अग्ने त्वंयथासमिध्यसेमयात्वआहितयाऽनयासमिधाज्वलसिएवमहंसमिन्धेसुप्रकाशोभवामिकैरायुषा।जीवनेनमेधयाबुद्ध्यावर्च-
सातेजसाप्रजयासन्तानेनपशुभिर्गवादिभिः ब्रह्मवर्चसेनब्रह्मतेजसा।किंचममाचार्यः जीवपुत्रोमेधाव्यस्तुजीवपुत्रोमेधावीचममाचार्योभवत्वि-
त्यर्थः।अहमनिराकरिष्णुरसानिअग्निनाधायप्रयोगस्यकरणंनिराकरणंतत्कारीनिराकरिष्णुः ननिराकरिष्णुर्निसंप्रयोगकारीभवामीत्यर्थः॥अ-
पिचाहमायुष्मान्यशस्वीतेजस्वीब्रह्मवर्चस्वीवेदाध्ययनकृत्तिमान्नादोभूयासंअन्नमत्तीत्यन्नादः कदाचिदपिमंमान्नविच्छेदोमाभवत्वित्यर्थः
अनयाकामनयाअग्नयेस्वाहासुगतंभवतुततोमाणवकोगौहस्तौप्रतप्यमुखंसम्मार्जयेत् तथाचपारस्करः पाणिंप्रताप्यमुखंविमृशेत् तनूपाअग्ने
सीतिवाक्यान्तेमेधांमेइतिमन्त्रोयथातनूपाइत्यादि ॐ तनूपाअग्नेसितन्वंमेपाह्यायुर्दाअग्नेस्यायुर्मेदेहिवर्चोदाअग्नेसिवर्चोमेदेहिअग्नेयन्मेतन्वा
ऊनंतन्मआपृणअस्यार्थः हेअग्नेतनूपाअसितनूः शरीरंतस्यपारक्षकोभवतिअतोमेमतनूः शरीरंपाहिरक्षहेअग्नेआयुर्दाअसिआयुषोदाता
भवसिअतआयुर्मेदेहिहेअग्नेवर्चोदाअसितेजोतेजसादाताभवसिअतोवर्चोमेदेहिहेअग्नेमेममतन्वाः शरीरस्ययत्ऊनमसंपूर्णंतन्मेआपृणआपू-
रयअत्रचतनुमितितनूशब्दस्यद्वितीयैकवचनेइयङ्प्रकरणेतत्त्वादीनांछन्दस्युपसंख्यानमितियणादेशः हेअग्ने अनेनसमिधादानकर्मणा
आराधितस्त्वंकुर्वितिप्रार्थनावाक्यार्थः मेधामेत्यादि ॐ मेधाम्मेदेवः सविताआदधातुमेधांमेदेवीसरस्वतीआदधातुमेधामश्विनौदेवाममदेहारि
रसकंधत्तांपुष्करस्रजौअस्यार्थः मेममेधांसवितादेवः आदधातुतथामेममेधांदेवीसरस्वतीआदधातुतथादेवावश्विनीकुमारौवाधत्तांकिं-
भूतौपुष्करस्रजौपुष्करंपद्मंतन्मयीस्रक्मालाययोः पुष्करस्रजौसपवित्रादयोदेवामेधांममजनयन्त्वित्यामेवप्रार्थनावाक्यार्थः ततः प्राणसं-
स्पर्शनेपारस्करः अङ्गानिचआप्यायतामिति तत्रमन्त्रोयथाअङ्गानिचेत्यादि ॐ अङ्गानिचमआप्यायन्तांयशोबलञ्चमआप्यायतांअस्यार्थः।

पा॰स॰ यैममाङ्गानि शारीरावयवाः आप्यायन्तां स्फीता भवन्तु न केवलं मेधा मम भवतु एतद्पि भवत्विति वाक्यार्थः। ॐ वाक्च म आप्यायतां २ ॐ प्राणश्च म
७७ म आप्यायतां ३ ॐ चक्षुश्च म आप्यायतां ४ ॐ श्रोत्रञ्च म आप्यायतां ॐ यशश्च म आप्यायतां ॐ बलञ्च म आप्यायतां १ एषामर्थः वाग्वचनकारण
मिन्द्रियं मुखमित्यर्थः। प्राणः प्राणवायुः श्वासात्मा चक्षुः श्रोत्रे प्रसिद्धे यशो बलमिति च द्वयमपि प्रसिद्धमेव च मे आप्यायतामिति सर्वत्र तुल्यार्थः वा
क्यार्थोपि व्यक्त एव ततो माणवको भस्मना त्र्यायुषं कुर्यात् तथाच पारस्करः आयुषाणि कुरुते भस्मना ललाटे ग्रीवायां दक्षिणांसे हृदि त्र्यायुषमि
ति प्रतिमन्त्रमिति तत्र मन्त्रो यथा ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवेषु आयुषं तन्नो अस्तु त्र्यायुषं अस्यार्थः। त्रीण्यायूंषि समाहृतानि आयु-
षं आयुः शब्दो अत्रावस्थावचनः आयुषं बाल्ययौवनवार्द्धकात्मकावस्थात्रयमित्यर्थः। यथा कश्यपस्य ऋषेर्यत् आयुषं जमदग्नेर्यत्। आयुषं देवानां ब्र-
ह्मादीनां यत् आयुषं तत् आयुषं मे ममास्तु। इत्यावसथिक महाधर्म्माधिकृत हलायुध कृतो ब्राह्मणसर्वस्वे उपनयनमन्त्रव्याख्या। अथ समावर्तनं। त-
त्र ब्रह्मचर्यानन्तरं समावर्तनकालविधौ मनुः। षट्त्रिंशदाब्दिकं ब्रह्मचर्यं गुरौ त्रैवेदिकं व्रतं तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा अत्र ग्रहणान्तिकमेव वे
दियो नितीक्ष्णबुद्धित्वाद्ल्पसमयेनैव वेदत्रयमभ्यस्यति तेन तदभ्यासानन्तरमेव समावर्तनं कर्तव्यमित्यर्थः। एतस्यैव स्फुटीकरणे पारस्करः अष्टचत्वा
रिंशद्वर्षाणि वेदब्रह्मचर्यं द्वादश द्वादश वा प्रतिवेदं यावद्ग्रहणं वेति तत्र सर्वथा समग्रवेदाध्ययनासमर्थेन त्वाह्निकस्वरूपगभीधानादिदशसंस्का-
रो नित्यस्नातो निकामं तु गुणवेदभागमयमधीत्य समावर्तनमाचरणीयं तत्र समावर्तनस्नानार्थं मनुष्याणां उदकुम्भानां ग्रहणे पारस्करः कुम्भो
तु प्रागग्रेषु उदरस्ता स्थित्वा अष्टानामुदकुम्भानां ये अप्स्वन्तरग्नय इति जलग्रहणमन्त्रो यथा ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूखो राम
मनोहास्खलो विरुजस्तनूदूषुरिन्द्रियहा तान्विजहामि यो रोचनस्तमिह गृह्णामि अस्यार्थः। अप्सु जलेषु अन्तः मध्ये ये अग्नयः प्रविष्टास्तान्विजहामि केलेमो ७७

स्नः उपगौरः सपूषः मनोहारखलः विरुजः तनूदूषिरिन्द्रियहा। इत्यष्टावपि नामानि एतेषामयः सर्वएव स्वस्वनामतो दोषा बहुत्वेन प्रतीयन्ते एतान्बहे
तान्निहाय हे जले योऽग्निः स्वेन नाम्ना कल्याणनामानं गृह्णामि स्नानार्थं जले गृह्यमाणे जलेऽग्नय स्तिष्ठन्ति तेषु मध्ये गोह्यादयो दोषा हास्तान्विहाय क
ल्याणनामा तेन मामभिषिञ्चामि प्रकाशापि सहितं जलं गृह्णामीति वाक्यार्थः प्रकाशकाग्निसहितं जलं गृह्णन्ततः एकस्मात्कुम्भाज्जलमादायाभिषेक
ं कुर्यात् तथा पारस्करः। एकस्मादपो गृहीत्वा तेनाभिषिञ्चति तेन मामभिषिञ्चामीति तेन मामभिषिञ्चामि इत्यादिना दक्षिणायशा इत्यन्तः तत्र म-
न्त्रो यथा ॐ तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय येन श्रियमकृण्वतां येनावमृशतां सुरां येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना य
शः अस्यार्थः श्रियै लक्ष्मीलाभाय यशसे कीर्तिलाभाय ब्रह्मणे अध्ययनाय ब्रह्मवर्चसे ब्राह्म्यतेजोलाभाय अहं मामात्मानं तेन जलेनाभिषिञ्चामि तेन केन
येन जलेन हे अश्विनौ भवन्तौ लक्ष्मीमकृण्वतां कृतवन्तौ यथा येन सुरासुरान्निनाशीपम अवमृशः ताभाजितवन्तौ यथा येन। सोऽश्विनी अभ्यषि
ञ्चतां अभिषिक्तवन्तौ तथा वायुवयोर्यज्जलं यशोहेतुर्मम अस्तु इत्यध्याहार्यं येन जलेनाश्विनी कुमारयोर्लक्ष्मीर्जनिता सुरादोषो मार्जितश्च सुरभिषि
क्तइति क्व कृतं तपो रित्य म अभ्युदयकारणं यज्जलं तेनाभिषेकात् मम लक्ष्मीर्यशो ब्रह्मणो ब्रह्मज्ञानं ब्रह्मतेजांसि भवन्तित्याशंसावाक्यार्थः। ततः एवंवि
धेष्वन्तरितिनिस्नेवं जलकुम्भत्रयाज्जलमादाय आपोहिष्ठेतिति सृभिः प्रत्येकं स्नायात् तथा च पारस्करः। आपो हि ष्ठेति च तिसृभिरिति मन्त्रो यथा ॐ आपो
हि १ यो वः २ तस्मा अरं ३ अस्य मन्त्रत्रयस्य व्याख्यानं प्रातःस्नानप्रकरणे कृतं तस्मात्तत्र कृतं तत्रैवानुसन्धेयं। ततो येस्वन्तरिति मन्त्रेणैव प्रतिकल-
शं जलमादाय तूष्णीमेव जलकुम्भचतुष्टयेनाभिषेकं कुर्यात्। तथा च पारस्करः। तूष्णीमितरैरिति ततो मेखलोन्मोचनं शिरोमार्गेण कुर्यात्। पारस्क
रः। उदुत्तमं मेखलामुन्मुच्य विधापयेति। तत्र मन्त्रो यथा उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय अथा वयमादित्य व्रते तवानागसो अदि

ब्रा॰स॰ तयेस्याम। अस्यार्थः। हे वरुण उदुत्तमं पाशमस्मदुच्छ्रथय यथा असात्त्वं ईप्सथं कुरु किंचाधमं पाशमवश्रथाय अथानाविश्रथयेति पूर्ववत्तदेवमध्यमं
७८ उत्तमाधमयोरन्तरं विश्रथाय स्वस्थानएव विशेषेण श्रथय अथैवं कृते आदित्या दितेः पुत्र वरुण त्वं व्रते ब्रह्मचर्ये वयं तवानागसः अनपराधाः सन्तः आ-
दितये अदीनतायै स्याम अदीना भवामेत्यर्थः ततो वासोन्यत्परिधायादित्यमेवेक्षणं कुर्यात्। तथा पारस्करः। वासोन्यत्परिधायादित्यमुपतिष्ठेत उद्यन्
भ्राजभृष्णुरिति। मन्त्रो यथा। उद्यन्नित्यादित्यमुपेसन्तः ॐ उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वा
विदन्मा गमय उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवायावभिरस्थच्छतसनिरसि शतसनिं मा कुर्वाविदन्मा गमय उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सा
यंयावभिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्वाविदन्मा गमयेति। अस्यार्थः। इन्द्र आदित्यः उद्यन्नुदयं कुर्वन्नस्थात् स्थितो बभूव किंभूतः भ्राज-
भृष्णुः भ्राजं रश्मिं बिभर्तीति भ्राजभृष्णुः भ्राजः प्रत्यूषे मरुद्भिर्देवैः सहास्थात् किंभूतैः यावभिः यावद्भिः यावन्तो देवास्तैः सर्वैः स्थितो बभूवेत्यर्थः
ततः हे विदन् हे विद्वन् सर्वं जानन्नादित्य त्वं दशशतनिरसि बहुधनो भवसि अतो मां मा दशशतनिं कुरु बहुधनं कुरु किंच मा मां ब्रह्मचर्यादुत्तीर्णं भाग
मय जानीहि द्वितीयतृतीयपाठयोश्च दिवायावभिः सायंयावभिः यावद्भिः सहस्रशतनिरसि इत्येतावन्मात्रेषु विशेषः तत्र दिवा सायमिति प्रसिद्धा
र्थं शत सहस्र शब्दौ बहुत्ववाचिनावेवापरं सर्वं समानं आदित्यः प्रातर्दिवासायंकालेषु रश्मीन्धारयन्सर्वैर्देवैः सह स्थितो बभूवेत्यादित्यमुक्त्वा
त्वं हे सर्वज्ञादित्य बहुधनोसि मां बहुधनं कुरु ब्रह्मचर्यादुत्तीर्णं मा जानीहि चेति यावता वाक्यार्थः। तत्र यावभिरित्यत्र वर्णागमो वर्णविपर्ययश्चेतिद्का
रलोपः आगमयेति कुर्वाविदन्नित्यत्र स्थिते नाउनसंबन्धः॥ ततः औदुंबरेण काष्ठेन दन्तधावनं कुर्यात्। तथा पारस्करः औदुम्बरेण दन्तान्धाव राम
येत् अन्नाद्यायेति। मन्त्रो यथा ॐ अन्नाद्याय व्यूहध्वं सोमो राजायमागमत्स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च अस्यार्थः। हे वनस्पते व्यूह ७८

ध्वंमूहत्सप्रबुद्धोभवकस्मिन्विषयेयंवनस्पतिंसोमश्चन्द्रमाआगमतआगतवानकिंभूतः राजावनस्पतीनांप्रभुःसवनस्पतिःमेममसुखंप्रमार्क्ष्यति
शोधयिष्यतिकेनकेनयशसाभगेनसौभाग्येनचकिमर्थमन्त्राव्याप्यभन्नंचतरांयंचेयन्त्रायन्तन्दर्थयंवनस्पतिंचन्द्रमाआगतःसचन्द्रसहितोव
नस्पतिरन्नधासयेममसुखंयशःसौभाग्याभ्यांशोधयिष्यतीत्यत्रवनस्पतेसावधानोभवेतियाज्ञ्वावाक्यार्थः।अत्रव्यूहध्वमितिऊहवितर्केइत्यस्य
तिङ्गातितिङोभवन्तीत्येकवचनस्थानेवहुवचनंप्रमार्क्ष्यतइतिमृजूषशुद्धावित्यस्यलृटंतस्यरूपमृतेतःसुगन्धिद्रव्येणहस्तावनुलिप्यमुखसमीपे
निधानमन्त्रंजपेत् तथापारस्करः हस्तावनुलिप्यानामिकयोर्मुखस्यचोपगृह्णीयात्प्राणापानौमेतर्पयेति।मन्त्रोयथा ॐ प्राणापानौमेतर्पयचक्षु
क्षुर्मेतर्पयश्रोत्रंमेतर्पय।अस्यार्थः।हेअनुलेपनमेममप्राणापानौशरीरवायूतर्पय।तथामेचक्षुस्तर्पय।तथामेश्रोत्रंतर्पय।व्यक्तार्थमेनततो
हस्तौप्रक्षाल्यदक्षिणस्यांदिशिजलंत्यजेत् तथापारस्करः।पितरःशुन्धध्वमितिपाणीप्रक्षाल्यपरिवनेजननंदक्षिणेनिषिञ्चेदितिमन्त्रोयथापितरःशुन्धध्
मितिअस्यार्थः।हेपितरःशुन्धध्वंशोधयतमामितिकर्मपदमाहृत्यवोधयध्वंमांशोधयध्वमितियाज्ञ्यावाक्यार्थः।ततःसुगन्धेनस्वदेहंलिप्त्वामन्त्रं
जपेत् तथाचपारस्करः अनुलिप्यजपत्सुचक्षाहमक्षिभ्यामितितत्रमन्त्रोयथा।सुचक्षाइसादिसुचक्षाअहमक्षिभ्यांभूयासंसुवर्चामुखेनसुश्रुत्
कर्णाभ्यांभूयासंअस्यार्थः अहमक्षिभ्यांसुचक्षाभूयासंसुचक्षाशोभनदृष्टिः तथामुखेनसुवर्चाभूयासंशोभनदीप्यमानस्तथाकर्णाभ्यांसुश्रुद्भूयासंसुश्रु
तशोभनश्रावीअहमक्षीभ्यांशोभनंपश्यामिमुखेनदीप्तिमानभवामिकर्णाभ्यांशोभनंशृणोमीतिआशंसात्रयंवाक्यार्थः।ततोनूतनंधौतंवावस्त्रंपरि
दध्यात् तथाचपारस्करः।अहतंवासोधौतंवासौत्रेणाच्छादयीतपरिधास्यैयशोधास्येति तत्रमन्त्रोयथा ॐ परिधास्यैयशोधास्यैदीर्घायुत्वायजरद
ष्टिरस्मिशतंजीवामिशरदःसुवर्चारायस्पोषमभिसंव्ययिष्ये अस्यार्थः।परिधास्येपरिधानंकरिष्यामियशोधास्येकीर्तिधारयिष्यामिय

ब्रा॰स्त्र रिधानेनकीर्तिर्भूमिर्भविष्यतीत्यर्थः।अपितुदीर्घायुत्वायदीर्घायुष्ट्वार्थंकिंजरदष्टिरस्मिजरद्वाईकिमश्नुतेव्याप्नोतीतिजरदष्टिःवृद्धोभवामीत्यर्थः॥
७८ किंचशतंशरदःशतंवर्षाणिजीवामिकिंभूतःसुवर्चाःशोभनदीप्तिशालीरायस्पोषंरायस्पोषायधनवृद्ध्यर्थमेतावद्भिःप्रयोजनैः।अभिसंव्ययिष्ये
अभिसर्वतोभावेनसम्यग्व्ययिष्येआवरणंकरिष्यामीत्युपसंहारः पुनःपुनरुद्देशोऽत्यातिशयार्थः।यशश्चिरायुत्वाष्टतेजोधनानांप्राप्त्यर्थमहं
परिधानंकरोमीतिवाक्यार्थः।रायस्पोषमितिसुपांसुपोभवन्तीतिचतुर्थ्यर्थेद्वितीया॥संव्ययिष्यइतिव्येञ्संवरणइत्यस्यरूपम्॥ततोद्वितीयव-
स्त्रेणोत्तरीयंकुर्यात्॥तथाचपारस्करःअथोत्तरीयंयशसामाद्यावापृथिवीति॥तत्रमन्त्रः।ॐयशसामाद्यावापृथिवीयशसेन्द्राबृहस्पतीयशो
भगश्चमाविदद्यशोमाप्रतिपद्यताम्॥अस्यार्थः॥द्यावापृथिवीअकाशपृथिव्यौमामांछादयेतामितिक्रियापदमत्राध्याहृतंबोद्धव्यम्।केनय-
शसा।किंचइन्द्राबृहस्पतीयशसामामाच्छादयेताम्॥किंचयशःमांमामाविदत्प्राप्नोतुनकेवलंयशोभगश्चसौभाग्यंचमांमामाविदत्।किंचयशो
मांमाप्रतिपद्यतांप्रतिगच्छतुपुनःपुनरभिधानमादरातिशयार्थं।अनेनोत्तरीयवस्त्राच्छादनेनाकाशंपृथिवीइन्द्रोबृहस्पतिश्चमांयशसाआच्छादयन्तु
॥उत्तरोत्तरयशःसौभाग्यंचममभवत्वित्याशंसावाक्यार्थः।ततःपुष्पमालांगृह्णीयात्।तथाचपारस्करः।सुमनसःप्रतिगृह्णातियाआहरज्जमदग्निरिति
॥मन्त्रोयथा॥ॐयाआहरज्जमदग्निःश्रद्धायैमेधायैकामायेन्द्रियताअहंप्रतिगृह्णामियशसाचभगेनच॥अस्यार्थः॥याःपुष्पस्रजःजमदग्निर्महर्षिराह्न
रत्।आहृतवान्किमर्थंश्रद्धायै॥एवमेवेतिप्रत्ययःश्रद्धा।तदर्थंकामायाभिलषितसिध्यर्थम्॥इन्द्रियायचक्षुरादीन्द्रियप्राप्त्यर्थंच्युताःपुष्पस्रजःअ
हंप्रतिगृह्णामिकिमर्थंयशसायचयशसेचभगेनचममायसौभाग्यायस्रजमदग्निर्महर्षिणा।।याःपुष्पस्रजःश्रद्धादिप्राप्तयेगृहीताःताद्रवाहम्।य राम
शःसौभाग्यप्राप्तयेगृह्णामीतिवाक्यार्थः।यशसाचभगेनचेतिचतुर्थ्यर्थेतृतीया॥ततस्तन्माल्यंशिरसिबध्नीयात्॥तथाचपारस्करःतथातबध्नीया ७८

त् यद्यशोऽप्सरसामिति ॥ मन्त्रो यथा । ॐ यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु तेन संग्रथिताः सुमनस आबध्नामि यशो मयि अस्यार्थः इन्द्रः अ
प्सरसामुर्वशीप्रभृतीनां यद्यशः उर्वशीप्रभृतयो रूपवत्यः इत्येवं रूपं यशो विपुलं विस्तीर्णं चकार कृतवान् किंभूतं यशः पृथु बृहत्तरम् तेन यशसा
संग्रथिताः सम्यग्ग्रथिताः सुमनसः पुष्पाणि मयि आबध्नामि किमर्थम् यशः यशसे ममाप्यप्सरसामिव रूपवत्त्वाय यशो भवत्वित्यभिप्रायः इ
न्द्रेणाप्सरसां रूपवत्त्वाय यद्यशः कृतं तेन यशसा सूत्रस्थानीयेन ग्रथितानि पुष्पाणि ममापि रूपवत्त्वाय यशो भवतु इत्येतदर्थमाल्यम् । अहमा-
त्मन्याबध्नामीति वाक्यार्थः । यशो मयीति चतुर्थ्यर्थे प्रथमा ततो अहतेन वाससा उष्णीषं कुर्यात् तथा च पारस्करः उष्णीषेण शिरो वेष्टयेत् युवा
सुवासा इति । मन्त्रो यथा । युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः अस्या
यमर्थः । यो युवा परिवीतः वस्त्रवेष्टितः सन् । आगात् । आगतवान् श्रेयान् । श्रेष्ठो भवति उच्छ्रायवान् सः सौभाग्यः किंभूतः । सुवासाः शोभनवस्त्रधा
रीश्वनः किंभूतः जायमानः न केवलं श्रेष्ठो भवति तं युवानं धीरासः पण्डिताः उन्नयन्ति उत्कर्षयन्ति । किंभूताः कवयः कीर्त्तिविस्तारः पुनः किंभूताः
स्वाध्यः सुष्ठु आहिताधीर्येषां ते स्वाध्यः । पुनः किंभूताः मनसा हृदयेन देवयन्तः । स्तुवन्तः ततः कर्णे कुण्डलादिकमलंकारं परिदध्यात् तथा च
पारस्करः अलंकरणमसि भूयोऽलंकरणं भूयादिति कर्णवेष्टकाविति तत्र मन्त्रो यथा ॐ अलंकरणमसि भूयोऽलंकरणं भूयात् । अस्यार्थः हे क
र्णकुण्डल अलंकरणमसि । भूषायाः साधनं भवसीति तव स्वरूपं अतो भूय उत्तरोत्तरम् । अलंकरणं भूयान्मम भूषणं भवः ततः कज्जलेन चक्षुरं
जनं कुर्यात् तथा च पारस्करः वृत्रस्येत्यञ्जनेऽक्षिणी इति तत्र मन्त्रो यथा वृत्रस्यासि कनीनिकश्चक्षुर्दा असि चक्षुर्मे देहि अस्यार्थः । हे अञ्जन वृ-
त्रस्य वृत्रनाम्नः । सातिशयशक्तिशालिनोऽसुरस्य कनीनिका असि तारका असि भवसि अतः कारणात् । चक्षुर्दा असि अन्येषामपि चक्षुर्दा असि

ब्रा॰स॰ ।भतोमेसप्रयंचक्षुर्देहि। यतः कारणाद् वृत्रस्यासुरस्यासितारकोऽस्यञ्च मञ्जनम्। अतस्त्वदीयांजनेनान्येषामपिचक्षुः प्रकाशंभवतिमह्यमपिच
८० क्षुर्देहीतियाञ्चावाक्यार्थः। ततोदर्प्पणेनात्मानमवलोकयेत् तथाचपारस्करः आत्मानमादर्शेप्रेक्षते रोचिष्णुरसीति मन्त्रोयथा। रोचिष्णुर-
सि। अस्यार्थः। हेदर्प्पणरोचिष्णुः प्रकाशनशीलोसिअतोमांसर्वत्रप्रकाशस्वरूपंकुर्वित्यभिप्रायः ततः छत्रंगृह्णीयात् तथाचपारस्करः छ-
त्रंप्रतिगृह्णाति। बृहस्पतेश्छदिरसीति। तत्रमन्त्रोयथा। बृहस्पतेश्छदिरसिपाप्मनोमामन्तर्द्धेहितेजसोयशसोमामन्तर्द्धेहि। अस्यार्थः। हेच्छत्र
त्वंबृहस्पतेर्देवाचार्य्यस्यच्छदिरपवारणमसिभवसि। अतोमांपाप्मनः। पापादन्तर्द्धेहि। आवृतंकुरु। यथामेपापसम्बन्धोनभवतितथाकुर्वित्यर्थः।
नकेवलंपापात्। अपितुतेजसः आदित्यतापादिरूपान्मामन्तर्द्धेहि किमर्थम् यशसः। यशसे। यशोर्थमितियावत् हेच्छत्रयतस्त्वम्। बृहस्पतेरपि
पापसन्तापादिवारणमतोमामपितेभ्यः पिधाययशस्विनंकुर्वितिवाक्यार्थः। यशसइतिचतुर्थ्यर्थेषष्ठी ततउपानहौपरिदध्यात् तथाचपारस्करःउपा-
नहौप्रतिमुञ्चतुप्रतिष्ठेस्थइति तत्रमन्त्रोयथा प्रतिष्ठेस्थोविश्वतोमापातम् अस्यार्थः हेउपानहौयुवांप्रतिष्ठेस्थः। उपक्रान्तमतिक्रियया आत्यागः प्रति
ष्ठातन्निमित्तत्वात् युवामेवप्रतिष्ठेस्थः भवथः अतस्त्वमामांपातंरक्षतम्। कुतः। विश्वतः सर्वस्मादतिविरोधिनः कण्टकादेः यतोयुवांप्रतिष्ठानिमित्तेअ
तोमांसर्व्वतोगतिविरोधिनः कण्टकादेरक्षतमितिवाक्यार्थः। ततोवैणवदण्डंगृह्णीत् तथाचपारस्करः वैणवंदण्डमादत्ते। विश्वाभ्योमामाष्ट्राभ्या-
इति। मन्त्रोयथा। विश्वाभ्योमानाष्ट्राभ्यः परिपाहिसर्वतः अस्यार्थः हेवैणवदण्डमामांपरिपाहिसर्व्वतोभावेनरक्ष। कुतः नाष्ट्राभ्यः नाशकारिणी
भ्यः किंभूताभ्यः। विश्वाभ्यः। सर्वाभ्यः। राक्षससर्पशङ्कादिभ्यः सर्वासुदिक्षु इत्यर्थः। इत्यावसथिकमहाधर्म्माधिकृतश्रीहलायुधकृतौ ब्राह्मणसर्व- राम
विसमावर्त्तनमन्त्रव्याख्यासमाप्ता॥ अथविवाहमन्त्राः तत्रवरस्यविष्टरासनोपवेशनेपारस्करः विष्टरंप्रतिगृह्णातिवर्ष्मोस्मीति। मन्त्रोयथा। ॐव ८०

ष्मोस्मि समानानामुद्यतामिव सूर्यः इमन्तमभितिष्ठामि यो मा कश्चाभिदासति अस्यार्थः। अहं समानानां समानजातीयानां मध्ये वर्ष्मः आच्छादको
स्मि भवामि केषां क इव उद्यतां उदयशालिनां चन्द्रतारकादीनां सूर्य इव॥ किंच यः कश्चन मां मामभिदासति। अभिपूर्वो दासतिर्हिंसार्थे वर्त्तते इ-
ति कर्कभाष्येण व्याख्यातमतं। इमं विष्टररूपतापन्नम्। अभितिष्ठामि। अभिभूय अधः कृत्वा तिष्ठामि ततो वरस्य पादप्रक्षालने पारस्करः पादौ प्रक्षा
लयति विराजो दोहोसीति मन्त्रो यथा ॐ विराजो दोहोसि विराजो दोहमसीय मयि पाद्यायै विराजो दोहः अस्यार्थः। हे जल त्वं विराजः विशिष्टाया
दीप्तेर्दोहः प्रपूरणमसि भवसि विराजो विशिष्टदीप्तेर्दोहं प्रपूरकं त्वामशीय गृह्णामि विराजो विशिष्टदीप्तेर्दोहं प्रपूरकस्त्वं मयि मम पाद्यायै पाद्या
य भव। विराजो दोहोसीति जलमभिमन्त्र्य त्वामहं गृह्णामि त्वं मम पादस्य विशिष्टां दीप्तिं कुर्विति वाक्यार्थः। अत्र अशीयेति अशगतिदीप्त्यादानेष्वि
त्यस्माद्धातोः आशिषि लिङि उत्तमपुरुषैकवचने रूपम् मयीति षष्ठ्यां सप्तमी पाद्यायै इति लिङ्गव्यत्ययेन स्त्रीलिङ्गन्तान ततोर्घ्यग्रहणे पारस्करः अ-
र्घ्यं प्रतिगृह्णात्यापः स्थ युष्माभिरिति। तत्र मन्त्रो यथा। आपः स्थ युष्माभिः सर्वान्कामानवाप्नवानि अस्यार्थः हे आपः यतः कारणात् यूयं आपः प्रा
प्नुवन्ति आपः स्थ भवथ। अतोहं युष्माभिर्गृहीताभिः सर्वान्कामानवाप्नवानि प्राप्नुयामिति वाक्यार्थः। आप इति आप्लृ व्याप्तावित्यत्र धातोराप्नु
वन्तीत्यस्मिन्नर्थे आप्नोतेर्ह्रस्वश्चेति क्विपि कृते ह्रस्वे च कृते अप शब्दे सिद्धे प्रथमा बहुवचने रूपम् ततोर्घ्यजलपरित्यागे पारस्करः अनेन मन्त्रभि-
मन्त्रयते समुद्रं व इति मन्त्रो यथा समुद्रं वः प्रहिणोमि स्वां योनिमधिगच्छत अरिष्टास्माकं वीरा मा परासेचि मत्पयः अस्यार्थः हे आपः वो युष्मान्
समुद्रं प्रहिणोमि प्रस्थापयामि मया प्रहिता यूयं स्वां योनिं स्वीयमुत्पत्तिस्थानं समुद्रं अभिगच्छत किंभूता यूयम्। अस्माकम्। अरिष्टाः अहिंसकाः
पुनः किंभूताः वीराः। उत्कृष्टाः। किंच मत्पयः मदीयस्थानयोग्यपयः तत्पयो जलं मा परासेचि। न प्रस्थापितं। तदिहैव तिष्ठत्विति अभिप्रायः। हे आ

पः।यत्सयः मद्योपपानयोग्यंतन्मयानग्रहितमन्वेवनिष्ठतु।ततोन्यायाआपः तास्समुद्रंप्रहिताअस्माकमहिंसकाभूत्वासमुद्रं गच्छन्त्वितिवाक्यार्थः
तत्रआचमनेपारस्करः।आचामत्यामागन्यशसेति।तत्रमन्त्रोयथा।आमागन्यशसासं सृजवर्चसातंमाकुरुप्रियंप्रजानामधिपतिंपशूनामरिष्टं
तनूनाम् अस्यार्थः।हेजलमामांयशसाआगच्छन् आगमय्ययशस्विनंमाकुर्वित्यर्थः।तथात्वंमावर्चसातेजसासंसृष्टन्तेजस्विनंकुर्वित्यर्थः।त-
थामामांप्रजानांपशूनांद्भवादीनामधिपतिमीश्वरंकुरुतनूनांदेहावयवानाम्।अरिष्टयापद्रहितंकुर्वित्यनेनैवसम्बन्धः।हेजलअनेनाचमनेन
ममयशस्वित्वतेजस्वित्वलोकप्रियत्वगवादिमत्वापद्रहितत्वानिकुर्वित्याशंसावाक्यार्थः।अत्रागन्नितिगमधातोरन्तर्भावितण्यन्ताल्लाङ् पूर्वे
कृतेलोडुमध्यपुरुषैकवचनम्।वहुलंछन्दसीतिवहुलवचनात् शपोलुक्वाछन्दसीतिविकल्पेनविधानात् सेर्ह्यादेशोनभवति।इतश्चेति इकार
लोपः हलादिलक्षणेनसकारलोपः मोनोधातोरितिमकारस्यनकारः मधुपर्कावेक्षणेपारस्करः मित्रस्यत्वेतिमधुपर्कंप्रतीक्षते तत्रमन्त्रोयथा ॐ
मित्रस्यत्वाचक्षुषाप्रतीक्षे।अस्यार्थः।हेमधुपर्कत्वात्वांमित्रस्यआदित्यस्यचक्षुषाप्रतीक्षे पश्यामिअहमादित्येनचक्षुर्दानेनानुगृहीतस्त्वांमधु
पर्कंपश्यामीतिवाक्यार्थः।ततोमधुपर्कग्रहणेपारस्करः देवस्यत्वेतिप्रतिगृह्णाति तत्रमन्त्रोयथा ॐ देवस्यत्वासवितुःप्रसवेश्विनोर्वाहुभ्यां
पूष्णोहस्ताभ्यामाददे॥१॥अस्यार्थः हेमधुपर्कत्वात्वांआददेप्रतिगृह्णामि।कस्मिन्सतिदेवस्यसवितुः आदित्यस्यप्रसवेअभ्यनुज्ञानेसम्मतावि-
तियावत् प्रसवः सुवतिरभ्यनुज्ञानेवर्ततइति।गुणविशिष्टस्यग्रहणम् काभ्यांअश्विनीकुमारयोर्वाहुभ्याम्।तथापूष्णः।आदित्यस्यहस्ताभ्याम्स
वितुःसंमतोअश्विनीकुमाराभ्यांवाहुदानेनानुगृहीतः पूष्णाचहस्तदानेनानुगृहीतस्त्वांमधुपर्कंगृह्णामीतिवाक्यार्थः ततोमधुपर्कमिश्रणेपार-
स्करः त्रिः प्रयातिनमः श्यावास्येतितत्रमन्त्रोयथा।नमस्याववाश्यायान्नशनेयत्तआविद्धंतत्तेनिःष्कृन्तामि अस्यार्थः अत्रनमस्यशब्देनमधुपर्को

विष्टरः तेनायमर्थः । हे नमस्य नमस्कारार्ह । अवाम्न्यायानित्वा मित्यध्याहार्य्यम् । त्वां मिश्रयामीत्यर्थः । किं च ते तव अशने भोजने यन्न्यं आविद्धम् ।
उपहितं तत्ते तव निष्कन्तामि अपसारयामि । नमस्येति स्तुतिपूर्व्वकं मधुपर्कं संबोध्य त्वां मिश्रयामि तवोपहितं ज्वस्फोटयामीति वाक्यार्थः । अत्र अ
मावास्यायानीति श्लेउ गतावित्यस्य धातोश्छान्दसत्वेनात्मनेपदं न भवति अवपूर्वे आङ्पूर्वे च क्ते सोपसर्गत्वात् मिश्रयार्थत्वम् । लोट । उत्त
मपुरुषैकवचने रूपम् । ततो मधुपर्कप्राशने पारस्करः तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यमिति । तत्र मन्त्रो यथा । यन्मधुनो मधव्यं परमं रूपमं
नाद्यन्तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि । अस्यार्थः । मधुनो यद्रूपं किंभूतं मधव्यं मधुरं पुनः किंभूतं परम
म् । उत्कृष्टम् । अपि किंभूतम् । अन्नाद्यमिव अन्नाद्यं यथा । अन्नाद्यमुपभुक्तं सत् बलादिकमादधाति तथैतदपीत्यर्थः । तेन मधव्येन परमेण रूपे
णान्नाद्येन अत्र सर्व्वत्रैव द्वितीयायां तृतीया तथा च सति । एवं योज्यम् । तन्मधुनो मधव्यं परमम् । अन्नाद्यं रूपमहम् । अश्नानि भक्षयामि मधव्यमित्या
दि पुनः । यद्विशेषणं तद्वा दरातिशयप्रतिपादनार्थम् । किंभूतोऽहम् । परम उत्तमः । मधव्यः । मधुरशीलः । अन्नादः । अन्नमत्तीति अन्नादः मधुरस्वरूप
मुत्कृष्टं मधुरं बलाधायक मित्युक्तीत्थं तदेवंभूतमहं उत्कर्षाय मधुरशीलाय च भक्षयामीत्याशंसा वाक्यार्थः । ततो मुखादिप्राणस्पर्शने पारस्करः प्रा
णान् संमृशति वाङ्म आस्य इति मन्त्रो यथा ॐ वाङ्म आस्ये अस्तु नसोर्मे प्राणोऽस्तु अक्ष्णोर्मे चक्षुरस्तु कर्णयोर्मे श्रोत्रमस्तु बाह्वोर्मे बलमस्तु ऊर्वोर्मे
ओजः अस्तु अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु अस्यार्थः । मे मम आस्ये मुखे वाग्वचनमस्तु । मे मम नसोर्नासिकयोः प्राणः श्वासवायुरस्तु । मे
मम अक्ष्णोश्चक्षुर्गोलकयोश्चक्षुरिन्द्रियमस्तु मे मम कर्णयोः कर्णशष्कुल्योः श्रोत्रमिन्द्रियमस्तु मे मम बाह्वोर्बलं सामर्थ्यमस्तु मे मम ऊर्व्वोरोजः प
टुत्वमस्तु । मे मम अङ्गानि शिरः प्रभृतीनि अरिष्टानि आपद्रहितानि सन्तु मे मम तनूः देहावयवास्तादगः । अरिष्टाः सन्त्वित्यर्थः । कया सह । तन्वा स

ग्रा-स ह।इहावयविनासहेत्सर्थः।अनेनाचमनानन्तरकृतेनेन्द्रियस्पर्शनेनममसुखाद्यवयवेषुवचनादिशक्तिःसातिशयानिरापदस्त्वञ्चममभवत्विस
८२ शंसावाक्यार्थः।ततोगोदर्शनेपारस्करःप्रत्याह।मातारुद्राणामितिवचमन्त्रोयथा।मातारुद्राणांदुहितावसूनांस्वसादित्यानाममृतस्यनाभिःप्र
नुवोचंचिकितुषेजनायमागामनागामदितिम्वधिष्टममचामुष्यचपाप्माहत।ॐउत्सृजततृणान्यत्तु अस्यार्थः।प्रथमंउत्तरार्द्धस्ययोऽन्यतेयतोऽर्हणाक
रः प्रनुवोचंप्रकर्षेणानुवोचंआगमस्यानित्यत्वादडागमोनस्यात्पुनःपुनरुक्तवानस्मीत्सर्थः।कस्मैजनायअविशिष्टजनोपादानेनयस्मैकस्मैचित् प्राणि
मात्रायेत्सर्थः।यस्यश्रवणेच्छानास्तितस्यउपदेशाभिधानमयुक्तमित्याशङ्क्यजनायेत्यस्यविशेषणमाह।चिकितुषे।जिज्ञासवेशुश्रूषवेइतियावत् किं
तद्दसीत्याकांक्षायामाह।गामावधिष्ट।मामारयतकिंभूतामनागामानपराधाम् पुनः किंभूतामदितिम् दितिःखण्डनंहिंसाअस्यानास्तीतिअदितिः
तांपुनःकिंभूतांयारुद्राणाम्मातावसूनांदुहिता।आदित्यानांस्वसाअमृतस्यदेवानामाहरभूतस्यघृतस्यनाभिरुत्पत्तिस्थानम्।किंचममचार्ह-
णीयस्य।अमुष्यच।अर्हणाकर्त्तुश्चपाप्मापापंहत।नाशयऎमितिमदीयवचनमनुउत्सृजतमुञ्चगामितिपूर्व्वेणसम्बन्धः।तृणानिअत्तुस्वा
दयतुगौर्मुक्तासतीतिसन्निहितत्वाद्योज्यम् मातारुद्राणामित्यादिस्तुत्वामावधिष्टेतिनिषिद्धअर्हणीयस्यअर्हणाकर्त्तुश्चपापक्षयायगामुत्सृ-
जत।गौश्चअत्त्वितितृणानिखादयत्वित्याशंसावाक्यार्थः ततोवरेणकन्यायावस्त्रपरिधानेपारस्करः अथैनांवासःपरिधापयतिजराङ्गच्छपरिधत्स्व
वासइति।मन्त्रोयथा।जराङ्गच्छपरिधत्स्ववासोभवाकृष्टीनामभिशस्तिपावा।शतंञ्चजीवशरदःसुवर्च्चारयिञ्चपुत्राननुसंव्ययस्वायुष्मतीदंपरिधत्स्व
वासः।अस्यार्थः।हेआयुष्मतिकन्यकेजराङ्गच्छचिरञ्जीविनीभवेत्सर्थः।किंचवासःपरिधत्स्ववासूधारयवस्त्रवियुक्तामाकदाचिदपिभवेत्सर्थ राम
।किंचआकृष्टीनांभवआकृष्टीनामितिप्रथमायाषष्ठीतेनआकृष्टा।मनोहराभवेत्सर्थः।अभिशस्तिपावाभवअभिशस्तिःशापनंतत्पावा ८२

पवित्रा मनोहरा सती शयनेष विचित्रा भवेत्यर्थः। किंच शतं शरदो वर्षाणि जीव किंभूता सुवस्त्रा। शोभनदीप्तियुता शतं वर्षाणि जीवेत्यर्थः। किंचराय-
न्यनेम। अनुसंव्ययस्व। संवृणु। न केवलं धनपुत्रा त्वं अनुसंव्ययस्व। संवृणु। यदेतद्देवाशासितं त्वया मयेदं वासः परिधत्स्व। चिरजीवित्वार्थं शो-
भायाम्मनोहरत्वार्थम्। पवित्रत्वार्थं धनार्थं पुत्रार्थं च। इदं वस्त्रं परिधत्स्वेति वाक्यार्थः अनुसंव्ययस्वेति व्येञ् संवरण इत्यस्य धातोरनुसंपूर्वस्य प-
ञ्चतयो लोटि सिपि रूपम्। ततः कन्याया उत्तरीयकरणे पारस्करः। अथोत्तरीयं या अकृन्तन्निति तत्र मन्त्रो यथा या अकृन्तन्नवयन्या अतन्वत।
याश्च देवीस्तन्तूनभितो ततन्थ तास्त्वा देवी जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः अस्यार्थः हे आयुष्मति या देवीदं व्यस्तन्तून् अकृन्तन् कर्त्ति-
तवत्यः तथा यास्तन्तून वयन् वापितवत्यः। तथा। यास्तन्तून् अतन्वत। विस्तारितवत्यस्ता देवीस्त्वा तां संव्ययस्व संव्ययन्तु परिधापयन्तु तथा स्व
नित्वं यतः। तन्तुं ततन्थ विस्तारय। कथंकारम्। अभितः उभयतः प्रस्तारणं दैर्घ्येण च विस्तार्य परिधत्स्व। किमर्थं जरसे इद्धत्वार्थं चिरजीवित्वार्थं
मिति यावत् याभिर्देवीभिः सूत्रनिष्पादनादिना इदं वस्त्रं निष्पादितं ताभिः परिधापितं स्मृत। इदमुत्तरीयं वस्त्रं त्वं विस्तार्य परिधत्स्वेति वाक्यार्थः
अवंयन्निति व्येञ् तंतुसन्तान इत्येतस्य रूपम् देवीरिति वा छन्दसीति प्रथमा बहुवचने पिपूर्वसवर्णत्वम् अतस्तन्वेति। ननुविस्तार इत्यस्य लिट्म
ध्यमपुरुष प्रथमैकवचने बहुलं छन्दसि न माङ्योगे पि इसडागमः सव्ययस्वेति तिङां त्ति ञ्भवन्तीति प्रथमपुरुषबहुवचने मध्यमपुरुषैकवचनम्।
ततः कन्यावरयोरेकीकरणे पारस्करः अथैनां समंजन्ति समंजन्तु विश्वेदेवा इति मन्त्रो यथा ॐ समंजन्तु विश्वेदेवाः समापो हृदयानि नौ सम्मात-
रिश्वा सन्धाता समु देष्ट्री दधातु नौ अस्यार्थः। विश्वेदेवा नौ। आवयोः हृदयानि हृदयं समंजन्तु। अपि तु। आपः पानीयानि समंजन्तु नो हृदयमिश्र
नेन संबंधः पानीयेनोत्सर्गपूर्वकं दत्तयोस्तव हृदयेन सङ्गत भवत्वित्यभिप्रायः तथा मातरिश्वा आवयोः प्राणयोः वायुः। नौ आवां सन्दधातु संयोजय-

ब्रा॰स॰ तु तथा धातां प्रजापतिः। नौ आवां संदधातु तथा उदेष्ट्री इच्छाकर्त्री दिवता कामदेवः नौ आवां संदधातु देवा आपश्च आवयोर्हृदयं संसृजन्तु भाव
८३ योस्तु मातरिश्वा वायुः। प्रजापतिः कामदेवः आवां संयोजयतु इत्यर्थः सा वाक्यार्थः। अत्र व्यवहिताश्चेति सूत्रेण व्यवहितैः संशब्दे दधातुक्रियायाः सम्ब
न्धः हृदयानीति द्विवचने बहुवचनम्। उदेष्ट्रीति। इषु इच्छायाम् इत्यस्यो तृच् स्त्रियां तद्विकृते छन्दसि आगमानुशासनानामनित्यत्वात् इट् न भवति दे
वतार्थत्वेन स्त्रीत्वविवक्षया ङीप्। ततः कन्यां प्रतिगृह्य कामस्तुति पाठे कार्यः पुनः कोदादित्यस्य दिति। मन्त्रो यथा। कोदात् कस्मा अदात् कामोदा
त् कामायादात् कामो दाता कामः प्रतिग्रहीता कामै तत्ते तव कामना भुनजामहै। अस्यार्थः कः अदात्। दत्तवान्। कस्मै अदात् प्रश्नरूपमेतत्। व
क्ष्योत्तरम्। कामो दात्। कामाय अदात् यतः कारणात् कामो दाता। कामः प्रतिगृहीता अतस्ते काम एतत् दत्तं प्रतिगृहीतं च तदेतत्तेन तव न थावस
तिहे काम त्वं सतः त्वत्संबन्धिभूतं यदेतत् कन्यादि किं भुनजामहे उपभुञ्जाम। सर्वत्रैवात्र काम शब्देन इच्छाभिधीयते। यदिच्छायां सत्यामेव दीयते इष्य
ते च अत इच्छैव ददाति गृह्णाति च यतस्सैव दात्री प्रतिग्रहीत्री च। अतस्तस्यात्रैवैतदिति कामस्तुतिपूर्वकं कामस्यैवैतद्द्रष्टव्यम्। वयमुपभुञ्ज्महे सा शं-
सा वाक्यार्थः ततः कन्याप्रतिग्रहानन्तरपाठे पारस्करः। यद्यन्यत्प्रतिद्यौस्त्वेति मन्त्रो यथा। द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु अस्यार्थः। हे कन्यके
त्वा त्वां द्यौराकाशं ददातु पृथिवी जगतां धात्री त्वा त्वां प्रतिगृह्णातु व्यक्तार्थमेव। तवायं पिता आकाशमिव अहं तथा पृथिवी विश्वेषामाश्रयः तथा तव
श्रयभूतस्त्वां प्रतिगृह्णामीति वाक्यार्थः। ततः कन्यावरयोर्गृहनिष्क्रमणे पारस्करः। गृहीत्वा निःक्रामति यदैषि मनसेति तत्र मन्त्रो यथा। यदैषि मन- राम
सा दूरं दिशोनु पवमानो वा हिरण्यपर्णो वैकर्णः सत्वा मन्मनसां करोत्वसौ। अस्यार्थः। असौ हे कन्यके त्वं मन्मनसा हृदयेन दूरं ऐषि गच्छसि पितृकुल ८१
तो हे वह्निभूत्वा केन कुत्र नीयसे इति हृदये दूरं यासि। सोत्कण्ठा भवसीति भावः। तत्र दिशः प्राच्यादि दश दिशः अनुतदनन्तरं पवमानः समञ्जयार्थः। वायु

चेत्यर्थः हिरण्यपर्णः। हिरण्यं पर्णं रथ्योस्येति हिरण्यपर्ण आदित्यः नैकर्णः। विकर्णे कोणे तिष्ठन्तीति वैकर्णो अग्निः सतेउक्ता दिग्वायुसूर्या पितरः लोका
मन्यन्त सांमङ्गतहृदयांङ्करोमि कुर्वन्त्विति। हे कन्यके पितृकुलतो वहिर्भूता केनकृत्तनीये इतियतः त्वं सोत्कण्ठा भव सितत्र दिग्वायुसूर्या निमृत्स्यास
ङ्गतहृदयां कुर्वन्त्विति आशंसावाक्यार्थः। अवस इति प्रथमा वहुवचनं सुपां सुपो भवन्तीत्येकवचनम्। करोमीति कुर्वन्त्विति प्राप्ते तिङां व्यत्ययेनोत्तमपु
रुषैकवचनम्। ततः कन्यावरयोरन्योन्यदर्शने पारस्करः ॐ अथैनां समीक्षयत्यघोरचक्षुरिति मन्त्रो यथा ॐ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सु-
मनाः सुवर्च्चाः वीरसूर्देवकामा स्योना शंनो भव द्विपदे शंचतुष्पदे सोमः प्रथमो विविदे गन्धर्व्वो विविद उत्तरः तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः सोमो
ऽददद्गन्धर्वाय गन्धर्वो ददग्नये रयिं च पुत्रांश्चादादग्निर्म्मह्यमथो इमाम् सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर यस्यामुशन्तः प्रहराम
शेफं यस्यामु कामा बहवो निविष्ट्यै। अस्यार्थः। हे कन्ये। अपतिघ्नी एधि भवेत्यर्थः। किंभूता अघोरचक्षुः। अघोरम्। अभीष्टफलं सौम्यं चक्षुः स्वपतिवि
षये यस्याः सा तथा। किंच पशुभ्यः शिवाः। गवादिभ्यः कल्याणकारिणी सुमनाः शोभनं अनुकूलं मनो यस्याः। सुवर्च्चाः शोभनदीप्तिः वीरसूः। वीर्यव
न्तं पुत्रं सूते इति वीरसूः। देवनं क्रीडनं कामयते या सा देवकामा। स्योना सुखिनी नः अस्माकं द्विपदे मनुष्यपरिजने संकल्याणकारिणी भव। इति किं
यापदं शिवा पशुभ्य इत्यादि समभिव्येव संबध्यते तथा चतुष्पदे अश्वादौ शं भव। इत्यमाश्वास्य कन्यां स्तुतिमाह तेतां सोमश्चन्द्रः प्रथमो जन्मसम-
य एव विविदे लब्धवान् गन्धर्व उत्तरः द्वितीयस्ते विविदे लब्धवान् ततस्तृतीयः पतिः अग्निः एवं स्त्रियः सुरैर्भुक्ता सोमगन्धर्ववह्निभिः सोमः
शौचं ददौ तासां गन्धर्वः शुभां गिरं पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यत इत्यभिप्रायः एवं तथानेनव तुरीयः पतिः। मनुष्यजाः। मनुष्यजातो ह
मित्यर्थः। किमिदानीं मन्नाम्नी मे नैषा प्राप्ता इत्याह सोम इमां गन्धर्वाय अददत् गन्धर्वोग्नये अददात् अग्निर्मह्यमिमाम्। अदात्। दत्तवान्। न केवलमि

मं०स मां रयिञ्च पुत्रमपि। पुत्रांश्च। पुत्रानपि अग्निर्मह्यम्। अदादिति सम्बन्धः सा इयं नो अस्मान् मा एरयन् रजतु। किंभूता पूषा हृद्धिकारिणी। पुनः किंभू
८४ ता शिवतमा अतिकल्याणा। किंच यस्यां त्वपि उशन्त इच्छन्तो वयं शेफमिन्द्रियं प्रहराम। प्रक्षिपामः सा त्वमूरू विहरस्व। किंभूतानो अस्मानुशती इच्छ
न्ती किंच यस्यान्त्वयि बहवः कामा अभिलषिताः निविष्टा निवेशिताः ततो राष्ट्रभृद्धोमे पारस्करः विवाहे राष्ट्रभृद्भिर्जुहोतीति तत्र मन्त्रो यथा ॐ ऋताषा
डृतधामाग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् अस्यार्थः। यो ग्निर्गन्धर्वः। गन्धर्वरूपः। तस्मै अग्नये स्वाहा वाट् सुष्टु वहन्त्वित्यर्थः। किं
भूतोग्निः ऋताषाट्। सत्यसहकृत इत्यर्थः। पुनः किंभूतः ऋतधामा। ऋतं सत्यं धाम स्थानमस्येति ऋतधामा किमर्थं तस्मै स्वाहा। स नो स्माकं इ
दं ब्रह्म ज्ञानं क्षत्रं वीर्यं च पातु रक्षतु गन्धर्वरूपायाग्नये सत्यसहिताय सत्यस्थानायास्माभिरिदमाज्यं दत्तं नोस्माकं ज्ञानं वीर्यञ्च रक्षत्वित्याशं
सा वाक्यार्थः। ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा अस्यार्थः। योयम्। ऋताषाडृतधामाग्निर्गन्धर्व इत्यु
क्तार्थं तस्याग्नेर्गन्धर्वस्य अप्सरस ओषधयः व्रीह्यादयः किंभूताः मुदो नन्द्या इत्यर्थः। ताभिः सर्वं मादयन्त इति मुदस्ताभ्य ओषधीभ्यः स्वाहा
स्वर्गतिर्भवतु। अग्निगन्धर्वाप्सरोभ्यो मुदो नामभ्यः ओषधीभ्यः। अस्माभिरिदमाज्यं दत्तम्। ता अस्माकं ज्ञानं वीर्यञ्च रक्षन्त्वित्याशंसा वाक्या
र्थः। संहितो विश्वसामा सूर्यो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् अस्यार्थः। यः सूर्यः। गन्धर्वः किंभूतः संहितः। दिवसं रात्रिञ्च
संदधातीति संहितः। पुनः किंभूतः विश्वसामा। सर्वसामवेदमयः। अन्यत्समानं संहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयो अप्सरस आ
युवो नाम ताभ्यः स्वाहा अस्यार्थः। तस्य सूर्यस्य गन्धर्वस्य अप्सरसो मरीचयो रश्मयः। आयुवो नाम आयुवन्ति योजयन्तीत्यायुवः आयुर्वर्धनाः [illegible]म
मा इत्यर्थः। अन्यत्समानम्। सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् अस्यार्थः। यश्चन्द्रमा गन्धर्वः-

किंभूतः। सूर्यरश्मिः। सूर्यस्य रश्मिः कतमो रश्मिः। सुषुम्णः सुषुम्णनामा अन्यत्सर्वं समानं सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुर-
यो नाम ताभ्यः स्वाहा। अस्यार्थः। तस्य चन्द्रमसो अप्सरसः नक्षत्राणि। किंभूतानि। भेकुरयो नाम। अन्यत्समानम् इषिरो विश्वव्यचा वातो गन्धर्वः स न इदं
ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् अस्यार्थः। यो वातो गन्धर्वः। किंभूतः। इषिरः गमनस्वभावः। पुनः किंभूतो विश्वव्यचाः सर्वगतः अन्यत्समानं इषिरो विश्वव्य-
चा वातो गन्धर्वस्तस्यापोऽप्सरस ऊर्जो नाम ताभ्यः स्वाहा अस्यार्थः। तस्य वातस्य गन्धर्वस्य अप्सरस आपो जलानि किंभूताः ऊर्जो नाम यासां अन्यत्समानम्
भुज्युः सुपर्णो यज्ञो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्। अस्यार्थः। यो यज्ञो गन्धर्वः किंभूतो भुज्युः। सर्वाणि भूतानि भुनक्ति। पालयतीति भुज्युः।
पुनः किंभूतः सुपर्णः। शोभनपर्णगतिरिति यावत्। अन्यत्समानम्। भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तावा नाम ताभ्यः स्वाहा अस्यार्थः।
तस्य यज्ञस्य गन्धर्वस्य अप्सरसः दक्षिणाः। किंभूताः स्तावा नामः दक्षिणायां दत्तायां यज्ञस्तव्यो भवतीति स्तावाः अपरं समानम् प्रजापतिर्विश्वकर्मा मनो
गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्। अस्यार्थः। यन्मन इन्द्रियं गन्धर्वः। किंभूतः प्रजापतिः। प्रजानां पतिरीश्वरः किंभूतः। विश्वकर्मा। विश्वं क-
र्म यस्य स तथा व्यापारेण विश्वस्य निर्म्माणात् अन्यत्समानम् प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरस एष्टयो नाम ताभ्यः स्वाहा अस्य-
मनसो गन्धर्वस्याप्सरसः ऋक्सामानि। ऋचः सामानि चेति। किंभूतानि एष्टयो नाम। आ इष्टिः। इष्टिरिच्छा उच्चारीच्छया रागादिमत् प्रयुक्तौ उच्चादिः सं-
पद्यत इत्यभिप्रायः। अन्यत्समानम् ततो जयाहोमे पारस्करः। स जयाख्यानां नाम्नेति तत्र चित्तमित्यादि त्रयोदश मन्त्रा यथा। अत्र शेषपठितप्रजापतिर्जया-
निन्द्रायेत्यादि मन्त्रे मध्ये प्रजापतिर्जयं इन्द्राय लिप्साशंसा भविष्यतीति सैवात्रापि मन्त्रे चकारेण समुच्चितम् चित्तञ्च ज्ञानञ्च ममास्तु इदालिप्साशंसा वाक्यार्थः
। चित्तिः परिच्छेदः। आकूतञ्च। आभिमुख्यम्। आकूतिश्च आत्मनो धर्मविशेषो येन प्रेरणं क्रियते विज्ञानञ्च शिल्पादिज्ञानम्। विज्ञानिश्च विज्ञातार्थः

पा॰ सू॰ मनस्त्वप्रसिद्धम्। शक्करी त्वप्रसिद्धः। बृहच्च साम तच्छेषः। वाक्यार्थस्तु प्रथममन्त्रे सर्वेषामुक्त एव प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु
८५ तस्मै विशः समानन्तः सर्व्वाः स उग्रः स इह्व्यो बभूव स्वाहा। अस्यार्थः। प्रजापतिरिन्द्राय जयान् प्रायच्छत् दत्तवान् कस्मै इन्द्राय वृष्णे वृषनाम्ने किंभू-
तः। प्रजापतिः। पृतनाजयेषु। उग्रः विपक्षसेनाजयेषु। विपक्षतेजोभिभावी इन्द्रो वराजः। तस्मै प्रजापतिर्जयं दत्तवानिति कथमेतत् हि यतः कारणात्।
तस्मै प्रजापतये। सर्वा विशः प्रजाः समनन्तः सम्यक् प्रणामं कृतवत्यः यश्च प्रजापतिः उग्रो बभूव हव्यद्रव्याहो बभूव प्रजापतिः स्वयं विपक्षविजयी लोक-
स्य नमस्करणीयः सर्वतेजोभिभावी हव्यद्रव्यार्हश्च इन्द्राय जयान् प्रदत्तवानिति प्रजापतिस्तुतिर्वाक्यार्थः। इदं स्तुत्वा हुतिदानेन तुष्टो मह्यं जयं ददात्विति
त्वभिप्रायः। ततोभ्यातानहोमे पारस्करः जयाभ्यातानानां ज्ञानमिति तत्राष्टादशमन्त्रा यथा। अग्निर्भूतानामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्ष-
त्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां स्वाहा। अस्यार्थः। योग्निर्भूतानामधिपतिः प्रभुः। स माम्। अवतु। पालयतु। कुत्र कुत्र। अ-
स्मिन् कर्मणि ब्रह्मण्ये। अस्मिन् क्षत्रे। वीर्ये। अस्यामाशिषि आशिष्यर्थे। अस्यां पुरोधायाम्। पुरःस्थितायां कन्यायाम्। अस्मिन् कर्मणि विवाहे। अस्यां देव-
हूत्यां देवानां हूतिराह्वानं देवहूतिः तस्यां प्राणिनामधिपतिरग्निर्मां ब्रह्मण्यादिषु पालयत्विति आशंसा वाक्यार्थः। इन्द्रो ज्येष्ठानामधिपतिरित्यादि। य इन्द्रो ज्ये-
ष्ठानामधिपतिः श्रेष्ठानामधिपतिरित्यादि व्याख्यानम्। यमः पृथिव्या अधिपतिरित्यादि। यो यमः पृथिव्या अधिपतिरिति च तथैव वायुरन्तरिक्षस्याधिपति
रिति यो वायुरन्तरिक्षस्याधिपतिरन्यत्समानम्। सूर्यो दिवोधिपतिरिति यः सूर्यो दिवः स्वर्गस्याधिपतिरन्यत्समानम्। चन्द्रमा नक्षत्राणामधिपतिरित्यादि य
श्चन्द्रमा नक्षत्राणामधिपतिरन्यत्समानम्। बृहस्पतिर्ब्रह्मणोधिपतिरित्यादि यो बृहस्पतिर्ब्रह्मणो देवस्याधिपतिरित्यादि मित्रः सत्यानामधिपतिरित्यादि राम
यो मित्रः सत्यानामविनाशिनामधिपतिरन्यत्समानं वरुणोऽपामधिपतिरित्यादि यो वरुणः अपाम्। पानीयानामधिपतिरन्यत्समानं अन्नं साम्राज्यानाम्

धिपति तन्मावत्वित्यादि यत्। अन्नं साम्राज्यानामैश्वर्य्याणामधिपति। शेषं समानं। सोम ओषधीनामधिपतिरित्यादि यः सोम ओषधीनां व्रीह्यादीनाम्।
अधिपतिरन्यत्समानं सविता प्रसवानामधिपतिरित्यादि यः सविता प्रसवानां प्रसूतिधर्म्मिणामधिपतिरन्यत्समानम् रुद्रः पशूनामधिपतिरित्यादि यो रुद्रः
पशूनां देवानामधिपतिरन्यत्समानम्। त्वष्टा रूपाणामधिपतिरित्यादि यस्त्वष्टा रूपाणामधिपतिरन्यत्समानम्। विष्णुः पर्व्वतानामधिपतिरित्यादि यो वि-
ष्णुः पर्व्वतानामधिपतिरन्यत्समानम् मरुतो गणानामधिपतयस्ते मावन्त्वित्यादि ये मरुतो वायवो गणानां समूहानामधिपतयस्ते मामवन्त्वन्यत्समानम् पि-
तरः पितामहाः परे वरे तताः स्ततामहा इह मावन्त्वित्यादि ये पितरः पितामहाः परे अवरे तताः प्रपितामहाश्च पूर्व्वे पुनः तताः तस्मादपि पूर्व्वे ततामहाः तस्मादपि
पूर्व्वे एवं षट्पुरुषा उदाहृताः पित्रादिषु प्रत्येकं वचनं गौरवार्थमिहास्मिन् भूलोके मामवन्त्वित्यादिरन्यत्समानम्। ततः पुनराज्यहोमे पारस्करः मन्त्रो यथा
अग्निरेतु प्रथमो देवानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघन्न रोदात् स्वाहा अस्यार्थः। अग्निरेतु आगच्छतु।
किंभूतो देवानां प्रथमः। इन्द्रादीनां मुख्यः। आगतश्च सोऽग्निः अस्यै अस्याः कन्यायाः प्रजां पुत्रादिकं मुञ्चतु मोचयतु। कुतः मृत्युपाशात् मृत्योर्म्मरणात् पाशाद्ब-
न्धनात् तन्मृत्युपाशं अयं वरुणो राजा अनुमन्यतां तत्रायमनुमतो भवत्वित्यर्थः। किमर्थमेतत् यथा इयं स्त्री पौत्रमघं पुत्रभवं दुःखं न रोदात् न रोदितु। अग्नि-
रागतस्य वरुणस्यानुमतौ अस्याः कन्यायाः पुत्रादिकं मृत्योः पाशाद्विमोचयतु। यथेयं कन्या पुत्रादिदुःखेन मा रोदीदिति संक्षेपवाक्यार्थः। अत्र अस्यै इति ष-
ष्ठ्यर्थे चतुर्थी रोदादिति रुदिर। अश्रुविमोचने इत्यस्य लोट्प्रत्ययेन रूपम्। इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः अशून्योपस्था जीवताम-
स्तु माता पौत्रमानन्दमभिविबुध्यतामियं स्वाहा। अस्यार्थः गार्हपत्योऽग्निः। इमां कन्यां त्रायतां रक्षतु यथा अस्यै कन्यायै प्रजां पुत्रादिं नयतु प्रापयतु तथा
दीर्घमायुश्च नयतु तथा सति इयं अशून्योपस्था अस्तु नित्यं भर्तृसङ्गता भवतु तथा जीवतां माता अस्तु तथा पौत्रम्। आनन्दमभिविबुध्यतां पुत्रभवं सुखं

ग्रा॰सं॰ सर्वतोभावेनानुभवतु अग्निः ते यंदीर्घायुः सुभगा जीववत्सा भवतु इत्याशंसा वाक्यार्थः । स्वस्ति नो अग्ने दिव आ पृथिव्या विश्वानि धेह्ययथा यजत्र • यदस्यां महि दि
८६ वि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रम् । अस्यार्थः । हे अग्ने किंभूत । यजत्र । यजन्तं त्रायत इति यजत्र नोऽस्माकं स्वस्ति कल्याणं निधेहि । धारय । कथम् ।
अयथाक्रममव्यतिरेकेण एकदेवेत्यर्थः । किंभूतानि विश्वानि • सफलानि । कुत्र कुत्र । दिवि आकाशे । पृथिव्या भूम्यां च । किंच यद्द्रविणं धनं प्रशस्तं श्लाघ्यं त-
द् अस्मासु धेहि • किंभूतं • अस्यां महि पृथिव्याम् । दिवि स्वर्गे जातमुत्पन्नम् पुनः किंभूतम् । चित्रं नानारूपम् । गोहिरण्यादि । हे अग्ने सकलकल्याणनिध-
नामिवास्मासु धेहीत्याशंसा वाक्यार्थः । अत्र च दिवा पृथिव्या इति च सप्तम्यां तृतीया ॐ सुगं नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्येह्यजरन्न आयुः । अपैतु मृत्यु
रमृतं म आगात् । वैवस्वतो नो अभयं कृणोतु नः स्वाहा । अस्यार्थः । नुभो ज्योतिष्मज्ज्योतिषां मध्ये सारभूत अग्ने इति यावत् नोऽस्माकं पन्थाः पन्थानं प्रदिशन्न उप
दिशन् एहि आगच्छ । किंभूतं पन्थानं सुगम् । सुष्ठु गम्यत इति सुगम् । तथा नोऽस्माकमायुर्जीवितं । अजरन् । अहापयन् । एहि त्वय्यागते नोऽस्माकं मृत्युरपैतु ।
अपगच्छतु । अत्र मन्त्रान्तरस्थः परं मृत्युरिति पदेन योज्यं तथा मे मम अमृतं मोक्ष आगात् आगच्छतु तथा वैवस्वतो यमः । नोऽस्माकम् । अभयं कृणोतु । करोतु हे
अग्ने अस्माकं उत्कृष्टवर्त्म प्रदिशन् आयुश्च अहापयन् । आगच्छ । त्वय्यागते अस्माकं मृत्युरपगच्छतु मोक्षो भवतु यमाच्च भयमपगच्छत्वित्याशंसा वाक्यार्थः
ॐ परं मृत्यो अनु परेहि पन्थां यस्ते अन्य इतरो देवयानात् चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् स्वाहा त्रिष्टुप् । मृत्युर्देवता हे मृत्यो परं पन्था
न कुत्र स्थानम् । अहिंसकात्मकं । अनु इति अनुगच्छते । तव यो अन्यः पन्था अहिंसातो यो न्यो लोकहिंसात्मकः इत्यर्थः । तं पन्थानं परा इति परा इतं गच्छ किंभूतो
यो देवयानात् । इतरः । अन्यो यो देवयानात् धर्मिष्ठो अन्यः केनाप्यनेन देवेनानुगतो यो पन्था इत्यर्थः । अथवा । एतेदेव ततव प्रब्रवीमि किंभूताय ते । चक्षुष्मते राम
पश्यते सकललोकव्यवहारं दृष्टवतः । शृण्वतः किं प्रब्रवीमि नोऽस्माकं प्रजा रीरिषः । अस्मत्संबन्धिनीं प्रजां मा हिंसय । उत । अपि च वीरान् पुत्रान् मा रीरिषः स्वा ८६

ब्रा॰स॰ न्विद्यावहैबहून्तेसन्तुजरदष्टयःसंप्रियौरोचिष्णूसुमनस्यमानौपश्येमशरदःशतंजीवेमशरदःशतम्। अस्यार्थः। तेनत्वंहस्तंगृह्णामिकिमर्थं।सौभगत्वा
८७ यसौभाग्याययथामयापत्याजरदष्टिः।आसः।हेवधुभवसीत्यर्थःस्वयमेवकिंगृह्णामीत्याकाङ्क्षायामाहत्वात्वांमह्यंदेवाःअदुःदत्तवन्तःकेनदेवाः।भगः।
अर्यमासविताचदेवःपुरन्धिःसर्वैरेवसंबध्यते।किंभूतांत्वांगार्हपत्याय गृहस्थाधिकारिणींकिमर्थम्।अदुःगार्हपत्यायगृहप्रतिपालनाय।किंभूतोहम्।त्वांच
किंभूतांअहं।अमः।अस्मि मालक्ष्मीरस्यनास्त्रीसमः सात्वंलक्ष्मीः।त्वयाविनारूप्याशास्त्रोहम् त्वंममलक्ष्मीरितिभावः।सात्वमस्यमोहमितित्वनरभिधान
मादरातिशयार्थंतथाअहंसामअस्मि।सामवेदोस्मि।ऋक्त्वम्।त्वंऋग्वेदः।अहंद्यौःस्वर्गः।त्वंपृथिवी।ततस्त्वमेहिअभिमुखीभवतौआवांविवहावहै।वि
वाहंकरवावतथासहरेतः।शुक्रंसहदधावहै।धारयाव।प्रजांसन्ततिंप्रजनयावहैउत्पादयावबहून्पुत्रान्विद्यावहैप्राप्नुवनेपुत्राजरदष्टयःसन्तुदीर्घायुषो
भवन्तु।किंच।आवांशरदःशतंपश्येमःपश्यावः।किंभूतौ।संप्रियौअन्योन्यानुरक्तौ।रोचिष्णूदीप्तियुतौसुमनस्यमानौसौमनस्यंकुर्वाणौजीवेमशरदःशत
म्।शृणुयामशरदःशतमितिव्यक्तार्थंसवित्रादिभिर्देवैर्दत्तायालक्ष्मीभूतायास्त्वावहस्तंसौभाग्यायदीर्घायुष्ट्वाय।पुत्राययेअविकलेन्द्रियत्वायच
गृह्णामीतिवाक्यार्थः।अत्रगृह्णामीत्यत्रगृहधातोर्हं ग्रहोर्भश्छन्दसिहस्येतिभकारः।पुरन्धिरितिद्वितीयायांप्रथमापश्येमजीवेमशृणुयामइतिद्वि
वचनेबहुवचनानिततःकन्यायाअश्मारोहणंपारस्करः अथैनामश्मानमारोहयत्युत्तरतोग्नेर्दक्षिणपादेनआरोहेममश्मानमिति।तत्रमन्त्रोयथाआरोहेम
मश्मानमश्मेवत्वंस्थिराभव।अभितिष्ठपृतन्यतोऽवबाधस्वपृतनायतः।अस्यार्थः।हेकन्येत्वम्।इममश्मानमारोहआक्रम।किमर्थम्।अनेनाश्मारोहणेनत्वं
स्थिराभव।कइव।अश्माइव।किंचपृतन्यतः।त्वमविषहतयाआत्मनःपृतनांसेनामिच्छतःपुरुषान्अभितिष्ठ।अभिभूयतिष्ठ।किंचपृतन्यतः।त्वत्पतिप्रत- राम
याआत्मनःपृतनांसेनामिच्छतःपुरुषान्अभितिष्ठ।अभिभूयतिष्ठ।किंचपृतनायतः ईदृशानेवअवबाधस्वबाधस्व।त्वंस्वपर्यायेणपतिपक्षाभिभवार्थमितिप- ८७

ध्रुवाधनार्थं चरमं भस्तरमारोहेतिवाक्यार्थः इत्यन्तरं इति कर्क्कवृत्तस्तनस्यन् किलोपरलाकास्तो पः कृतनायत इनिलोहितादिगणे पठितः। ततो गाथागानं पा-
रस्करः। अथ गाथां गायति। सरस्वति प्रेदमव सुभगे इति। तत्र मन्त्रो यथा। सरस्वति प्रेदमव सुभगे वाजिनीवति यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः। यस्यां
भूतं समभवद्यस्यां विश्वमिदं जगत् तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः। अस्यार्थः। हे सरस्वति यां त्वां प्रगयामि उत्कीर्त्तयामीत्यर्थः। सा त्वं इदं वि-
वाहकर्म प्र अव प्रकर्षेण पालय। किंभूते सुभगे मनोहरे पुनः किंभूते। वाजिनीवति। वाजिनी घोटिका सा यस्यास्ति सा यथा शीघ्रं याति। तथा त्वमपि कीर्त्तिरूपशी-
घ्रं यासीत्यर्थः। कुत्र यासीत्याकाङ्क्षायामाह। अस्य भूतस्य प्राणिजातस्याग्रतः। किंभूतस्य। विश्वस्य सर्वस्य। कीदृशीं तदा नं यस्यां सरस्वत्यां भूतम्। इति प्रथमे-
मेवा यत्का कार्यात्मकः समभवत्तत्त्वस्यमभूत्। तथा यस्यां इदं विश्वम्। जगत्समभवत् तां गाथां गाथालिकाम्। अद्य इदानीं गास्यामि। गायामि स्त्रीणां की-
र्त्तिभूता। इत्येवं रूपया गाथया सरस्वतीं स्तुत्वा सामवेदम् विवाहकर्म जनप्रसादकृता गृह्यमन्त्रपाठतः पालयत्विति वाक्यार्थः। प्रगयामीति। गै शब्दे। आत्मनेप-
संज्ञेइस्य प्रगानं। तत्करोतीति णिच् लेट् उत्तमपुरुषैकवचनम्। गास्यामीति वर्त्तमाने लट्। ततो वरवध्वोरग्निपरिक्रमणं पारस्करः अथ परिक्रमेत। तुभ्यमग्ने पर्य्य-
वहन्निति। मन्त्रो यथा ॐ तुभ्यमग्ने पर्य्यवहन्सूर्य्याम्वहतुना सह पुनः पतिभ्यो जायां दा अग्ने प्रजनया सह अस्यार्थः। हे अग्ने अग्रे प्रथमं सूर्य्यां सूर्यवत् कान्तिशालि-
नीमेतां कन्यां तुभ्यं पर्य्यवहन् त्वं विवाहितवानित्यर्थः। एवं त्वया सह पुनश्च मनुष्यो वहतु विवाहयतु ततश्च पतिभ्यः। मनुष्यं पतये एतां जायां दा देहि प्रजया सह सन्तत्या
सहेत्यर्थः। अयं वाक्यार्थः। हे अग्ने त्वया प्रथमं विवाहिता त्वत्तैव जाया असौ न इदानीं सन्तत्या सह मनुष्याय एनां जायां देहीति दा इति लोट् सिपि। ततस्तुर्य्यहो-
मे पारस्करः शूर्पकुष्ठया सर्वान्लाजानावपति। भगाय स्वाहेति तत्र मन्त्रो यथा। भगाय स्वाहा कामाय सुहुतं भवत्वित्यर्थः। ततः प्रजापतये स्वाहेति आज्यहोमः। ततः स-
सपदाक्रमणे पारस्करः अथैनामुदीचीं सप्तपदानि प्रक्रामयत्येकमिष इत्यादिसप्तभिर्मन्त्रैः। तत्र मन्त्रा यथा। एकमिषे विष्णुस्त्वा नयतु एतेषु सप्तस्वपि मन्त्रेषु से

ग्रा॰ स॰ निवर्त्स्यमानसंबोधनपरं संबध्यते । हे सखे त्वां एकपदं विष्णुर्नयतु किमर्थम् । इषे । ईप्सितं अन्नगत्यर्थं भुवि विष्णुस्त्वामेकं पदं अभीष्टलाभार्थं नयत्विति आशंसा वाक्यार्थः । हे
८८ ऊर्जे विष्णुस्त्वा नयतु हे सखे त्वां द्विपदे विष्णुर्नयतु किमर्थं ऊर्जे बलाय त्रीणि रायस्पोषाय धनवृद्धये चत्वारि मायोभवाय विष्णुस्त्वा नयतु हे सखे त्वां चत्वारि पदानि त्वां वि
ष्णुर्नयतु किमर्थं मायोभवाय । मायः सौख्यं तस्य भवः उत्पत्तिस्तदर्थम् । पञ्च पशुभ्यो विष्णुस्त्वा नयतु । हे सखे पञ्च पदानि त्वां विष्णुर्नयतु किमर्थम् पशुभ्यो गवादिभ्यः
षड् ऋतुभ्यो विष्णुस्त्वा नयतु हे सखे त्वां षट् पदानि विष्णुर्नयतु किमर्थं ऋतुभ्यः ऋतुसमयप्राप्तये । सखे सप्तपदा भव सना मामनुव्रता भव । मम व्रतमनुपालयन्ती भव भूया
इति मम लोकप्राप्तये पतिव्रता ता च सप्तमं पदं विष्णुर्नयत्वित्याशंसा वाक्यार्थः । ततो निष्क्रकलशस्थजलेन वधूवरयोरभिषेचनं पारस्करः ततएनां मूर्द्धन्यभिषिंचति ।
आपः शिवाः शिवतमा इति । तत्र मन्त्रो यथा आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् । अस्यार्थः । या आपः शिवाः कल्याण्यः शिवतमाः अ
तिशयेन कल्याण्यः । शान्ताः अनुपद्रवकारिण्यः शान्ततमाः । अतिशयेन शान्ताः । ता आपः । ते तव भेषजम् । रोगनाशनं कृण्वन्तु सकलदोषविमुक्ता आपस्तव रोगना
शनं कुर्वन्त्विति वाक्यार्थः । कृण्वन्त्विति कृवि हिंसाकरणयोश्चेत्यस्य धातोः ॥ ततः पुनस्तेनैवोदकेन पारस्करः आपोहिष्ठेति च तिसृभिरिति तत्र मन्त्रो यथा आपो
हिष्ठा मयोभुवस्तान ऊर्जे दधातन महेरणाय चक्षसे यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनय
था च नः अस्य व्याख्यानं पूर्वस्य मारभ्या दिक्षु मातः स्नानेऽनुसन्धेयमिति । तस्य सूर्याविसर्जनं पारस्करः अथैनां सूर्यमुदीक्षयति तच्चक्षुरिति तत्र मन्त्रो यथा । तच्चक्षुर्दे
वहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम् अस्य व्याख्यानं स्नानादिकमुपनयनेनानुसन्धेयमिति । ततो वरेण कन्यायाः हृदयाल
भनं पारस्करः अथास्यै दक्षिणांसमधि हृदयमालभते मम व्रतेत इति । तत्र मन्त्रो यथा । मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व पत्र
प्रजापतिस्त्वा नियुनक्तु मह्यम् अस्यार्थः । हे कन्ये ते तव हृदयं मम व्रते निष्ठापये दधामि तत्पर्यया मित्यर्थः । तथा तनितेन तव चित्तं अनु अस्तु मम चित्ता ८८

कूलं भवतु तथा मम वाचं वाक्यं त्वं एकचित्ता सती जुषस्व सेवस्व मदीयवचनकरा भवेत्यर्थः। तथा प्रजापतिस्त्वा मह्यं नियुनक्तु नियोजयतु त्वं प्रजापतिनाम त्वां नियु
नक्तु मयापि पतिव्रता त्वं स्थापित हृदया मम चित्तानुकूलचित्ता मदेकचित्ता च मम वाचं सेन स्वेत्यनुशासनं वा कार्यः। ततो वरस्य कन्याभिमन्त्रणे पारस्करः।
अथैनामभिमन्त्रयते सुमङ्गलीरियं वधूरिति। मन्त्रो यथा। सुमङ्गलीरियं वधूरिमां समेत पश्यत सौभाग्यमस्यै दत्त्वा याथास्तं विपरेतन अस्यार्थः। हे सभ्याः इयं व
धूः सुमंगलीः शोभनमङ्गलयुक्ता। इमां इत्थम् भूतां समेत सङ्गच्छत तथा इमां पश्यत आलोकयत अस्यै सौभाग्यं दत्वा यद्दत्वा। अथ अनन्तरम्। अस्तं विपरेत
न गच्छत। इमां मङ्गल्यां सङ्गम्य दृष्ट्वा अस्यै सौभाग्यं च दत्वा स्वस्थानं गच्छतेति वा कार्यः। अत्र दत्वाय इति क्त्वाय विपरेतन इति इण गतौ वि पर्व्व पराः पूर्व्वः
त मनमन पथा नाश्वे तिलोऽ मध्यम उरुष व हुवचनस्य तन प्रतनो वरः कन्या मुत्तोल्य लोहिते चर्म्मणि उपवेशयत तथा च पारस्करः अनुडुहे चर्म्मण्यु
पवेशयतीह गावो निषीदन्त्विति मन्त्रो यथा। इह गावो निषीदन्तु इहाश्वा इह पुरुषा इहो सहस्रदक्षिणो यज्ञ इह पूषा निषीदतु अस्यार्थः। इह वृषच
र्म्मणि त्वया उपविशन्त्या सह। गावः निषीदन्तु उपविशन्तु तथा इह अश्वाः निषीदन्तु। इह पुरुषाः परिजनमनुष्या निषीदन्तु न त्वस्थान इयेऽ आदिपद
स्थितं क्रियापदमनुषंजनीयं इह रुक्ष्यर्थः। यज्ञो पि निषीदतु किं भूतः सहस्रदक्षिणाः अत्र मन्त्रान्तस्थितं निषिदत्विति क्रियापदमनुषंजनीयं तथा
इह पूषा पुष्टिकारी आदित्यः निषीदतु गोऽश्वपरिजनयज्ञादिभिः। सहत्वमिह वलीवर्द्द चर्म्मणि उपविशेति वा कार्यः। ततो वरेण कन्याया ध्रुवावेक्षणे पार
स्करः अस्तमिते ध्रुवं दर्शयति ध्रुवमसीति। मन्त्रो यथा ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि मह्यं त्वादात् बृहस्पतिर्म्मया पत्या प्रजावती संजीव श
रदः शतं। अस्यार्थः। हे वधू ध्रुवमसि अविनाशिनी निश्चसित्वा तां ध्रुवं त्वद्रूपं पश्यामि दर्शयामि किमर्थम् त्वमपि ध्रुवा स्थास्त्वनी पोष्या एधि पोषणीया
भव इत्येतदर्थम्। किंच बृहस्पतिः त्वा त्वां मह्यम्। अदात् दत्तवान्। तथा सति त्वं प्रजावती पुत्रादिसहिता मया पत्या सह शरदः शतम् शतं वर्षाणि जीव

वा॰स॰ त्वंमयि शाश्वतीभवेदित्येतदर्थम् मयादर्शितध्रुवाबृहस्पतिनामह्यंदत्ता शतवर्षाणिजीवेत्याशंसावाक्यार्थः। अत्रध्रुवमितिस्त्रीलिङ्गत्वेमासेनपुंसकलि
८६ ङ्गत्वंपश्यामीत्यन्तर्भावितण्यर्थः। इतिविवाहः। अथचतुर्थीकर्म्ममन्त्रव्याख्यातत्रपञ्चाज्याहुतिहोमेपारस्करः आज्यभागाविष्ठाज्याहुतिर्जुहोति। ॐ
अग्नेप्रायश्चित्तइत्यादितत्रमन्त्रोयथा। अग्नेप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउपधावामियास्यैपतिघ्नीतनूस्तामस्यैनाशय
स्वाहा। हेअग्नेकिंभूतप्रायश्चित्तेसकलदोषापकरणस्वरूपत्वंदेवानामिन्द्रादीनांप्रायश्चित्तेदोषापकर्त्ताअसिभवसिअतःकारणाद्ब्राह्मणोहन्त्वात्वा
म्। उपधावामि। उपसर्प्पयामिकिंभूतः। नाथकामः याञ्चकामःयाञ्चार्थमुपसर्प्पयामित्यर्थः। कायाज्याअस्यै। अस्याःकन्यायाः यातनूःपतिघ्नीपतिहिंसक
म् यद्दंगमस्यैतांतदर्थंनाशय अपकुरु। हेअग्नेःप्रायश्चित्तस्वरूपदेवानामपिदोषापकर्त्तात्वमेवेतिस्तुतिपूर्व्वकंब्राह्मणोहंत्वामुपसर्प्पयामीत्युपस
र्प्यअस्याःपतिविरोधकाङ्गलक्षणंनाशयेतियाञ्चावाक्यार्थः। अस्यैइतिषष्ठ्यर्थेचतुर्थी ॐ वायोप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वा
नाथकामउपधावामियास्यैप्रजाघ्नीतनूस्तामस्यैनाशयस्वाहा अस्यार्थः हेवायोअस्याःयाप्रजाघ्नी॰सन्तानविरोधिनीअपरंसमानं सूर्य्यप्रायश्चित्तेत्व
देवानांप्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकामउपधावामियास्यैपशुघ्नीतनूस्तामस्यैनाशयस्वाहा अस्यार्थः हेसूर्य्यअस्यायापशुघ्नीगवादिविरोधिनी
अपरंसमानम् चन्द्रप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउपधावामियास्यैगृहघ्नीतनूस्तामस्यैनाशयस्वाहा। अस्यार्थः हेचन्द्र
अस्यायागृहघ्नीगार्हपत्यविरोधिनी अपरंसमानम् गंधर्व्वप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउपधावामियास्यैयशोघ्नीतनू
स्तामस्यैनाशयस्वाहा। अस्यार्थः हेगंधर्व्वयशसःप्रकाशकारकयाअस्यायशोघ्नीयशोविरोधिनीअपरंसमानम्॥ सूर्य्यप्रायश्चित्तेत्वंदेवानांप्रायश्चि राम
त्तिरसि ब्राह्मणस्त्वानाथकामउपधावामियास्यैपशुघ्नीतनूस्तामस्यैनाशयस्वाहा। अस्यार्थः हेसूर्य्यअस्यायापशुघ्नीगवामधिविरोधिनी अपरंसमम् ८६

पत्नं अर्थे आहुतिशेषसहितपूर्वस्थापितजलेन कन्याभिषेके पारस्करः। ततएनां मूर्द्धन्यभिषिंचति यातेपतिघ्नीरिति। तत्रमंत्रो यथा यातेपतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता यातनूर्जारघ्नी ततएनां करोमि साजीर्य्य त्वंमयासहासौ। अस्यार्थः हे असौ अमुके तव यातनूर्निन्दिता दोषावहा तां एनां तनूं जारघ्नी जार उपपतिः तद्घातिनीं करोमि का सा निन्दिता पतिघ्नी पशुघ्नी गृहघ्नी यशोघ्नी एतद्रूपा हतमेव अनेनाभिषेककर्म्मणा सा त्वं मया सहजीर्य्य त्वं जरां प्राप्नुहि दीर्घायुर्भवेत्यर्थः अनेनाभिषेककर्म्मणा त्वं मयाहत शरीरदोषा सहदीर्घायुर्भवेदिति वाक्यार्थः। ततः कन्यायाः स्थालीपाकप्राशनं पारस्करः अथैनां स्थालीपाकं प्राशयति प्राणैस्ते प्राणान् संदधाम्यस्थिभिरस्थीनि मांसैर्म्मांसानि त्वचा त्वचमिति हे कन्ये तेतव प्राणान् प्राणैः संनिहितंवायोर्म्यं मदीयैरिति बोद्धव्यम् संदधामि योजयामि तथा तेऽस्थीनि अस्थिभिः संदधामि तथा च मांसैर्म्मांसानि तथा ते त्वचं संदधामि· अनेन स्थालीपाकप्राशनेन कर्म्मणा मया सह तव एकप्राणत्वैकास्थित्वैकमांसत्वैककर्मत्वानि करोमीति वाक्यार्थः। इत्यावसथिकमहाधर्मोपि कृतश्रीहलायुधकृतौ ब्राह्मणसर्वस्वे दशकर्ममंत्रव्याख्या। मैथिलपुस्तकम्। विश्वं प्रयस्याप्ययमाप्नपासो वर्त्मामलं शंसति कृष्णवर्णा तापत्रयं यो दहनश्छिनत्ति सावित्रभानुर्भवतः पुनातु। योगौ उवसुधाधीशधर्म्माध्यक्षो हलायुधः। स्मार्त्ताग्निपद्धते रेष निबंधस्तेन निर्म्मितः॥ आधानाद्यन्तकालेष्टिपर्यन्तोऽपि मतां विधिः तात्पर्य्य· तपि मंत्राणामर्थोऽप्यत्र प्रकाशितः अथावसथ्याधाननिबंधः तत्राग्निपरिचर्य्याफलम्। पद्मपुराणे। त्रीनग्नीनथवैकं वा योहन्यहनि सेवते सर्वभूतदया पन्नो न प्रेतो जायते नरः। वायुपुराणे। दर्शश्च पौर्णमासश्च येयजन्ति द्विजातयः नतेषां पुनरावृत्तिर्ब्रह्मलोकात्कथंचन। यमः। नाग्निहोत्रात्परो धर्म्मो नाग्निहोत्रात्परं तपः नाग्निहोत्रात्परो दमः। वर्था। सुहुतान्यग्निहोत्राणि नयंति परमां गतिम् अत्र स्वर्गश्च मोक्षश्च योयथा गन्तुमिच्छति। जाबालिः। सन्तोषा पामृतमासाद्य तन्मनाधर्म्मविन्नरः। अकामेनाग्निहोत्रस्य होतास्वर्ज्योतिराप्नुयात् देवलः अग्निहोत्रं समादाय जीविकार्थमपि त्यजेत् सर्वदेवास्तदस्मा·

हिलोकेब्राह्मणजन्म च। अथाग्न्याधानाकरणदोषाः। तत्र कूर्म्मपुराणम्। त्रयाणामिह वर्णानां गृहस्थाश्रमवासिनाम्। नास्तिक्यादथवालस्याद्योऽग्निं
नाधातुमिच्छति। यजेत वा न यज्ञेन स याति नरकान् बहून् तामिस्रमन्धतामिस्रं महारौरवरौरवौ। कुम्भीपाकं वैतरणीमसिपत्रवनं तथा। अन्यांश्च नर-
कान् घोरान् प्राप्यन्ते स्वधर्म्मभिः। अन्त्यजानां कुले विप्रः शूद्रयोनौ प्रजायते। तस्मात्सर्व्वप्रयत्नेन ब्राह्मणो वै विशेषतः। आधायाग्निं विशुद्धात्मा यजेत
परमेश्वरम्। भविष्यपुराणम्। वेदैरुक्तं यथा वीरं सुस्त्येष्टमुपेत्य वै। अस्मान् ये ब्राह्मणा भूमौ अभ्यसन्ति ह्यनग्निकाः। क्लिश्यन्ति ते सदा सर्वे मूढा वै फलकां-
क्षिणः। अनुष्ठानविहीनानामस्मानभ्यसतां भुवि। क्लेशो हि केवलो देव नास्मदभ्यसने फलम्। अनुष्ठानं परं देव अस्मदभ्यसनात्सदा। इत्येवं राजशार्दूल वे-
दाश्चतुर्हि वेधसम्। व्यासशातातपौ योऽगृहीताविवाहाग्निं गृहस्थ इति मन्यते। अन्नं तस्य न भोक्तव्यं वृथापाको ह्यसौ भवेत्। अथानाहिताग्निप्राय-
श्चित्तम्। गोवधो याज्यसंयाज्यं पारदारात्मविक्रयम्। अनाहिताग्निता स्तेनं ऋणानां चानपक्रिया। असच्छास्त्राभिगमनं कौसीनव्यस्य च क्रिया। धान्य-
कुप्यपशुस्तेयं मद्यपस्त्रीशूद्रविट् क्षत्रवधो नास्तिक्यं चोपपातकम् गोवधप्रायश्चित्तानन्तरं मनुः एतेदेवव्रतं कुर्युरुपपातकिनो द्विजाः। अव-
कीर्णिवर्ज्यं शुद्ध्यर्थं चान्द्रायणमथापि वा। तत्र चाग्निग्रहणाधिकारिणा ब्राह्मणेन चिरं कालमकृताग्न्याधानेन गोवधोक्तोपपातकप्रायश्चित्तं। अ-
ल्पकालमकृताग्न्याधानेन तु चान्द्रायणं कृत्वा आवसथ्याध्यानं करणीयमिति। एतत्तु प्रायश्चित्तं सहोदरस्य ज्येष्ठस्याग्निमत्वे सति वोढव्यम्। ज्ये-
ष्ठस्याग्निमत्वे सति वोढव्यम्। ज्येष्ठस्यानग्निमत्वे अग्निग्रहणे दोष एव श्रूयते। तथा च यत्नपार्श्वः ज्येष्ठे तु सति निर्दोषि कनीयान् योऽग्निमान् भवेत्
परिवेत्ता भवेत्तस्य ब्रह्महत्या न संशयः। मनुः। दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः। परिवित्तिः प-
रिवेत्ता च यया च परिविद्यते सर्वे ते निरयं यान्ति दातृयाजकपञ्चमाः। अथाग्न्याधानकालाः। तत्र वक्तृगत्यपरिशिष्टं। जातकर्म्मणि चेत् गृही

तोऽप्यसमावर्त्तनादग्निंपरिगृह्णीयात्। यत्रान्यांसमिधमादध्यातितंपरिगृह्णाति सआवसथ्यः तस्मिन्गृह्यकर्म्माणिकुर्य्युः। तत्रापिनगृहीतस्यात्‌वै
दिकमग्निमन्वीतवैवाहोपिनपरिगृहीतः अथामावास्यांवैश्यकुलादग्निमाहृत्यशुचौदेशेस्थापयेत। गौतमः। भार्य्यादिरग्निर्दायादिर्वा। पैठीनसिः। वै
वाहिकमग्निमन्वीत सायंप्रातर्य्यथाकालंसमिधोभ्याद्ध्यात्। व्यासः। अग्निर्वैवाहिकोपेननगृहीनःप्रमादिना। पितर्य्युपरतेनेनगृहीतव्यःप्रयत्नत
। छन्दोगपरिशिष्टेकात्यायनः। यस्यवाचाभवेद्दत्ताकन्यासायदिकेनचित्। सोन्यांसमिधमाधास्यन्नादधीतैवनान्यथा। अनूढैवतुयाकन्यापञ्चत्वमुपग
च्छति। तथात्वव्रतलोपःस्यात्तेनैवान्यांसमुद्वहेत्। अथचेन्नलभेतान्यांयाचमानोपिकन्यकाम्। तमग्निमात्मसात्कृत्वाक्षिप्रंस्यादुत्तराश्रमी। वसि
ष्ठः। असमग्न्याधेयायततोहिताग्निःस्यात्। अवश्यंब्राह्मणोऽग्नीनादध्यात्। अग्न्याधेयकर्म्मार्थंब्राह्मणोअलंसमर्थइत्यर्थः। तस्मादाहिताग्नि
नाभवितव्यं। पारस्करः। आवसथ्याधानंदारकालेदायाद्यकालएके। गोभिलगृह्यम्। उदगयनेपूर्वपक्षेप्रागावर्त्तमानादह्नःकालंविद्यात्। प्रागाव
र्त्तमानादह्नः पूर्वाह्णइत्यर्थः। तथाब्रह्मचारीवेदमनधीत्यान्यांसमिधमभ्यादास्यन्जायाःपाणिंजिघृक्षन्। अग्निसमाधानंकुर्वीतेतिसंबध्यते। त
थाप्रेतेवागृहपतौपरमेष्ठिकरणं। परमेष्ठिकरणं। परमेष्ठीअग्निः तथातिथिनक्षत्रसमवाये दर्शेवापौर्णमासेवाग्निसमाधानंकुर्वीत। छन्दोगपरिशि
ष्टेकात्यायनः वैवाहिकेग्नौजुहुयात् सायंप्रातस्त्वतन्द्रितः। चतुर्थीहोमंकृत्वैवएतत शाकटायनेर्म्मतम् यमः एकंद्वौत्रीन्चावेदानधिगम्यगुरुंपरि
तोष्यानुज्ञातोगृहंजायापनयंकृत्वासवर्णांपरिणीयब्राह्मणादिनाविवाहेनऋतुकालगामीभूत्वास्वावसथ्याधानंकृत्वाअतिथीनर्चयेत्‌ मुहूर्त्तदी
पिकायांवह्निदीपिकायां वह्निग्रहणंकुजगुरुषुअनुमासेमाद्यादिषट्सुच। मृदुध्रुववह्निभेषुकुंभाजाद्यकरिलग्नमशुद्धकाल लग्नस्यशीतगुस्थि
तौचविहायकुर्य्यात् तत्रमृदुनक्षत्राणि अनुराधाचित्रारेवतीमृगशिरः ध्रुवनक्षत्राणिउत्तरफल्गुनी उत्तराषाढः उत्तरभाद्रपदरोहिणी वह्नि

प्रा·स· मानिकृत्तिकाः कुंभाज्ञांशका· मीनकर्कटमकरांशाः अथारण्यादित्रिर्माणम् तत्रच्छंदोगपरिशिष्टं कात्यायनः अश्वत्थो यश्शमीगर्भः प्रशस्तोर्वी
९१ समुद्भवः। तस्यच प्राङ्मुखी शाखा वासाचोदीच्यूर्द्धगापिवा। अरणीतन्मयीप्रोक्ता तन्मयीचोत्तरारणिः सारवद्दारवं चात्रं ओविलीच प्रशस्यते स
संसक्तमूलो यस्स्यात्स शमीगर्भ उच्यते अलाभे शमीगर्भस्य हरेद् विलंबितः चतुर्विंशतिरंगुष्ठा दैर्घ्यं षडपि पार्थिव। चत्वारउच्छ्रये मानमरण्याः
परिकीर्त्तितम्। षडंगुलः प्रमन्थः स्याच्चात्रं स्याद्द्वादशांगुलम्· ओविली द्वादशैव स्याद् एवं तन्मंथयंत्रकम् अंगुष्ठांगुलिमानं च यत्र यत्रोपदिश्यते त
त्रतत्र बृहत्पर्वग्रंथिभिर्मिनुयात्सदा गोवालैः शणसंमिश्रैः त्रिवृद्वृत्तमनन्तकं व्यामप्रमाणं नेत्रं स्यात् प्रमथ्यस्तेन पावकः मूर्द्धाक्षिकर्णवक्त्राणि
कंधरा चापि पंचमी अंगुष्ठमात्राण्येतानि द्व्यंगुष्ठं वक्ष उच्यते अंगुष्ठमात्रं हृदयं त्र्यंगुष्ठमुदरं स्मृतं एकांगुष्ठा कटिर्ज्ञेया द्वौ वस्ती द्वौच गुल्फकौ ऊरू जंघे
च पादौ च चतुस्त्र्येकं यथाक्रमम् अरण्यवयवा ह्येते याज्ञिकैः परिकीर्त्तिताः यत्तु गुह्यमिति प्रोक्तं देवयोनिः स उच्यते तस्यां यो जायते वह्निः स कल्याण
कृदुच्यते अन्यत्र मथ्यते यस्तु ततद्रोगभयमाप्नुयात् प्रथमे मथने ह्येते नियमो नितरेषु च उत्तरारणिनिः पन्नः प्रमन्थः सर्वदा भवेत् योनिशंकरदो-
षेण युज्यंते ह्यन्यमन्थकृत् आर्द्रा पाशुषिराचैव घूर्णाशास्फुटिता तथा निहितायनसानानामरणिन्नोत्तरारणिः तथा· खादिरोवाथ पार्णोवा द्वि वि
तस्तिः स्रुवः स्मृतः स्रुग्बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः आज्यस्थालीच कर्त्तव्या तैजसद्रव्यसंभवा माहेन्द्री वापि कर्त्तव्या नित्यं सर्वाग्निकर्मसु
आज्यस्थाल्याः प्रमाणं तु यथावा कारयेद्बुधः। निर्व्रणं दृढ़ सम्मिन्या त्रादृढानाति बृहन्मुखी मृन्मयौदुंबरी वापि चरुस्थाली प्रकीर्त्तिता तथा· इध्माजाती
यसमिध्मादि प्रमाणं मेक्षणं भवेत् वृत्ते वा ह्यंच दृष्ट्वयमवदानक्रियासमे क्षणवद्दर्वी यस्तत्रविशेषस्तमहं ब्रुवे दर्वी द्व्यंगुष्ठपृथ्वाग्रं तुरीयोग्रं च मेक्ष राम
णम् मुसलोलूखले वार्क्षे आयते स्वदृढे तथा इच्छाप्रमाणे भवतः सूर्यं चैवेषां कथ्यते वेणुमयं सूर्यकरणे संस्तथ प्रभृतिः अथसूर्यमादना ९१

वर्षद्वद्वउद्यैवैते यद्दिलतानांयद्दिवेणूनांयदीकीकाणामितिकात्यायनसूत्रम् वैकंकतानिपात्राणि· खादिरः स्रुवः चतुर्विंशतिस्त्वस्य पालाशी
जुहूः अश्वत्थप्रभृतिवरुणान्यहोमसंयुक्तानि। अथकुंडनिर्म्माणम् तत्रयत्नपार्श्वम् चतुर्विंशानिपाः र्व्वस्याछंस्योनर्थ्यनिषेत्त्वथा. चतुर्दशांगुले
रन्यं द्यधिकैरितियाज्ञिकाः अरत्निश्चतुरस्रंतु पूर्वस्याग्नेस्ततोभवेत् रथचक्राकृतिः पार्श्वाच्चक्राईत्रवद्दक्षिणा· आद्यावस्थामार्गस्तु आर्धेणोहमकी
र्त्तितम् विद्धोकपरिमाणंस्यात्तुस्त्र्या शारखमयथाक्रमम् तुर्य्यांशास्यतृतीयेषुतथैवाढकरस्यच पंचाशच्छर्कराः पश्चात्पूर्वेद्याधिसमतिः२
क्षिणेतुत्करस्यानेदशपंचचसप्तच आधानेकीर्त्तिताएवमूस्वास्तूत्करशर्कराः वितस्तिमात्रमुत्सर्गेमेखलात्रयसंयुतः अग्नीनांतुरथः कार्यो
विस्तारेणचस्यंगलः व्याममात्रेणछिन्नेनवल्लीयसा त्रिभिरावेष्टवैर्वेष्टेप्यांद्रमग्नेस्तुमराडलं अष्टांगुलः प्रमत्तःस्याच्चात्रतुद्वादशांसलम्
उविनीहाद्दशांगुलाएमयत्नविधिः स्मृतः शंस्याहद्विवीपिस्यहरेत्तृतीयं शंस्यआहवनीयः मर्थ्योगार्हपत्यः अथनर्योहसिराग्निः छंदोग·
परिशिष्टेकात्यायनः मानक्रियायामुक्तायामुक्तिमानकर्त्तोरिमानकृद्यजमानः स्याहिशतामेवनिश्चयः तथाअंगुष्ठांगुलिमानंतुयत्रयत्रप्रकी
र्त्तितम् तत्रतत्रबृहत्सर्वग्रंथिभिर्म्मिनुयात्सदा अथसमिल्लक्षणम् तत्रवायुपुराणम् पलाशफल्गुन्यग्रोधाःप्लक्षाश्वत्थवैकंकताः उदुम्बर
स्तथाबिल्वश्चंदनायज्ञियाश्चये शरलोदेवदारुश्चशालश्चखदिरस्तथा समिदर्थेप्रशस्ताः स्युरेतेवृक्षाविशेषतः याद्याःकंटकिनश्चैवयज्ञिया
येचकेचन पूजिताः समिदर्थेषुपितृणांवचनंयथा समिदन्तुहत्तोब्रह्मपुराणम् पालाशखत्थन्यग्रोधप्लक्षवैकंकतोनोद्भवाः अश्वत्थोदुंबरो·
बिल्वः चंदनःशरस्तथा शालश्चदेवदारुश्चखदिरश्चेतियज्ञियाः छंदोगपरिशिष्टेकात्यायनः नांगुष्ठादधिकाग्राह्यासमित्स्थूलतयाक्कचि·
त् ननिर्मुक्तात्वचाचैवनसकीयनपाटितः प्रादेशाधिकानोनानतशाखानिशस्तिनाम् नसवर्णानंसवर्णानिर्वीर्य्यात्रोमेषुतुविजानता मि·

श्रा॰ स॰ त्राणपरिशिष्टं अथेध्मार्थं॰ पर्णाश्वत्थखदिररोहितकोदुम्बराणां नदलाभे सर्ववनस्पतीनां तिंदुकधवलमनिम्बराजवृक्षशाल्मल्यरलुक
९२ पित्थकोविदारविभीतकश्लेष्मातकसर्वकंटकविवर्जितम् वायुपुराणम् निवासायेचकीटमामयज्ञियाश्च गर्हिताः आवेष्टितायेचकीटैः वल्ली
भिश्च समावृताः शकुनीनां निवासश्च वर्ज्जयेत्तान्महीरुहान् अन्यांश्चैवंविधान्सर्वान्यत्निपांश्च विवर्ज्जयेत् वायुपुराणम्। भागमाः समि
धो देयास्ताश्च यान्येषु पातिताः शान्त्यर्थेषु प्रशस्ताः स्युर्विपरीता जिघांसतः विशीर्णा विदला ह्रस्वा वक्राश्च सुषिराः कृशाः दीर्घाः स्थूलाघु
णदृष्टाः कर्मसिद्धिविनाशकाः छंदोगपरिशिष्टे कात्यायनः आचान्तयोमयोश्चैव वैश्वदेवे तथैव च बलिकर्म्मणि दर्शे च पौर्णमासे तथैव च न
वयज्ञेयज्ञवावदन्त्येवं मनीषिणः। एकमेव भवेत्सार्द्धमेतेषु न पृथक् पृथक् तथा॰ गलेशः क्रियमाणेषु मातृभ्यः पूजनं क्वचित् सकृदेव भवे
त्सार्द्धमेतेषु पृथगादिषु अथाग्न्याधानविधिः तत्र छंदोगपरिशिष्टे कात्यायनः परिधायाहतं वासः प्रावृत्य च यथाविधि विभृयादङ्गुलीयकौ॰
पञ्चमाहृतं वस्त्रमाग्नेया चक्रे वेपथमत्ताग्रपाटीकृत्वा विचक्षणः कृत्वोदगग्रमरणिं न्यूर्द्ध्वमरणिं न्यसेत् पार्श्वार्द्धिकीलकाग्रं नानो विनी
मुदग्गताम् विशाद्यथारयेदंत्तं निम्नं दृप्रयतः शुचिः। विरुद्धस्याथ नेत्रेण चारुपल्याहतांशुका। पूर्वां मन्थेदरण्यन्ते प्राच्यग्नेः स्याद्यथा श्रुतिः
नैकयापि विना कार्यमाधानं भार्यया द्विजैः अकृतं तद्विजानीयात्सर्वं यन्नारभंति यत् वर्णज्येष्ठेन च ह्वीभिः सवर्णाभिश्च यत्नतः कार्य
मग्निरिनराभिः सर्वाभिर्मण्डलं पृथक् नात्र शूद्रां नियुञ्जीत तद्द्रोहद्वेषकारिणीम् नानासनस्था नान्येन प्रसाच संगताम् ततः शाक्
लाः स्वास्ता सामान्यनरेव वा उपेनानामन्यतमामथेदग्निं निकामतः जातरूपलस्रणं कृत्वा सर्वतंत्रसमन्वितम गांदद्याद्यजमानस्त्वन्तेन राम
लणौवा ससीतथा अथकुण्डनिर्म्माणसंस्कारादिकर्म्म तत्र पारस्करः परिसमूह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधायेदक्षि ९२

तोऽस्यासनंमास्तीर्य्यप्रणीयपरिस्तीर्य्यार्थवदासाद्यपवित्रेकृत्वाप्रोक्षणीः संस्कृत्यार्थवत् प्रोक्ष्यनिरुप्याधिश्रित्यपर्य्यग्निंकुर्य्यात्. स्रुवंप्र
ताप्यसंमृज्याभ्युक्ष्यपुनः प्रताप्यनिदध्यादाज्यमुद्वास्योत्पूयावेक्ष्यप्रोक्षणीश्च पूर्ववदुपयमनकुशानादाय समिधोऽभ्याधायपर्युक्ष्यजुहुयादेव
एवविधिर्यत्रक्वचिद्धोमः पर्य्यग्निकरणंवाकर्त्तव्यम् एतेवारत्रयस्यानुक्तत्वात् पारस्करः वैश्यस्यबहुपशोर्गृहादग्निमाहृत्यचतुःपार्श्वंप्रप
रन्सर्वमरणिप्रदानमेके पंचमहायज्ञावृत्तिश्रुते रग्न्याधेयदेवताभ्यः स्थालीपाकंश्रपयित्वाज्यभागाविष्ट्वा· आज्याहुतीर्जुहुयात् त्वंनोअग्ने·
इमंमेवरुणतत्वायामि· येतेशत। म्यास्त्वाग्नउदुत्तमं भवतन्न· इत्यष्टौपुरस्तादेवमुपरिष्टात् स्थालीपाकस्याग्न्याधेयदेवत्मजुहुत्वाजुहोति स्वि
ष्टकृतेच याश्चाग्नयेवषट्कृते यत्कर्मणोऽत्यरीरिचंदेवागातुविद इतिबर्हिर्हुत्वाप्राश्नाति ततोब्राह्मणभोजनंचतुःप्राश्यप्रवचनंप्रीतप्रसि-
द्धकर्म्मकर्त्तव्यम् एतेतुवैश्यकुलादग्न्यानयनपक्षेवोद्धव्यम् स्थालीपाकश्रपणानन्तरं· आज्यभागावाज्यारभागौहुत्वात्वन्नोअग्नइत्या
दिभिर्मन्त्रैः प्रथममाज्याहुतयो होतव्याः ततोऽग्नयेपवमानायइत्यादिभिः स्थालीपाकान्नेनाहुतिचतुष्टयंहोतव्यम् ततःपुनरपित्वन्नोअ-
ग्नइत्यादिभिर्मन्त्रैराज्येनाष्टाहुतीर्हुत्वा स्विष्टकृदादिहोमंसमाप्यतूष्णीमग्नौबर्हिर्हुत्वाआहुतिशेषंप्राश्यविंशतिब्राह्मणान्भोजयेदिति
अग्न्याधानदेवताआह कात्यायनः अग्नयेपवमानायप्रथमाग्नयेपावकाग्नयेशुचये· द्वितीया· आदित्यग्नयेस्तृतीयायत्रपार्श्वः गर्भाधानादि-
सर्वेषुब्राह्मणान्भोजयेद्दश आवसथ्येचतुर्विंशमग्न्याधेये शतात्परं आग्रायणेप्रायश्चित्तेब्राह्मणान्दशपंचवा सहस्रंभोजयेत्सोमेब्राह्म
णानांशतंपश्वौचातुर्मास्येषुचत्वारिंशच्छतानिचक्रुराभखे अयुतंवाजपेयेच अश्वमेधेचतुर्गुणं छन्दोगपरिशिष्टंकात्यायनः ब्राह्मणेदक्षि-
णादेयायापत्रपरिकीर्त्तिता कर्म्मान्तेनुच्यमानायापूर्णपात्रादिकाभवेत् यावताबहुभोक्तुस्तुतृप्तिः पूर्णेनजायते। नापराध्यमतःकुर्य्यात्

ब्रा॰स॰ र्णपात्रमिति स्थितिः गोभिलः वैश्यकुलाद्वाऽम्बरीषाद्वा अग्निमाहृत्याभ्यादध्यात् अपिवा बहुयाजिन एवागारात् । ब्राह्मणस्य राजन्यस्य वैश्यस्य वा
९३ अपिवा अरणी मथित्वा अभ्यादध्यात् पुण्यस्थिरानुद्भूको भवति यद्यत्कामयेत्तथा कुर्वीत वास्तव्यदेवान्त्वा समिधं दधाति जायायाः पाणिं निम्न
नुजुहोति तमभिसंयच्छेत् स एवास्य गृह्योऽग्निर्भवति तेन वैश्यप्रातराहुतिर्हुता भवतीति छन्दोगपरिशिष्टं कात्यायनः पुण्यमेवादधीता-
ग्निं स हि सर्वैः प्रशस्यते अनुर्द्धुकत्वं यत्तस्य कामैस्तन्नीयते समं ॥ अथ मणिकाधानम् तत्र पारस्करः अथातो मणिकाधानं उत्तरपूर्वस्यां
दिशि पूर्वं वद्वरं खाता कुशानास्तीर्य्य सतान्यरिष्टकाः स्वान्या निचाभिमंगलानि कृद्धिहृद्धियुक्तानि तस्मिन्निनोति मणिकम् समुद्रोसीत्यं
प आसिंचत्यापो रेवतीः यथाहि वसुः क्रतुं च भद्रं बिभृथामृतं रायश्च स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयो धादित्यापो हिष्ठेति तिसृभिस्तुतो-
ब्राह्मणभोजनम् । अथ वैश्वदेवविधिः तत्र पारस्करः अथातः पंचमहायज्ञाः वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयात् ब्रह्मणे प्रजापतये गृ-
ह्याभ्यः कश्यपायानुमतय इति भूतगृह्येभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः पृथिव्यै धात्रे विधात्रे द्वार्ययोः प्रतिदिशं वायवे दिशां च मध्ये त्रीन् ब्रह्मणेऽन्त
रिक्षाय सूर्याय विश्वेभ्यो देवेभ्यो विश्वेभ्यो भूतेभ्यस्तेषामुत्तरतः उषसे भूतानां च पतये परं पितृभ्यः स्वधा नम इति दक्षिणतः पात्रं निर्णिज्योत्तरस्यां
दिशि निनयेद्यक्ष्मैतत्त इति उद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याद्धन्त इति यथार्हं भिक्षुकानतिथींश्च संविभजेत् बालज्येष्ठा गृहस्था यथार्हमश्नीयुः
पश्चाद्गृहपतिः पत्नी च पूर्वो वा गृहपतिस्तस्मात्स्वादिष्ठं गृहपतिः पूर्वमतिथिभ्योऽश्नीयादिति श्रुतेरहरहः स्वाहाकुर्यादन्नाभावे केनचिदाकाष्ठाद्दे-
वेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात् । अंगिराः शालाग्नौ तु पचेदन्नं लौकिके वापि नित्यशः यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते छन्दोगप- राम
रिशिष्टं कात्यायनः । अशुष्केन मरुत्सेवं बलिदानं विधीयते बलिदानप्रदानार्थं नमस्कारः कृतो यतः स्वाहाकारवषट्कारौ नमस्कारो दिवौकसाम् स्वधा ९३

कारः पितृयज्ञानुहन्तकारोनृणांयतः स्वधाकारेणनिर्वपेत्स्विष्टंबलिमतः सरावबाप्येकेनमस्कारंकुर्वन्तेनेतिगोतमः तथानस्यातांकाम्यवामा-
न्नेजुहोतिवलिकर्म्मणा पूर्वमित्यविशेषोक्तेजुहोतिवलिकर्म्मणोः काममन्तेभवेयातांनतुमध्येकदाचन नैकस्मिन्कर्म्मणितन्वोकर्म्मणोरारभते
ततः तथाच पराह्वेबलयोभवंतिमहामार्जारश्रवणप्रमाणात् एकत्रचेदपकृष्टाभवंनि इतरेतरमसंसक्ताश्चतथा सर्वेषामुभयमद्भिः परिषेकः
पिण्डवच्चापश्चिमाप्रतिपत्तिः ।काम्यबलिदानानन्तरन्यासः।दत्वानेनविधानेनबलिंपश्चादुपस्पृशेत् अनुक्तस्थानानिबलिकर्म्मादीनांकुत्रकर-
णीयानीत्याकांक्षायांकात्यायनपरिभाषासूत्रं उत्तरउपचारोयतः श्रुतिश्चउत्तरतउपचारोवैयज्ञइति अस्यार्थः अनुक्तस्थानंयत्कर्मतद्यज्ञे
ऽत्तरतः करणीयं क्रियमाणंतत्पश्चिमाद्द्वारभ्यपूर्वान्तंदक्षिणाद्द्वारभ्यउत्तरान्तं तथाच कात्यायनपरिभाषासूत्रं प्रागग्रा उदगग्रादयात् श्रुतिरपी
दंच कर्म्माणिसंतिष्ठन्तेनि अथसायंप्रातर्होमादिषुच्छन्दोगपरिशिष्टेकात्यायनः ऊर्द्ध्वंपूर्णाहुतेः प्रातर्हुत्वाचसायमाहुतिंप्रातर्होमान्तःकृष्णे
देशएवउत्तरोविधिः ऊर्द्ध्वंपूर्णाहुतेर्दर्शःपौर्णमासोपिवाग्रयः यथाचाभिसहोतम्यः सएवादिःश्रुतिः।गोभिलः सायमाहुत्युपक्रमएवात्रऊर्द्ध्वंगृह्येग्नौ
होमोविधीयते अग्न्याधानानंतरंगोभिलः एवमतऊर्द्ध्वंगृह्येग्नौजुहुयात् हावयेद्वाआजीवनविमृयात् छन्दोगपरिशिष्टंकात्यायनः।सूतकेचो
पवासेचअशक्तौश्राद्धभोजनेएवमादिनिमित्तेषुनहावयेदितियोजयेत्।गोभिलः परास्तमयादग्निंप्रादुष्कृत्यास्तमितेसायमाहुतींजुहुया-
त् पुरोदयात्प्रातः प्रादुष्कृत्योदितेअनुदितेवाप्रातराहुतिंजुहुयात्। छन्दोगपरिशिष्टंकात्यायनः।सूर्येस्तशैलमप्राप्तेषट्त्रिंशद्भिःसदांगुलैः प्रादुः
करणमग्नीनांप्रातर्भासांचदर्शने हस्तादूर्द्ध्वंरविर्यावद्गिरिंहित्वानगच्छति।तावद्धोमविधिः पुण्योनान्योस्तुदितहोमिनाम् यावत्सम्यङ्नभाव्यंते
नभस्यृक्षाणिसर्वतः।नचलोहितमायेति तावत्सायंचहूयते मरीचिः स्वराशिमिवत्सां संध्यापां सूर्यनस्तनरश्मिभिः।होमकालःसनिर्दिष्टोऽस्मिन्ग-

भितदामही। छन्दोगपरिशिष्टे कात्यायनः रजोनीहारधूमाद्युपस्थाने रविरवौ संध्यामुद्दिश्य जुहुयाद्धुतमस्य न लुप्यते दक्षः संध्याकर्मावसाने
तु स्वयं होमो विधीयते स्वयं होमे फलं यत्तु न तदन्येन लभ्यते गोभिलः अथाप्युदाहरंति कामं गृह्येग्नौ पत्नी जुहुयात् सायंप्रातर्होमौ गृह्यः पत्नीगृ
ह्य एषोग्निर्भवतीति आश्वलायनगृह्ये पाणिग्रहणादि गृह्यं सर्वं परिचरेत स्वयं पत्न्यापि पुत्रः कुमार्यन्तेवासी वा नित्यानुगृहीतः स्यात् दक्षः ऋत्वि
क्पुत्रो गुरुर्भ्राता भागिनेयोथ विट्पतिः एभिरेव हुतं यत्तु तद्धुतं स्वयमेव च छन्दोगपरिशिष्टे कात्यायनः असमक्षं च दम्पत्योर्होतव्यं नर्त्विगादिभिः
द्वयोरप्यसमक्षं हि भवेद्धुतमनर्थकम् आपस्तम्बः नमोस्थितमग्न्याधारध्यात् छन्दोगपरिशिष्टे कात्यायनः हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृ
ताः। माषकोद्रवगौरादीन्सर्वालाभेपि वर्जयेत् पापाहतिर्हि द्वादशदापर्वपूरिकारसादिनाचेत्स्रुवमात्रपूरिकार्द्वेनतीर्थेनचहूयते हविः स्वंगा
रिणिस्त्वर्चिषि तद्वत्पावके तस्मिन् समिद्धे होतव्यं नासमिद्धे कदाचन आरोग्यमिच्छतायुश्च श्रियमत्यंतिकां तथा जुह्वन्स च हुते चैव पाणिसूर्प्यत-
दाहृतिः न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना मुखेनैव धमेदग्निं मुखादेषोध्यजायत नाग्निं मुखेनेति तु यल्लौकिके योजयंति यत् ब्रह्मपुराणे-
सुविदग्धो धत्वरायुक्तो हीनमंत्रो जुहोति यः। अप्रवृद्धे सधूमे वा सोन्धः स्यादन्यजन्मनि। अल्पे रूक्षे सस्फुलिंगे वामावर्ते भयानके आर्द्रकाष्ठे
श्च संपूर्णे फुत्कारोपरि पावके कृष्णार्चिषि सुदुर्गन्धे तथा निहितमेदिनीम् आहुतीर्जुहुयाद्यस्तु तस्य नाशो भवद्ध्रुवम् छन्दोगपरिशिष्टे का-
त्यायनः आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते मंत्रस्य देवतायाश्च प्रजापतिरिति स्थितिः मैत्रायणीयपरिशिष्टे दर्भास्तरणार्थे काशः प्रतिनि
धिः तदलाभे पर्ववतीभिः कांडवतीभिरोषधीभिस्तरणानि कुर्वन्ति कटोशीरबल्वजामूपवर्जम् तथा व्रीहियवौ पुरोडाशस्यार्थे तदलाभे यवव
तीभिस्तंडुलवतीभिः पुरोडाशान्कुर्वन्ति अथ माषमसूरकुरुवककोद्रवकोरदूषवर्जम् छंदोगपरिशिष्टे कात्यायनः होमपात्रमनादे

शोदृवदृवेस्रुवः स्मृतः पाणिनैवेतितस्मिंस्तुस्रुवावाचनहूयते वापुष्करेण दानंप्रतिग्रहोहोमोभोजनंवलिरेवच सांगुष्ठेनतदाकार्यं मंत्रेस्यो
न्यथाभवेत् एतान्येवतुकर्म्माणिदानादीनिविशेषतः अंगुष्ठेनतुविशेषेणनहृद्याचमनंभवेत् छन्दोगपरिशिष्टंकात्यायनः नोकुर्य्याद्धोम
मंत्राणांछ्ग्यगादिषुकुत्रचित् अन्येषांचविकृष्टानांकालेनाचमनादिना स्वयंहोमात्समर्थस्यसमीपमुपसर्प्पणम् तत्राप्यशक्तस्यसतः
शयनाच्चोपवेशनम्। पारस्करः उपयमनप्रभृत्यापांशुलस्यपरिचलमस्तमितानुदितयोर्द्ध्यातंडुलैः यवैर्वाअग्नयेस्वाहा प्रजापतयेस्वाहे
तिसायम् सूर्य्यायस्वाहाप्रजापतयेस्वाहेतिप्रातः उभौसौमित्रावरुणौउभौसावश्विनाउभौउभौमानिंद्राग्निसोमश्चउभौमान्संवर्त्ततामपि पु
नः स्वाहेतिमनसापवित्वाहोतव्याय्यथानिगमत्तस्मात् किंचिप्राजापत्यंप्रनेक्रियतउपांशुप्रवेत्तक्रियतइतिएतच्चसर्वांएवप्राजापत्याहु
तीवोद्दव्यम् अनुदितहोमकालात्ययेऽनुदितहोमिना आज्यंद्रव्यमनादेशइतिछन्दोगपरिशिष्टवचनादाज्येनव्यस्तसमस्तमहाव्याहृति
होमः त्वन्नोअग्नइत्यादिपंचाहुतिकसर्वप्रायश्चित्तहोमश्वविधेयः तथाउपयमनकालातिक्रमकालेपारस्करः कालातिक्रमणेनियमकन्
अस्यार्थः पारस्करभाष्यकृतामाख्यातः कालव्यतिक्रमेसतियन्नियतेषुश्रौतेषुनिमित्तेऽपिनिपातेविहितंस्मार्त्तेष्वपुनरेवभवति तत्रप्रति
महाव्याहृतिभिः सर्वाभिश्चतुर्थस्सर्वप्रायश्चित्तमितिकात्यायनसूत्रात्कालव्यतिक्रमादन्यत्राप्यभूयमाणप्रायश्चित्तेदोषउत्पन्नेतदे
वभवति नैमित्तिकान्तराभावात् गोभिलः अहविष्यान्नस्याग्नौजुहुयात् कृतस्यवाअकृतंचेत्स्थाल्यांजुहुयात् सोदकंकृत्वा अथय
दिपयोदधिवरान्नंवाकस्यौनवाचरुस्थाल्यास्रुवेणैवअग्नयेस्वाहेतिपूर्वांतूष्णीमुत्तरास्यध्येचापराजितायांदिशीतिसायं अथप्रातः सू
र्य्यायस्वाहेतिपूर्वांतूष्णीमेवोत्तरामध्येचैवापराजितायांदिशितूष्णीमितिप्रजापतयेस्वाहेतिवोद्दव्यम् अथवाज्वलदग्निभागेहोतव्यम् तथा

ति यजमानसन्मुखसङ्करा छिन्नावग्नावाधत्तइतिमध्यमं पिंडं पत्नीप्राश्नाति · पुत्रकामः पत्नीभ्योददातिजीवत्पितृकोपिजीवतिपितर्यपिजीव
त्पितृकस्यहोमान्तमनारंभोवालत्ववेतिवेति । जातूकर्णोनजीवन्तमभिदधातीतिश्रुतेः पूर्वोवाशत्वात् · पितापिराउपितृयज्ञप्रकरणकाण्डनिलिं
गात्प्रहृवचनाद्देवाग्निश्रुतिभ्योगमकम् एवासमभिव्याहाराद्दनाहिताग्नेरप्येषः । छन्दोगपरिशिष्टेकात्यायनः । स्वशाखोक्तचरुश्रिन्नोद्य
दर्भोऽकठिनः शुभः । नचातिशिथिलः पाच्योनचवीतरसोभवेत् अथपञ्चादिकाला · तत्रछन्दोगपरिशिष्टंकात्यायनः । पञ्चादावेवकुर्वीतसदा
पञ्चादिर्यचकम् । पूर्वाह्णएवकुर्वीतेविदेप्यन्नेमनीषिणः लघुहारीतः पर्वणोऽन्तेतुरीयेतुकार्येष्टिर्द्विजातिभिः द्वितीयासहितंपस्मारो
चपत्याश्वलायनः । अथपञ्चादिकर्म तत्रपारस्करः पञ्चादिषुस्थालीपाकंश्रपयित्वादर्शपौर्णमासदेवताभ्योहुत्वाजुहोतिब्रह्मणेप्रजाप
तयेविश्वेभ्योदेवेभ्योद्यावापृथिवीभ्यामितिविश्वेभ्योवलिहरणम् भूतगृह्येभ्यस्त्वाकाशायचवैश्वदेवस्याग्नौजुहोति · अग्नयेस्वाहा · प्र-
जापतयेस्वाहा विश्वेभ्योदेवेभ्यःस्वाहा अग्नयेस्विष्टकृतेस्वाहेतिबाह्यतः स्त्रीवलिहरतिनमःस्त्रियै · नमःपुंसे · वयसेनमः शुक्लायकृष्ण
दन्तायपाम् पतयेनमोयेमेप्रजासुपलोभयन्तिग्रामेवसन्ति वारणेतेभ्योनमोऽस्तुवलिमेभ्योहरामि · स्वस्त्यस्तु · प्रजामेददातीतिविशेष
मद्भिः प्राश्नाम्याः ततोब्राह्मणभोजनं अथदर्शानन्तरंप्रतिपदिदेवताभ्यःस्थालीपाकंकृत्वाब्राह्मणीनास्थालीपाकोविधेयः तत्रदर्शदे
वताः अग्निर्विष्णुरिन्द्राग्नीच · पौर्णमासदेवताः अग्निरग्नीषोमौच छन्दोगपरिशिष्टंकात्यायनः यावताहोमनिर्वृत्तिर्भवेद्योयत्रकीर्ति
ता शेषंचैवभवेत्किंचित्तावन्तं निर्वपेच्चरुम् अथस्रुवादिपात्रनिर्माणानन्तरंसामान्यधर्मेछन्दोगपरिशिष्टेकात्यायनः । तेषांप्राकुशैःका
र्यः संप्रमार्ज्योग्रुहुधीप्रदीपनंवलिसीनप्रक्षाल्योष्णेनवारिणा । पत्रासादनेकात्यायनः प्रपत्रस्यपश्चादुत्तस्त्रोवेति · अत्रच · प्राञ्चउद्

ग्रा·स· स्विचकर्म्माणीति सामान्यपरिभाषाबलात् प्रागग्राण्येव यजुर्वेदिना पात्राण्यासादनीयानि· याज्ञवल्क्यः करद्वनां सेचनं चैव न चैवोल्लेखनम्
९६ क्रिया प्रदक्षिणं वदायुवन्निति दक्षिणावर्त्तेन स्थालीगतमन्नं विनोभयान्नित्यर्थः श्रतमभिघार्योद्वास्य प्रत्यभिघारयेत् इति पद्धत्यादिकमत्र
च आधानानन्तरं प्रथमाब्दे श्रावणपौर्णमासीमारभ्य कार्त्तिकपौर्णमास्यन्तयोः षोडशमासपर्य्यन्तं पारस्करगृह्योक्ताः पाकयज्ञाः पारस्करो-
क्ततत्तत्तिथिषु कर्त्तव्याः यद्द्येतेषां पाकयज्ञानामाधानानन्तरं प्रथमाब्दे कर्त्तव्यत्वं ज्ञापयति शाट्यायनः यथा संस्कारस्य वस्तुनः कर्म्मप्रवृत्तिर्यो निग
द्यते आधानानन्तरं कार्य्यं सप्रत्यब्दमिति स्थितिः अकरणे च शाट्यायन एव पापोत्पत्तिं ज्ञापयति· यथा· आधानानन्तरं चैते सकृदेव यथावि।
धिकृताः संस्कारमादध्युरकृताः पापहेतवः अत्र वचनद्वयेऽप्येकत्र प्रत्यब्दकर्त्तव्यता अपरत्र सकृत्कर्त्तव्यता पाकयज्ञानामुक्ता तत्रेयं व्यवस्था। आ-
धानानन्तरं प्रथमाब्देऽवश्यमेषां कर्त्तव्यत्वं अकरणे पापोत्पत्तिः प्रत्यब्दकरणे तु संस्कारातिशयजनकत्वात् एषां करणं अदृष्टातिशयो भववी
ति एवं सत्याधानानन्तरं प्रथमाब्दे श्रावण्यादिवृषोत्सर्गान्तानामकरणे प्रायश्चित्तपूर्वकं पुनराधानं कृत्वा एते करणीयाः पुनराधानकरणे तु पौष्य
होमे सत्यथकर्म्मणां संप्रतिर्दृश्यते अत्र कर्म्मसु तत्रैतत्पुनराधानं कारयेदविचारतः प्रायश्चित्तं तु गृह्योक्तावश्यकर्त्तव्यतेयदिकर्म्मणामकरणे
युक्तमेव अत्र प्रतिपद्युक्तप्रायश्चित्तप्रतिपादकवचनाश्रवणात् सामान्यपरिभाषयोशनसोक्तमेव प्रायश्चित्तं कर्त्तुं युज्यते यथाहोशनाः यच्चोक्तंय-
नवानोक्तं मिहूपातकनाशनं प्राजापत्येन कृच्छ्रेण शुध्यते नात्र संशयः एवं व्यवस्थिते श्रावण्यादिवृषोत्सर्गान्ताः पाकयज्ञाः पाकयज्ञपद्धत्युक्त
क्रमेण आधानानन्तरमवश्यमेकवारं करणीयाः पाकयज्ञपद्धतिश्च सनिबंधाऽस्मज्ज्येष्ठावसथिकपशुपतिकृताऽस्त्येव· सैव लोके प्रसिद्धा तेना राम
स्माभिरस्मिन्विषये न कृतेति अथ पुनराधाननिमित्तानि तत्र छंदोगपरिशिष्टं कात्यायनः विहाय अग्निं सभार्य्यश्चेत्सीमामुल्लंघ्य गच्छति होम· ९६

ब्रा. स. पूर्व्वन्तु हूयते मथ्यमानं समारोप्य पूर्व्वहोमो विधीयते यत्तपार्श्वः दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीः पतिः आहरेद्विधिवद्दारमग्नींश्चैवाविलं
८७ म्बयन मनुः भार्य्यायै पूर्व्वमारिण्यै दत्वाग्नीनन्त्यकर्म्मणि पुनर्द्दारक्रियां कुर्य्यात्पुनराधानमेव च छन्दोगपरिशिष्टं कात्यायनः दाहयित्वाग्निना
भार्य्यां सदृशीं पूर्व्वसंस्थितां पात्रैश्चाथाग्निमादध्यात्कृतदारो विलंवितः वृहद्यत्तपार्श्वः भार्य्यालाभे विपत्तौ च पुनराधानमिष्यते छन्दोगपरि
शिष्टं कात्यायनः वैतरिपुनराधानं यस्याग्नीना विधीयते अकुर्व्वंस्तावदाप्नोति प्रायश्चित्तकृतामितो एवं सति भार्गवास्त्वा दिकाला शौचेपि स्वकी
याशौचे पि स्वयगमानन्तरमेवावलम्बित पुनराधानं कुर्यात् तथा दक्षः नैमित्तिकानि दानानि निपतन्ति यथा यथा तथा तथैव कार्य्याणि न कालस्तु
विधीयते तथा अरण्येकल्पमप्यंशं यावतिष्ठति पूर्व्वयोः न तावत्पुनराधानमन्यारण्यो र्व्विधीयते छन्दोगपरिशिष्टं कात्यायनः पूर्व्वयोनिः पूर्व्वा
वतसुनराधानकर्म्मणि विशेषोत्राम्युपस्थानमाज्याहुत्यष्टकं तथा अथ प्रोषितधर्म्माः तत्र छन्दोगपरिशिष्टं कात्यायनः निःक्षिप्याग्निं स्वदारेषु
परिकल्प्यर्त्त्विजं तथा प्रवसेत्कार्य्यवान्विप्रो वृथैव न चिरात्क्वचित् मनसा नैत्यकं कर्म्म प्रवसन्नप्यतन्द्रितः उपविश्य शुचिः सर्व्वं यथाकालमुपाचरेत् हा
रीतः नाग्निवेलायां प्रवसेत् सर्व्वास्तु च आपत्सु च प्रोषितोग्निवेलायां वाग्यतः प्रतिदिशं मनसा ध्यात्वा उपस्थाय मंत्रोतो हुत्वा अग्नेः व्रतपत इत्युप
स्थायाभिभाषते पैठीनसिः प्रवसितस्य प्रोषितमग्नावेव जुहुयात् निर्व्विष्ठा सौरस्यो पालानस्य अथासनस्येति आवसथ्याग्नेः मैत्रायणीयपरि
शिष्टं ऋषयोस्मत्पथास्तु का आधानात् तयोर्द्देरात्रापपररात्रायपन्नास्तरात्रायार्द्धमासायाग्निहोत्रमजुहुवुः तस्मात् मायास्यमाधानौ वार्द्धमास
ग्निहोत्रे जुहुयात् पक्षाद्रौपर्व्वणान्ते चा सा पंच प्रातरेव च चतुर्द्दश चतुर्गृहीतानि सकृद्ववपने मेकात्सपित। सकृद्धोमे सकृत्सा णि निर्म्मार्ज्जनं मिसे राम
र्वप्रातः मरीचिः पक्षस्तोमानयो गत्वाकस्मान्निवर्त्तितव्यः होमं पुनः प्रकुर्व्वीत न च तेन स दोषभाक् अथ सामान्यपरिभाषा छन्दोगपरिशिष्टं कात्या ८७

यनः नत्वेमावन्यहोमः स्यान्मुल्केकासयिदाहुतिम्स्वर्गभसिस्कृतायांवयावन् । सामगापत अग्निश्वगानिषपादाहोमावनाघकापाक गाहेग्न
समाप्नीतः तत्स्यभवतिकचित् अस्याग्नावन्यहोमः स्यात्तवैश्वानरदैवतम् चरुंनिर्वर्त्ताग्रहृत्यात्तस्यैवतस्यप्रायश्चित्तिस्स्यदारोपिपुनर्दारानकु
तपिकारारम्भन्तृपत् यदक्वेदग्निमानकर्त्तुःकहोमोस्यविधीयते स्वेग्नावेवमवेद्धोमोलौकिकेनकदाचननस्याहिताग्निः स्वकर्म्मलौकिकेपो
विधीयते अथाग्निपरिचर्य्यापत्याविपोगिन्याशुश्रुष्योग्निर्विनीतयासौभाग्यधल्यवैश्यकाम्ययाभर्तृभक्तयाअग्नेरिष्टासशुश्रूषांवुद्भार्य्याःस
वर्णिया।कास्येत्तद्दुत्वंचेद्दर्शयश्यामर्हितानुचेत् यावस्यादीरस्रसाज्ञासंयादिनीप्रियादस्याप्रियंवदाशुद्धीतामत्रविनियोजयेत् दिनक्रमेणवाकर्म्मेष
याजेष्टमयक्तौतुविभज्यसहवाकुर्युर्य्यथात्तानंयथा।शास्त्रवत् स्त्रीणांसौभाग्यतोज्येष्ठंविद्ययैवद्विजन्मनाम् नहिस्वल्पेनशल्येनंभर्त्तातुष्यति
योषिताम् भर्त्तुरादेशवर्त्तिन्यायया होमाहुतिकृतौभर्तीचतोषितोयत्रसास्त्रीसौभाग्यमर्हति छन्दोगपरिशिष्टंकात्यायनः विनष्टंसुक्रन्युज्जंप्र
सकस्थानग्नदर्व्वीपिमलस्युस्वंचमुसलंप्रहरेज्ञातवेदसि यत्तयावर्वः अवसथ्यान्तुकर्म्मार्थयोग्निरुद्धयतेक्वचित्कर्मणःकर्म्मणःकालेतन्नम
हुतपासकम् छंदोगपरिशिष्टंकात्यायनः द्विर्भ्रतोपदिसंसज्येतरोग्निर्लौकिकाग्न्यादिभिः समस्ष्टोभवतितदातमग्निंपरिसज्यासंसष्टमग्नि
जागरयेतरसैन एतेनोहतस्याविशिष्टस्याग्नेरदुष्टत्वाल्लौकिकत्वंप्रतिपादयति तथापयद्हेपिरगुपितयत्तत्त्वथायेकर्मकपिण्डकापांका-
त्यायनसूत्रविषयेलौकिकमयुक्तत्वात् अस्यार्थः कर्क्केणव्याख्यातः विषयेसन्देहं विषयेकिमाहिताग्निर्गृह्यतांलौकिकाग्निंग्रहीतात्कुतः अ
युक्तत्वात् विधिनागार्हपत्यादेरयुक्तत्वात् अप्रयुक्तत्वादप्रतिपादितत्वादितियावत् तथाज्योतिष्टोमेवसंतांकवीनामेकप्रोकारुणोनामिसरा-
कुनग्रहणमत्त्वाद्विषीविरय्यमाणपर्य्युपरिघास्यन्निति तत्रगार्हपत्यादेरग्निविशेषस्याप्रतिपादितत्वात् लौकिकाग्निर्ज्वालितैशब्दाउपपि

श्रा॰स॰ धारिणीपा एवमन्यत्रापि विषयेयत्राग्नेर्विशेषो नश्रुतः तत्र लौकिकमेवाग्निं गृह्णीयादिति कर्क्कव्याख्यां पिण्डपितृयज्ञकर्क्कभाष्ये शास्त्रान्तरष्क
९८ तिः ऊर्द्ध्वं वै देवानामहः पूर्वमनुष्याणाम् · उपर्यर्द्धं पितॄणां · उपर्य्येवमपूर्वेणानोचितमित्यर्थः जनने मरणे नित्यमाशुच्यमनुधावति सपिण्डान्मातृवं
धूश्च यत्र क्वचनागच्छति यो निज्ञाति द्विजोच्छिष्टमाशुच्यं सहवासिषु मृतं गुरोरशौचं स्यान्मृत्युप्रसवकारणम् कारणाद्गच्छति प्रेष्यं तदाशुच्यं
न तान्व्रजेत् दक्षः सद्यः शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा षड्दशद्वादशाहश्च पक्षो मासस्तथैव च मरणान्तं तथा चान्यद्दशपक्षास्तु सूतके
मनुः शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः वैश्यः पंचदशाहेन शूद्रो मासेन शुद्ध्यति पराशरः एकाहाद्ब्राह्मणः शुद्ध्येद्योग्निवेदसमन्वितः
त्र्यहात्केवलवेदज्ञो निर्गुणो दशभिर्दिनैः दक्षः एकाहाद्ब्राह्मणः शुद्ध्येद्योग्निवेदसमन्वितः हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा अत्र ही
ने श्रौताग्निरहिते वेदाध्यापनस्मार्त्ताग्नियुक्ते त्र्यहः हीनतरे · श्रौताग्निवेदाध्यापनरहिते केवलस्मार्त्ताग्नियुक्ते चतुरहः । अथाशौचे विधि
निषेधौ जाबालः संध्यां पंचमहायज्ञान्नैत्यकं स्मृतिकर्म्म च । तन्मध्ये हापयत्तेषां दशाहान्ते पुनर्नृणाम् · उपर्यर्द्धं पितॄणाम् · उपर्य्येवमपूर्वे
णानोचितमित्यर्थः जनने मरणे नित्यमाशुच्यमनुधावति सपिण्डान्मातृवंधूश्च यत्र क्वचनगच्छति यो निज्ञाति द्विजोच्छिष्टमाशुच्यं सहवा-
सिषुच्यं सहवासिषु मृतं गुरोरशौचं स्यान्मृत्युप्रसवकारणम् कारणाद्गच्छति प्रेष्यं तदाशुच्यं न तान्व्रजेत् दक्षः सद्यः शौचं तथैकाहस्त्र्यहश्चतु
रहस्तथा षड्दशद्वादशाहश्च पक्षो मासस्तथैव च मरणान्तं तथा चान्यद्दशपक्षास्तु सूतके मनुः शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः वैश्यः पं
चदशाहेन शूद्रो मासेन शुद्ध्यति पराशरः एकाहाद्ब्राह्मणः शुद्ध्येद्योग्निवेदसमन्वितः त्र्यहात्केवलवेदज्ञो निर्गुणो दशभिर्दिनैः दक्षः एकाहा राम
द्ब्राह्मणः शुद्ध्येद्योग्निवेदसमन्वितः हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा अत्र हीने श्रौताग्निरहिते वेदाध्यापनस्मार्त्ताग्नियुक्ते त्र्यहः हीनतरे श्रौ ९८

ताग्निवेदाध्यापनरहिते केवलस्मार्त्ताग्नियुक्ते चतुराहः अथाशौचे विधिनिषेधौ जाबालः संध्यां पंचमहायज्ञान्नैत्यकं स्मृतिकर्म्म च तन्मध्ये हापयेत्तेषां दशा-
हांते उनः क्रियाः छंदोगपरिशिष्टे कात्यायनः सूतके कर्म्मणां त्यागः संध्यादीनां विधीयते होमः श्रौते च कर्त्तव्यः शुष्कान्नेनाथवा फलैः अकृतं हारयेत् ।
स्मार्त्ते तदभावे कृताकृतं हारयेदिति किं तस्यानारंभविधानतः कृतमोदनसक्त्वादि तंडुलादि कृताकृतम् व्रीह्यादि चाकृतं प्रोषिदिति हव्यं त्रिधा बुधैः सू-
तके च प्रवासे च अशक्तौ श्राद्धभोजने एवमादिनिमित्तेषु हावयेदिति योजयेत् जाबालः जन्महानौ वितानस्य कर्म्मत्यागो विधीयते शालाग्नौ केवलो-
होमः कार्य्य एवान्यगोत्रजैः मनुः उभयत्र दशाहानि कुलस्यान्नं न भुज्यते दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते यमः सूतके च कुलस्यान्नमभोज्यं म-
नुरब्रवीत् एकादशेऽह्नि कुर्य्यात्तु दानमध्ययनं तपः । अथान्त्येष्टिः तत्र कात्यायनः सायमाहुत्यां हुतायां चेद् दुर्बलः स्यात्तथैव प्रातराहुतिस्तत्संस्थाप्रु-
तेः अग्निहोत्रस्य यावज्जीवत्वात् कालेन कृतत्वात् पौर्णमासान्तत्वगावास्याग्निहोत्रवद्विमेषु चेदान्हिपमारणं मरणं दक्षिणाग्नेरेवाधानसन्देहेनवा युक्त-
त्वात् गार्हपत्येग्न्यादि प्रमार्गादनाद्याहवनीये मरणान्तं भवति संस्थाप्यवाप्रक्रमत्वात् हविष्यवद्धौम्यं संदीपवती प्रत्यग्नि विष्वयंतु यास्त्वापना
त्ग्नीनादाय सर्वीचीवां दक्षिणागच्छत्यसा विजनं साधयित्वा समवहुलतृणे रत्नगग्निचितिं चित्वो हस्तसीरिणीः पुरुषाकृति विशाखशाखगंध ष्टित-
णमुरवाग्न स्रुवां तयेत निक्कन्तनाति क्लात्वा शिरीषं चेत्कृत्स्नशादिनिशय यथापसव्यं विधान्तराद्धा वितायनमादधाति कृष्णाजिनमास्तीर्य्य प्राक्शिरसं स-
मसु प्रारण्यापनने यूसमहिरण्यकृतान्प्राश्नाति मुखे प्रथमं दक्षिणहस्ते जुहूमादापति । वृत्तद्गणस्यासावापमूर्तं सव्ये प्रसिथं बांसुं चे ग्निहोत्रहवणीन्ना-
सिकयोः भ्रुवोः कर्णयोः प्राणिप्रहरणे शिरस्सि चमसं प्रणीतप्रणयनं कपालिकेपार्श्वयोर्यादोदरे पात्रीं समयत्तः धानी वृषांदाद्यवंतीं शिश्ने शम्यामरणी
वृषणयोरन्त्वेरोरुयत्तपाणिं स्फ्यान्यत्सुवहरणं मन्यनाश्मयानासयस्मयानि वा त्रायणा सुदयादहरणीनत्सष्ट्रा कर्णमाहसहस्तपोदृष्ट्वां गेत्वं गार्नी ति

गा·स·
९९

जानुकरोनैवा स्थिरं संदेहा हृदया मुखमवछिद्याग्निभिरादि पयन्त्याहुतिं जुहोति पुत्रेयेनेऽन्योवाज्ञात्यगः अस्मत्त्वमधिजातोसित्वय्ययं जायतां पुनः ।असौ
स्वर्गायलोकायस्वाहेति यजुर्षीरयन् अस्मात्त्वमधिजातोसी निमंत्रोयथा हे अग्ने अस्माद्यजमानादाधानकाले त्वं अधिजातोसि समुत्पन्नोसि अहातोहं ब्रवी
मि अयंयजमानः पुनरपि त्वत्सकाशाज्जायतामुत्पद्यताम् · किमर्थम् स्वर्गायलोकाय स्वर्गलोकप्राप्त्यर्थम् · असाविति विशेषनाम विशेषणार्थम् स्वाहेति
संप्रदानमंत्रः तथाह्नदोगपरिशिष्टकात्यायनः हुताग्नेः पापमाहुः सांडुर्द्वलक्ष्वेग्रहीभवेत् प्रातर्होमिस्तदेवस्यात् जीवेत्यादि पुनर्नवादर्द्वलं स्नपयित्वा तुशुद्ध
चैलाभिसंहतम् दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत् घृतेनाभ्यक्तमाम्नाय्य सवस्त्रमुपवीतिनम् चंदनोसित सर्वांगसुमनोभिर्विभूषितम् हिरण्य
शकलान्यस्य छित्वा छिद्रेषु सप्तसु मुखेष्वथो पिधायैनं निर्हरेयुः सुतादयः आमपात्रेन्नमादाय प्रेतमाग्निपुरःसरम् एकोनुगच्छेत्तस्यार्द्धमध्यमं पुत्सृजेद्दु
वि अर्द्धमोदनं ग्रामप्रमासीनोदक्षिणामुखः सव्यंजान्वाच्य सनकैः सतिलं पिण्डदानवत् अथयुक्त्वा दिशामुत्सकुर्यांहाखच यं महत् भूप्रदेशे शुचौ देशे पश्चा
द्वित्यादि लक्षणम् तत्रोत्तानं निपात्यैनं दक्षिणाशिरसंमुखे आज्यपूर्णां स्रुवं दद्यात् दक्षिणाग्रमसि स्रुवं पादयोरधरांप्राचीमरणीं शिरसीनरान् पार्श्वयो
स्रूपंच मसौ सव्यदक्षिणायोः क्रमात् मुशलेन सह न्युब्जमन्तसच्चौरुलूखलम् चांद्रोविनीकमत्रैव अनयनोविभीः अपसव्येन कृत्वैतहाग्यतः पितृदिग्मुखः
अथाग्निं सव्यजानूकोदद्याद्दक्षिणतः शनैः सव्यजानुत इति पातितवामजानुः अस्मात्त्वाधिजातोसित्वदयंजायतां पुनः असौ स्वर्गायलोकायस्वाहेतिय-
जुरीरयत् एवं गृहपतिर्दग्धः सर्वेनरतिदुःष्कृतम् यत्तपैनं दाहयेत्सोपि गतिं प्राप्नोत्यनिन्दिताम् यथास्वां पुत्रभृत्यान्ते भयस्थानेपि निर्भयः अतिकामपरं
ब्रह्मैव विंदति अथानवेस्रमेसापः सत्वंएवशावस्पृशः स्नात्वा सचैलमाचम्य दद्युरस्योदकं जले गोत्रनामपदान्तेन तर्पयामीत्यहं वदः दक्षिणाग्न्यानकु
शाग्रगः प्रस्थैलांस्तु पृथक्पृथक् एवं कृतोदकान् सम्यक्सर्वान् शाड्वलसंस्थितान् आप्लुत्य नगमान्नान्वदेयुस्नेनुयायिनः माशोकं कुरुतामं त्यसर्वे राम
· शाखासति २१

स्मिन्प्राणि धर्म्माणि धर्म्मं कुरुत यत्नेन यो वः सहगमिष्यति मानुष्ये कदलीस्तम्भनिस्सारे सारमार्गणम् करोति यः स संमूढो जलबुद्बुदसन्निभे गन्त्री वसुम-
ती नाशमुदधिर्दैवतानि च फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिवेदना सर्वे क्ष-
यान्ता निचयाः पतनान्ताः समुच्छ्रयाः संयोगाश्च वियोगान्ता मरणान्तं हि जीवितं श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः अतो न रोदितव्यं हि क्रियाः कार्य्याः
प्रयत्नतः एवमुक्त्वा व्रजेयुस्ते गृहं बालपुरःसराः स्नानाग्निस्पर्शनाद्याः स्मैस्पर्शे पुरितरे कृते अनयैवावृता नारी दग्ध्या तु अनस्थिता अग्निप्रदानमन्त्रो
स्यान्नप्रयोज्य इति स्थितिः अग्निनैव दहेद्भार्य्यां श्रुतं त्रापतितां न चेत् उदुम्बरेण पात्रेण दाहयेल्लघ्य गन्तिके श्रुतं त्वेति आधानसमयेऽनुपस्थितां अथा-
स्थिसंचयनम् अपरेद्युस्तृतीये च अस्थिसंचयनं भवेत् गोत्रजनिधिरुद्दिष्टऋषिभिः सोधुनोच्यते स्नात्वाऽनन्तर्वस्त्रं कृत्वा सपिण्डनपयसा तया सिञ्चेदस्थीनि स-
र्वाणि प्राचीनावीत्य भावयन् शमीपलाशशाखाभ्यामुद्धृत्योद्धृत्य भस्मतः आज्येनाभ्युक्ष्य गन्धेन सेचयेद्दध वा ग्राम्या मृत्पात्रसंपुटे कृत्वा सूत्रेण परिवेष्टयच्च अ-
घं शिन्या शुचौ भूमौ निखनेद्दक्षिणामुखः पूरयित्वाऽवटं पङ्कपिण्डशैवालसंयुतम् ततोपरि समं शेषं कृत्वा पूर्वां हि कर्मणि एषएव गृहीताग्नेः प्रेतस्य वि-
धिरिष्यते तावदग्नेः प्रदानं स्याद्यथानोक्तउक्तमने तथा निर्देशमरणे स्थीन्याहृत्याभ्युक्ष्य सर्पिषा दाहयेत्तूर्णमाच्छाद्योर्णाजाशादिषु पूर्ववत् अस्थ्याम-
भावे पर्णानि सकलान्युक्त आहृता दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम् एवमेवाहिताग्नेस्तु पात्रन्यासादिकं भवेत् कृष्णाजिनं चास्य विशेषो दर्श्यु-
नोदितः पारस्करः दाहयेत भूमिपोषणादि समानं यथा विहिताग्ने रुदकान्तस्पर्शनात् शालाग्निना दाहयन्ते नमाहिताग्नेस्तूष्णीं ग्रामाग्निनेतरं संपु-
त्रमैथुनं नोदकं करिष्यामह इति कुरुध्वं मा चैवं पुनरिह गवर्षपेत् कुरुध्वमेवं तरस्मिन् सर्वे ज्ञातयो ह्यपूपत्यात् सप्तमात्पुरुषाद्दशमाद्वा समानयामवयो
वंधुस्वकुलमनुस्मरेयुरेकवस्त्राः प्राचीनिवीतिनः संव्यस्य नामिकाया अपभालोऽप्रभुः शोचंदत्वमिति दक्षिणामुखा निमज्जेति प्रेतायोदकं सकृत् प्र-

ग्रा·स· सिंचत्यजलिना सावेनत्त इत्सुदीर्धानशुचौ देशेशाद्वलवत्सु पविष्टास्तैर्नानमवदेयुरअनपेक्षमाणा ग्राममभ्यां सिउपवीतितिरोभूताः· कनिष्ठपूर्वाः कं
१०० दोगपरिशिष्टं कात्यायनः महापातकसंयुक्तो दैवात्स्यादग्निमान्यदि पुत्रादिः पालयेदग्नीन्युक्तआदोषसं... ात् प्रायश्चित्तं नकुर्याद्यः कुर्वन्वाग्निय
येपदि गृह्यं निर्वापये च्छौमृदस्येशपचिक्रदम् शादयेदुभयंवा प्सुअद्भ्यो ग्निरभवदयतः पात्राणि ... ... हिमापदहेदस्वेववा सिंपेत् इत्थवमधिकमहाध·
र्म्माधिकृतपीहलायधकृतौ ब्राह्मणसर्वस्वे भावसथ्याधानादिअन्त्येष्ठान्तकर्म्मणां मंत्रव्या ... वसथ्याधाने॰ अग्निस्थापनादाज्यहोमानन्तरं प
रस्करः आज्यभागाविष्ट्वाआज्याहुतीर्जुहोति त्वन्नोअग्नेः सत्वन्नोअग्नइमंमेवरुणतत्वायामि ये ते शतं·मयाश्चाग्नउदुत्तमंभवतन्न ... ष्टौ पुनस्तादे
वमुपरिष्टादिति तत्राज्याहुति मंत्रे, यथा त्वन्नोअग्नेवरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः। यजिष्ठोवन्हितमः शोशुचानो विश्वाद्वेषां सि प्रमुमु
ग्ध्यस्मत्स्वाहा अस्यार्थः हे अग्नेत्वं वरुणस्य देवस्य हेडः क्रोधं अस्मिन्कर्म्मणि ... गुणयजनितं· अवयासिसीष्ठाः अपनय किंभूतस्त्वं नोः अस्मान् वि
द्वान्· त्वमेव अस्माकं कर्म्मसाक्षित्वेनास्मान्जानासीत्यर्थः नकेवलं वरुणस्य क्रोधमपनय अस्मत् अस्माद्वेषांसि दौर्भाग्यानि प्रमुमुग्धि अपोद्धय किंभू
तानि· विश्वा सर्वाणि· त्वं किंभूतः यजिष्ठः यागातिशयउत्तमः पुनः किंभूतः वान्हितमः हविषांवहने ... वल्लोसातिशयः किंभूतः शोशुचानः उत्तरो
त्तरं दीप्यमानः अग्नेत्वमस्मान्जानासि अतोस्माकमस्मिन्कर्म्मणि प्रमादादिजनितवैगुण्यकृतं वारुण्यं क्रोधम ... नय अस्माकं दौर्भाग्यानि मोचये
ति प्रार्थनावाक्यार्थः हेड इति हेडृ अनादर इत्यस्यप्रयोगः द्वितीयैकवचने प्रथमैववचनम् सत्वन्नोअग्नेवमोभवोतानेदिष्ठो अस्याउषसोव्युष्टौ अव
यक्ष्वनोवरुणंररणोवीहि मृडीकं सुहवोनएधि अस्यार्थः हे अग्ने सत्वं नोस्माकं॰ अवमोभव अवितृतमः पालयितृतमो भव सत्वंकः यस्त्वं उतीस राम
त्वानेदिष्ठः यत्वं पालकत्वेन सन्निहित इत्यर्थः कस्मिन्समये भव मो भव अस्याउषसः अस्यैवप्रभातस्य व्युष्टौ समाप्तौ अस्मिन्नेव दिवस इत्यर्थः। १००

नकेवलंमेवंनोस्मान्अस्मिन्ऽधि आगच्छकिंभूतः सुहवः सुखाह्वानः आगत्यचवरुणं अवयस्यवसूजय· किंकुर्वन्नोस्माकंमृडीकंरराणः अस्मत्संबंधि–
सुखकरंहविर्ददत्सन् सुखंचवीहितदेवभक्षय· हेअग्नेयतस्त्वंलोकस्यपालनेननित्यंसन्निहितः सर्वदात्वमेवास्माकंपालकोभव· अस्मान्प्र-
त्यागच्छ· आगत्यचअस्मदीयहविर्दानेनवरुणंश्रूजय· अत्वमपिमत्स्येतिप्रार्थनावाक्यार्थः अवसइति अवरक्षणइत्यस्यअवतमसुस्यतकार
लोपः छांदसः अवरक्षणइत्यस्यऊतिमूतिनिपातनात् ऊतीतिरूपंतत्रऊतीयैकवचने सुपांसुलुगादिनाकोनपूर्वसवर्णादेशेनऊतीतिरूपम् र
राणइतिरादानइत्यस्यसउ·लुकिशानचारूपम् इमंमेवरुणश्रुधीहवमद्याचमृडय त्वामवस्युराचके अस्यार्थः हेवरुणममइमंहवं· आह्वानंश्रु-
धिश्रृणु· श्रुत्वाअस्मिन्दिवसेमृडयच· सुखीभवत्वां· आचके· स्वयंकामये किंभूतोहंअवस्युः अवनपालनमिच्छन् अहमात्मनःपालकमिच्छ
न्त्वापालकंकामयेइत्यर्थः ममाह्वानंश्रुत्वागत्यचवरुणोममाहुत्यासुखीभूत्वामांपालयत्विति प्रार्थनावाक्यार्थः। मृडयेतिमृडसुखनइत्यस्य-
धातोरूपम्· आचकइतिचकतृप्तौइत्यस्यआङ्पूर्वस्यरूपम् तत्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः अहेडमानोवरुणेह
बोध्युरुशंसमानआयुःप्रमोषीः अस्यार्थः हेवरुण· तच्छब्दोयच्छब्दार्थः तदाशास्तइतिपुनस्तच्छब्ददर्शनाततःयत्वाइतिसंबंधः।यत्त्वां
यामियाचामिकिंभूतः वंदमानः केनब्रह्मणात्रयीलक्षणेनवेदेनतदत्रयजमानःयागकारीआशास्तेप्रार्थयतिकैर्हविर्भिः· होतव्यैःघृतैः तद्
हंनित्यंयाचामितदानींहविर्हीनपूर्वंप्राशास्महइत्यर्थः हेवरुणउरुशंस· बहुविस्तरइहकर्म्मणिअहेडमानअक्रुध्यमानः त्वंबोधिजानीहि ज्ञा
त्वाचनोस्माकमायुर्जीवितंमाप्रमोषीः मापखण्डय हेवरुणयत् आयुषोअखण्डनंममप्रार्थनीयंतदहंहविर्हीनेनत्वामाराध्यप्रार्थयामितत्त्वं-
नीहिज्ञात्वाचममआयुर्मापखण्डयेतिप्रार्थनावाक्यार्थः अत्रयामीत्यस्यवर्णागमोवर्णविपर्ययश्चेतिचकारल्लोपः। येनशांतंवरुणायेसहस्त्रंय-

ऋ॰स॰ स्त्रियाः पाशा विनता महान्तः तेभिर्नो अद्य सविता उत विष्णुर्विश्वे मुंचंतु मरुतः स्वर्काः। अस्यार्थः हे वरुण ते तव शतं पाशाः। किंभूताः विनता विस्ती
१०१ र्णाः अपि च ये रुहस्रं शतस्य सहस्रयो रुपादानं अति बहुलोपलक्षणार्थं किंभूताः यज्ञियाः यज्ञ अतथाभूता अनुष्ठानजनिता अपि किंभूता महान्तः
सर्वलोकव्यापकाः तेः पाशैः नोस्माकं अद्य इदानीं सविता मकेवलं उत विष्णुः विश्वेदेवा मरुतो वायवः स्वर्काः सुष्टु अर्काः आदित्या मुंचं
तु अयं वा कार्थः सवित्रादयो देवा अनया आहुत्या नो षिता अस्मान् कुर्वन्तु तेभिरिति तच्छंदस्य तृतीया बहुवचने बहुलं छन्दसीति ऐसा
देश निषेधे बहुवचने सत्ये दिति त्वम् अयाश्चाग्ने स्यनभिशस्तिपाश्च सत्वमित्वमया असि। अया नो यज्ञं वहास्यया नो धेहि भेषजं अस्यार्थः हे
अग्ने त्वं अया श्च असि प्राणिनां शुभावह विधिरप्यसि अपरं अनभिशस्तिपाश्च नास्ति आरभ्यमाणा अभिशस्तिर्याचना यस्य पुरुषस्य सो
नभिशस्तिः तमपि पासि रक्षसि इत्यनभिशस्तिपाशात्वं अयमर्थः यश्च त्वां रक्षणार्थं न याचते तस्यापि त्वं रक्षको भवसीति तत इत्थंभूतस्त्वं
अया आगच्छ आगत्य नोस्माकं यज्ञं वह यतो हविरेतत् हुतं तद्देवान् प्रापय किं तत्त्वं सत्यमितं सत्यमेव अया असि ज्ञाता असि जगतः संसार
निस्तारोपायं जानासीत्यर्थः अतः कारणात् दपित्वम् अया आगच्छ आगत्य नोऽस्माकं भेषजं धेहि अस्मिन् विस्तारोपायमौषधं परिकल्पय
अत्र पद्यपि लोके शुभावहवाची अयः शब्दो अकारान्तस्तथाप्यसुनन्त इति छन्दस्मि सकारान्तः सत्यमिति शब्दोऽव्ययमवधारणार्थः अया
नो यज्ञं वह अया नो धेहि वह अया नो भिषजमित्यत्र अया इति क्रियापदद्वयम् अतन्त्यार्थित्वद्योतनार्थम् अत्र अया इति इण् गतावित्यस्मा
ल्लेट् मध्यमपुरुषवचनं सिप् इतश्च लोपः परस्मैपदेष्विति इकारलोपः धातोर्गुणः लेटोडाटाविति आडागमः आद्गुणः पूर्वस्य गुणस्याकारेणैकादेशे सति वर्णव्यत्ययात् ह्रस्वत्वं अया इति सर्वे गत्यर्था ज्ञानार्था इति छत्वादेति जानातीति असुन् प्रत्यये रूपम् उदुत्तमं वरुण पाशमस्मद् राम १०१

वाधमं विमध्यमं ॅ श्रथाय अथावयमादित्यव्रतेतवानागसो अदितयेस्याम: अस्यार्थ: हेवरुण उत्तमं पाशं अस्मत् उच्छ्रथय उतऊर्द्ध्वं श्लथ
कृत्वानय अधमं पाशं अवश्रथ अवाचीनं श्रथायेति ऊर्द्ध्वं नत्त देवमध्यमं उत्तमाधमयोरन्यत् विश्रथाय स्वस्थानस्वथयं अथअतए
वंकृते सति आदित्य अदितेः पुत्र वरुण उतावाधममध्यमपाशत्रयश्लथीकरणमभ्यर्थ्य वारुणव्रतविरोणनवर्षं तवअनागसः अनपराधाः
सन्तः अदितये अदीनतायै स्याम दीना भवेम इत्याशासा अत्र श्रथयेति रलयोरेकत्वस्मरणात् लकारस्य स्थाने रेफः श्रथयअथावयअथाव
यमित्यत्र द्वयोरपि अकारः पदे अप्रक्यमानत्वात् संहितायांछान्दसः अदितये इति दो अवखण्डने इत्यस्माद्धातोः क्तिन् प्रत्यये कृते अदिति
नं दितिः अदितिः तादर्थ्ये चतुर्थी अदितये अदीनतायै इत्यर्थः। भवतंनः समनसौ सचेतसावरेपसौ मायज्ञंहिं ॅ शिष्टं मायज्ञपतिं जातवेदसौ
शिवौ भवतमद्यनः अस्यार्थः हे जातवेदसौ अग्नी अत्राहितौ मूर्त्तएकोग्निः संबोध्यः अपरस्त्वामूर्त्तो मंत्रप्रकाश्यः अस्माकं अरेपसौ रपः।
पापं तदनयोर्नास्तीति अरेपः तौ अरेपसौ भवतं किंभूतौ युवां समनसौ समानमनस्कौ एकहृदयाविति यावत् पुनः किंभूतौ सचेतसौ समा
नज्ञानौ किंच यज्ञं दर्शपौर्णमासादिमाहिंसिष्टं मा विनाशयतं तथा यज्ञपतिं मां माहिंसिष्टमित्यनेनैव संबंधः तथा अद्य अस्मिन्नेव दिवसे नोस्मा
कं शिवौ शान्तौ भवतम् हे अग्नी युवामेकचित्तौ अपापौ च भूत्वा अस्माकं यज्ञस्य शरीरस्य वा हिंसकौ शान्तौ च भवतमिति याज्ञावाक्यार्थः अत्र
शिवेतरविति परेयक्ष्यते संहितायां तु सचेतसाविति पाठः। अग्न्याधेयदेवताभ्यः स्थालीपाकहोमानन्तरं पारस्करः स्थालीपाकस्याग्न्याधेयदे
वताभ्यो हुत्वा जुहोति स्विष्टकृते स्वाया अग्नय इति तत्र मंत्रो यथा अयाश्चाग्नेवषट्कृतं यत्कर्मणात्यरीरिचं देवा गातुविदः स्वाहा अस्यार्थः
हे अग्ने अयाः आगच्छ चकारउत्तरत्रसंबंधनीयः त्वय्यागते यच्च वषट्कृतं यज्ञकर्मणा होमादिना अत्यरीरिचं अतिरिक्तं कृतवानस्मि तद्देवा

ब्रा·स· अस्मादयः शमयंतु: इत्यध्याहार्य्यं किंभूता: गातुविद: गातुंपत्तं विदंति जानंतीति गातुविद: असरीरिचमितु पलक्षणार्थः· यूनं च यत्कृतवान-
१०२ स्मीसपिवा शमयलिति वाक्यार्थः गातुर्यज्ञ इति निर्दंसमारोपकपूर्व्वक पुनराधाने अरणिकृतपने अयने योनिकृत्विज इति मंत्रव्याख्यानिरन्ने
र्व्वे पूर्ववदेव प्रकारेण अनुसंधेया इत्याधानमंत्रव्याख्या मणिकाधाने पारस्करः उत्तरपूर्व्वस्यां दिशि यूपवदवटं खाते सति देशत्वात् देवस्यत्वेत्यभ्या
दानं· इदमहमिति· अवटं गिल्खनमिति अभ्रिग्रहणे आभ्यां भूमिपरिलेखने च मंत्रो यथा देवस्यत्वा सवितुरादित्यस्य प्रसवेश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्याम्· आददे नारिरसि· प्रसवे अभ्यनुज्ञाने सम्मतावितियावत् केन गृह्णामि अश्विनीकुमारयोर्बाहुभ्यां तथा पूष्णः आदित्यस्य ह
स्ताभ्यां त्वं नारी असि॰ मनुष्यस्त्रीभवसीत्यनुवादः नारीअसीति अभ्रिमूर्त्तेस्सवितुस्सम्मतौ अश्विनीकुमाराभ्यां बाहुदानेन पूष्णा हस्तदाने
नानुगृह्णामीति क्रियावाक्यार्थः इदमहं रक्षसां ग्रीवा अपिकृन्तामि अस्यार्थः अहः इदं यन्मणिकाधानार्थं गर्त्तं खनामि तन्नूकुंभः रक्षसां यत
विरोधिनां ग्रीवा अपिकृन्तामि छिनद्मि निर्विघ्नयज्ञसंपत्तये अहं यज्ञविरोधिनां शिरांसि छिनद्मीति वाक्यार्थः अवटे मणिकाते पणे पारस्करः
तस्मिन्मणिकं मिनोति तत्र मन्त्रो यथा समुद्रोसि नभस्वानार्द्रदानुः शंभूः अस्यार्थः हे मणिक त्वं समुद्रोसि जलाधाररूपोसि॰ किंच नभस्वान्
वायुरूपः असीति पूर्वसंबंधनीयम् समुद्रवातयोः सारूप्यप्रतिपादकं विशेषणमाह आर्द्रदानुः आर्द्रजलं शीतलादिकं ददाति आर्द्रदानुः
एवंभूतस्त्वं शंभूः कल्याणो भवः यतस्त्वं समुद्रवातयोस्समानः नोस्माकं कल्याणो भवेति प्रार्थना वाक्यार्थः आर्द्रदानु· इति आर्द्रं ददातीत्यस्मि
न्नर्थे डुदाञ् दाने इत्यस्य दधातेर्भ्यां त्वविशुणादिसूत्रेणनुप्रत्ययः मणिक उदकान्मके पारस्करः अप असिंचसापारवतीरिति आपोहिष्ठेति वेति
तत्र मंत्रो यथा आपोरेवतीः क्षयथाहि वस्वः क्रतुंच भद्रं बिभृतंच रायश्च स्थस्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयोधात् अस्यार्थः हे आपः किं- राम १०२

भूतारेवंतीसंपर्याः यूयंक्रतुंच अमृतंच बिभृथ धारयः किंभूतं भद्रंकल्याणकरंनकेवलं रायष्पोषस्य धनानिचभरथः पुनः किंभूतायूयम् अपा
मपत्नस्वव्रन्हेः हे· वस्वस्थः पत्नीः पालयित्र्यः हियस्मात् यूयंवस्थः मधुरामधुरंहिसर्वस्यप्रियं। भवति· अस्मात्सृयथः अस्मिन्लोके निवसं·
याकिंविद्वत्यः· वयोधात्· वयआयुर्दधातीतिवयोधात् सकलप्राणिनामायुर्दात्र्यः एवंभूतायूयं· सरस्वतीनदीतद्गुणते· नद्दनीत्यर्थः रेवती·
रिति रेवृशब्दः इत्यस्मात्तस्य रिवत्यये आगमानुशासनस्यानित्यत्वात् उत्तमनभवति वसुस्यात्पध्वरेत्यवस्त्वेत्यभिधानम् आपोहिष्ठामंत्रव्याख्या·
नंसंध्याप्रकरणेनुसंधेयम् इतिमणिकाधानमंत्रव्याख्या अथवैश्वदेवग्रहणम् तत्रपारस्करः वैश्वदेवांतेमादत्ते विश्वाभ्योमानाष्ट्राभ्यःपरि
पाहिसर्वतः अस्यार्थः हेदेवसर्वाभ्यः नाष्ट्राकारिणीभ्यः मामांसर्वतः प्रतिपाहि· सर्वप्रकारेणरक्षस्वेतिवाक्यार्थः वैश्वदेवेस्वाग्नातदीमयो·
श्वसमत इत्यग्निप्रजानिरग्निवैश्वदेवप्रकरणेनुसंधेयापस्मादिकर्माणिमायश्चित्तहोमेपंचवारुणमंत्रार्थाआधानप्रकरणेऽनुसंधेया पिंडपि
तृयज्ञमंत्रार्थ्याश्च प्रकरणेऽनुसंधेयाः व्रीहियवाग्रप्राशनेआग्नेहोमानन्तरंपारस्करः आज्यभागाविष्ट्वा आज्याहुतीर्जुहोतिशतायुधाइति त
न्मंत्रोयथा शतायुधायसहस्रवीर्यायशतोतयेअभिमातिषा हेशतंवयोनः शरदोजिहीथार इन्द्रोनएषदरितविनानिविश्वा अस्यार्थः यइन्द्रो·
नोस्माकंशरदः शतंजिहीथाः वर्षशतंसुसुखेनाभियायती त्यर्थः यइन्द्रोनोस्माकंदुरितानिव्यसनानिविघ्नानिएषद् तपति अपगमयतीत्यर्थ
तस्मैइंद्राय अदः एतद्धविः स्वाहा किंभूतायशतायुधाय अनेकप्रकारवज्राय· शतवीर्याय शतसंख्यबलाय· शतोभये शतधारस्तलकारायअ
भिमातिषा हे अभिमानयः प्रतिपक्षान्सहते अभिभवतीतिअभिमातिषाट् तस्मैअभिमातिषाहे। शतोभयइतिभूतिसरणम् अवरक्ष
णइतिधातोः प्रयोगः अभिमातिसाहेरतिछंदसिसहइति विचप्रत्ययः नएषदिति णीञ्प्रापणइत्यस्यधातोः लाट् तिप्· इत्यप्रत्तोपः परस्मैप

ग्रा॰स॰ इष्विति इकारलोपः सिवहुलीलादीतिमिप् लोपेअडागमः धातोगुणः एदास्यविशेषेणपाठात् एकारनकारयोः संहिताकार्य्यं न भव-
१०३ ति अहरहस्त्वल्कान्स्सत्वात्सकारलोपश्चेत्यतः पथयो देवयाना अन्तराद्यावापृथिवी इयंति तेषां यो द्यामियजिना वहाथ तस्मैनो देवाः परिदत्तेसर्वे
अस्यार्थः हे सर्वे देवाः नो अस्मानिह प्रकृते कर्म्मणि परिदत्त समर्प्पयत कस्मैः तस्मै इति कस्मै ये पंथानस्तेषां पथामध्ये आवहाः प्रापयति किं अह्या-
निः अहानि न विद्यते हानिर्यस्मिन्देशे तं प्रदेशम् अजीतं जनाभिभवम् न विद्यते अभिभवो यस्मिन्देशे तं प्रापयतीत्यर्थः तेषामिति केषां ये च-
त्वारः पथयः पंथानः किंभूताः अन्तरापृथिवी वियन्ति द्यावापृथिव्योर्म्मध्ये विविधवल्मकारेण गच्छन्ति पुनः किंभूता देवयाना देवानां यानं गमनं यैः
पथिभिरित्यर्थः स्थालीपाकेनाश्वप्राणे देवताहोमानन्तरं पारस्करः स्थालीपाकस्य प्रपरो देवताभ्यो हुत्वा जुहोति स्विष्टमग्ने अभितः प्रीणाहि न
इमंत्रो यथा स्विष्टमग्ने अभितः प्रीणाहि विश्वाश्च देवः पृतनाअभिष्यन् सुगं नु पंथां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः अस्यार्थः नु हे अग्ने ज्यो-
तिर्म्मध्ये ज्योतिषामन्तरा मनःसारभूतं इति यावत् नोस्माकं पंथानं प्रदिशन् प्रकाशयन् एहि आगच्छ किंभूतं पंथानं सुगं सुखेन गम्यम् किंच नोस्माकं
अजरं जंगमत्वं नित्यं योग्य शं सि आयुरिति प्रणीहि विन्तयदेहीत्यर्थः न केवलमेवं नोऽस्माकं तं स्विष्टं शोभनमीप्सितं नवान्न प्राशनजनितमारोग्यं
हविश्वदेवेभ्योऽस्मद्दत्तेनचान्नरूपहविषा विश्वा विश्वदेवसैन्यसुखं च देवसैन्यमभिप्रीणीहि अभिसर्वतः प्रीणाहि तर्पयेत्यर्थः संस्रवप्राशने
पारस्करः अथ प्राश्नात्यग्निः प्रथमः प्राश्नात्विति मंत्रो यथा अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः शिवा अस्मभ्यमोषधीभ्यः कृणोति विश्वकर्म्मा
णिपावरो अग्निर्देवता अनुष्टुप् छन्दः । श्यामाकचरुप्राशने विनियोगः अस्यार्थः अग्निर्य्यो चिरावन्हिः प्राश्नातु प्रकर्षेण भुन्क्ता हि यस्मात् स प्रथमो राम
अये विहजानासि यथा हविः यथा दृश्यं हविस्तज्जानातीति संबंधः किंच शिवाः सुखकारीः अस्मभ्यं अस्म दर्थम ओषधीः ग्राम्याः आरण्याश्च कृ- १०३

णोतु करोतु किंभूतो याचरोऽग्निः विश्वस्य जगतो द्रष्टेत्यर्थः भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेनस्समशीमहित्वा सनो मयोभूः पितो आविश स्वसं
न्तोकेष्वेतं न्वैस्यो नविष्टपङ्क्तेऽद्रविः शिवा अस्मभ्यमोषधीः कृणोतु विश्वकर्माणि हे देवी हेत्वात्वीवयंसमशीमहि · सम्यग्विधिदृष्टेन कर्म्मणा संस्कृ
तमंजीमहि किंभूतेन त्वया · अवसेन · संवनेन · त्वयैव पाद्येयभूतेन · त्वम्यनवं वर्षशतं यावद्दयमश्नीयेत्यर्थः सत्वमस्माभिः प्राशितः सन्नोस्मान्
विशस्व प्रविश किंभूतः मयोभूः सुखरूपकरवः पितेव · यथा पिता पुत्रं सुखरूपेण प्रवितयात्वमप्यस्मानित्यर्थः किंच हे देवा इन्द्रादयो यूयं नोऽस्मान्
श्रेयः इदं नवान्नप्राशनप्रभृवमारोग्यं समनैष्ट · सम्यग्प्रापयत किंभूतान्नो भद्रान् · नवान्नप्राशनाहीन् शांतोकाय · तोकाय अपत्याय शंकत्मयांत-
न्वेशरीराय स्योनं सुखं समनैष्ट इति । नात्र प्राप्तरण इत्यस्मान्न ह्रसिसत्वात्परस्मैपदे चिद्द्विः तोकायतन्वे इति चतुर्थी चाशिष्य इति चतुर्थी सम
शीमः प्रतिप्रापयतेति · अश्नोभोजन इत्यस्माल्लिङ् · आत्मनेपदात्तमपुरुषबहुवचनम् छन्दस्य माङ्योगेपि बहुवचनादडागमः अन्नपतेत्यनेन मं
त्रेण प्राशने पारस्करः अन्नपतीयया वेति तत्र मंत्रो यथा अन्नपते अन्नस्य नो धेह्यनमीवस्य शुष्मिणः प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुःपदे अ
स्यार्थः अन्नपते अग्ने अन्नभागं नोऽस्माकं धेहि देहि किंभूतस्य · अन्नमीवस्य अमीवा व्याधिः सो यस्मिन्नास्तीति अनमीवः अव्याधिकारीत्यर्थः पुनः किं
भूतस्य शुष्मिणः शुष्मं बलं तद् यस्मिन्नस्ति · तस्य बलयुक्तस्येत्यर्थः तथा अन्नपते प्रप्रदातारं तारिषत्वान्नस्य प्रकर्षेण दातारं तारय वर्द्धय प्र प्र इति द्वितीय
प्रशब्दो पादानस्यातिशयस्य ख्यापनार्थः तथा हे अन्नपते अस्माकं भार्यापुत्रादिपरिगणना चतुःष्पदे गवादिपशवे च ऊर्जं अन्नं च धेहि · अस्मभ्यं अ
स्मदीयभार्यादिपरिजनाय आरोग्यकारि धनकारि च अन्नाद्यं देहि अन्नदातारं त्वं वर्द्धयेत्यग्नौ याञ्चा वाक्यार्थः अत्र किं देहीति कर्म्मपदस्याश्रवणात् अ
न्नस्येति षष्ठीमात्रश्रवणाच्चेति भागमिति कर्म्मपदमध्याहार्यं । यवप्राशने पारस्करः अथ यवानामेतन्तु त्वमिति तत्र मंत्रो यथा एतन्तु त्वं मधुना सं

श्रा·स· ॥ युतंयवंसरस्वत्यमधिवनाअवच्चकृषिइन्द्रआसीत् सीरपतिः शतक्रतुः कीनाशाआसन्मरुतसुदानवः। अस्यार्थः शतक्रतुर्देवराजः सीरपतिरासी
२०४ त् कर्षणस्यकारयिताभवत् कीनाशाआसन्· मरुतवायवः कर्षकाअभवन् किंभूताअदानवाः शोभनस्यभोगस्यदातारः कस्मिन्देशेसरस्वत्याअ
धिवनासरस्वत्यानद्याउपरिवनेषुयवोत्सादनेषुअस्मादेवमभूत् तस्मात्हेइन्द्रएतंउर्वर्यंयवंमधुनाम धरेणरसेनसंमिश्रंअवचकृषि· अस्यर्थंउ
नःकुरुतदनेनयवप्रशंसाकथिता अत्रअधिवनाइति अधिवनमित्यस्मिन्नर्थेसुपांसुलुगितिसप्तम्येकवचने आकारः अवचकृधातोर्थ्येउलुगन्तात्लोट्
सिप् इतिनवान्नप्राशनमंत्रव्याख्याप्रोष्यगृहोपस्थानेपारस्करः प्रोष्येतिगृहानुपतिष्ठते गृहामाविभीतेति तत्रमंत्रोयथागृहामाविभीतमावे
पध्वमूर्जंविभ्रतरामसिऊर्जंविभ्रद्वः सुमनासुमेधागृहानैमिमनसामोदमानः अस्यायमर्थः हेगृहामाविभीततनभयंकुरुत मावेपध्वंमाकंपंकुरु
त गृहाधिकारिणोममाभावात् उद्वेगआसीत् तंमाकुरुतेत्यर्थः यतः कारणादहंपतिर्वोयुष्मान्गृहान् एमिआगच्छामि किंभूतान्· अस्मा
न्· गृहान्·ऊर्जंविभ्रतः ऊर्जमन्नंविभ्रतःधारयतः अन्नादिसंयुक्तान्· अस्मान्गृहानहंगच्छामीत्यर्थः किंभूतोहं ऊर्जंविभ्रत् अन्नंधारयन्· न-
केवलमन्नमन्नमात्रंधारयन्नहमागच्छामि अपितुसुमनाः अनुद्विग्नमनाःसुमेधाः शोभनबुद्धिः मनसामोदमानः प्रमोदयुक्तःगृहमेमिआगच्छा
मि अयंवाक्यार्थः हेगृहाधनधान्यादियुक्तायूयमस्माकंमदीयाधिष्ठानात् भयआसीत् तत्त्यजत· अयमहमधिकधनधान्यादिकंलब्ध्वा अति
स्फीतहृदयःपुनरपिसमागत्यमिलितास्मि अनेनधनधान्येनचयूयंसंपूर्णाः कर्तव्याइत्यभिप्रायः येषांमध्येप्रवसन्नध्येषुसौमनसोबहुगृहानुप
ह्वयामहेनानतः येषांगृहाणांप्रविशन्प्रवासीमध्येतिस्मरति यान्गृहान्सुखहेतुतयाप्रवासीस्मरंतियेषुचगृहेषुअसौमनसोबहुप्रकारंस· राम
नोबहुनिहृत्तंभवति तान्गृहानुपह्वयामहेउपमाह्वयामः तेचगृहाआहूताः सन्तःनोस्मान्जानंतुप्रवासान्समागतान्जानंत्वित्यर्थः किंभू ॥ २०४

तान् अस्मान्जानतः अस्मिन्गृहविषयेमत्साभिः विषयानस्मानित्यर्थः उपहूताइहगावउपहूताअजावयः अथान्नस्यकीलालउपहूतोगृ
हेषुनः अस्यार्थः इहनोस्माकंगृहेषुगावः उपहूताः तथाअजावयः छागामेषाश्चहूताः आहूताः प्रवासंकृत्वासमागतैरस्माभिरजोवत्साअ
जाप्रभृतयोऽश्वालप्रतिसंधार्यआहूताइत्यर्थः अथोनन्तरमन्नस्यकीलालोरसउपहूतः आहूतः गोवत्सअजादीनामाह्वानन्तरंगृहावस्थि
तमिष्टान्नपानादिकमुपभोगायास्माभिराहूतमितियावत् गृहप्रवेशानेपारस्करः क्षेमायेतिप्रविशति क्षेमायवः शान्त्यैप्रपद्ये शिवंशग्मं
शंयोः अस्यार्थः हेगृहावोयुष्मान्क्षेमायअविद्याशायिप्रपद्येप्रविशामिन।केवलंक्षेमाय अपिचशान्त्यैसर्वोपद्रवाद्यर्थंच तथाशंयोःसु-
खकाम्येनः शंशिवशर्म्मप्रद्यस्वेति पुत्रदर्शनेपारस्करः पुत्रंदृष्ट्वाजपतिअंगादंगादिति मंत्रोयथा अंगादंगात्संभवसिहृदयादधिजायसेआत्मा
वैपुत्रनामासिसंजीवशरदः शतम् अस्यार्थः हेपुत्रयस्त्वं·अंगादंगात् शिरोग्रीवादिसंभवसिसमुत्पन्नोभवसिहृदयादधिजायसेहृदयात्सर्व
गात्रेभ्यः श्रेष्ठादधिजायसे उत्पन्नोभवसि यस्त्वमात्मैवपुत्रः मासित्वमेवंभूतः शरदः शतंवर्षशतंजीवपुत्रमूर्द्धाभिघ्राणेपारस्करः अस्य
मूर्द्धानमवजिघ्रतिप्रजापतिस्त्वाहिंकरेणावत्वाघ्राहिंकारेणेति मंत्रोयथा प्रजापतेष्ट्वा हिंकारेणावजिघ्रामिसहस्रायुषासौचशरदः शतंहेपु
त्रत्वांत्वांप्रजापतिब्रह्मणा हिंकारेणमंगलाभिधायकहिंकारेणावजिघ्रामिचुम्बयामिसत्वमयाचुम्बितः सन्· सहस्रायुषानेनकसंख्या–शा
रदःशतंजीवेत्यापरसावाक्यार्थः गवांत्वाहिंकारेणावजिघ्रामिसहस्रायुषा असौशरदःशतं अस्यार्थः असौहेअमुकनामकपुत्रकत्वात्वां अभि
जिघ्रामिमूर्द्धिचुम्बामि·अहंपितेत्यर्थात् तेनगवांहिंकारेणयथागावोवत्सागताः स्वपुत्रकानाभिमुख्येनाभिजिघ्रन्त्येवमहमपिपितात्वामभि-
जिघ्रामि किंच सहस्रायुषाविस्तारेणायुषाशरदः·शतंजीवेतिपुत्रंदक्षिणाकर्णजपेपारस्करः दक्षिणेस्यकर्णेजपति· अस्मेप्रयन्धीति मंत्रोय-

आ·स· था अस्मेप्रयन्धिमघवन्नृजीषन्निंद्रारायो विश्व-रस्य भूरेः अस्मेशतंशरदोजीवसेधा अस्मेवीरांश्छश्वतइन्द्रशिप्रिन् अस्यार्थः हेमघवन्
१०५ हेइन्द्रकिंभूतऋजीषन्·य–युक्तानामशेषभागिन् अस्मैपुत्रायरायः––इयंतथाभूरेः भूरिंसुदर्शंप्रयन्धिप्रयच्छकिंभूतस्यभूरेः विश्ववारस्य
विश्वैर्वरेनाकांक्षितस्य अस्मैपुत्रायशरदःशतंप्रयन्धि·शतवर्षाण्यायुः प्रयच्छतथाविश्वदेवाःसर्वेदेवाःयावदेववेदज्ञानंपरिकल्पयेसर्यः तथाहेइ-
न्द्रकिंभूततोशिप्रिन् जलयुक्तअस्मैपुत्रायवीरान्वीर्य्ययुक्तसन्तन्निंप्रयच्छकिंभूतान्शश्वतःशाश्वतान् निभृतभूतान्दीर्घायुषइतियावत् हेमघव
न्हेइन्द्रेतिसंबोधनद्वयमादरातिशयार्थम्· अस्मइतिअस्मेइतिच्छन्दसत्वात प्रयन्धितियमउपरमेलोटसिप्·बहुलंछन्दसीतिसिपोलुक्ऋजी
षन्निति ऋजीषंसोमशेषकल्मम् समुद्रेतइति ऋजीषंगर्भस्रावयतीतिकात्यायनवचनात् भायमितिभासेरायइनिषष्ठीद्वितीयैकवचनेनविश्वेप्रिय·
तइतिविष्वरायः छान्दसोपरंभूरेरितिद्वितीयार्थेषष्ठीवेदानितिभासेवेदाइतिसुपांसुपोभवन्तीतिवचनात् निरावसलिलेपिप्रशिप्राश्याच्छुरिदंतु
रंइत्यभिधानम् पुत्रस्यवाःमकरणंजपेपारस्करःसव्येकरणेजपतिइन्द्रश्रेष्ठामीतिमंत्रोयथा इन्द्रश्रेष्ठानिद्रविणानिधेहिचित्तंदक्षस्यसुभगत्वम·
स्मे·पोषंरयीणामरिष्टिंतनूनांस्वात्मानंवाचःसुदिनत्वमन्हान्अस्यार्थः हेइन्द्रश्रेष्ठानिद्रविणानिउत्तमानिधनानिचित्तंचैतन्तंचैतन्यंदक्षस्य–सु-
भगत्वंसकलजनप्रियत्वं·एतत्सकलजनस्यास्मेपुत्रायधेहिधारय·किंचपोषंरयीणांधनानांपुष्टिं·अरिष्टिंतनूनां·अंगानामारोग्यंस्वात्मानुंवाचः वचन
स्यस्वादियानंमाधुर्य्यमि सुदिनत्ववन्हांदिवसानांशुभत्वम् अस्मेपुत्रायधेहीतिपूर्वक्रियासंबंधःदक्षस्येतिकर्म्मणिषष्ठीविनाभावप्रत्ययेनदक्षशब्दे
दक्षत्वमभिधीयते इत्यावसथ्यिकमहाधर्म्माधिकृतश्रीहलायुधकृतौब्राह्मणसर्वस्वेअग्न्याधानादिसमाप्तम्॥ शुभमस्तु॥ श्रीसम्वत १९४१
आषाढ शुक्ल ६ रविवार॥